ज्वरार्ते च क्षुधार्ते च तपःश्रान्ते भयान्विते ।
[1]विस्मये चावहित्थे च तथौत्सुक्यसमन्विते ॥ ३४ ॥
शृङ्गारे चैव शोके च स्वच्छन्दगमने तथा ।
[2]गतिः स्थितलया कार्याधिकलान्तरपातिता[3] ॥ ३५ ॥

---

चतुष्कलादप्याधिक्यमस्तीति दर्शयति—ज्वरार्त इत्यादि ।

भयेन योऽन्वितो जातोरुस्तम्भः, अन्यथा ह्यस्य त्वरिततरा गतिर्वक्ष्यते । विस्मय इति तत्कृतस्तम्भ इत्यर्थः । अवहित्थ इति कृतकधैर्याणाम्; कृतकं हि नः सुश्लिष्टं कर्तुं पार्यत इति । तत्राधिक्यमेव भवति । तत एव हि कुशलाः कृतकतां विदुः ॥ ३४ ॥

अभिनव—अधम पात्र में अर्धकला होती है, इससे भरतमुनि ने कला के चतुर्थ भाग को सूचित किया है । लक्षण के ज्ञाता विद्वान् द्रुत लय को वृत्ताकार मानते हैं । जिस प्रकार उक्त नीति से पञ्चमांश है । श्वासादि से विश्रान्ति के साथ यह चार प्रकार का होता है और यही द्रुत लय युक्त है ॥ ३३ ॥

अभिनव—अब चतुष्कल से भी अधिक का प्रयोग होता है इस बात को दिखाते हैं—'ज्वरार्त्त इत्यादि ।

**अनुवाद—ज्वर से पीड़ित, भूख से पीड़ित, तप से श्रान्त, भय से युक्त, विस्मित अर्थात् विस्मय से युक्त, अवहित्थ और औत्सुक्य से समन्वित, शृङ्गार और शोक की अवस्था में, स्वच्छन्द गमन में चार कला के प्रमाण की गति से अधिक विलम्बित लय में गति-प्रचार करना चातिए । भाव यह कि चार कलाओं की गतियों की अपेक्षा अधिक कलाओं का प्रयोग स्थिर विलम्बित लय के साथ करना चाहिए ॥ ३४-३५ ॥**

अभिनव—भय से जो अन्वित ( युक्त ) होता है वह 'ऊरुस्तम्भ' हो जाता है । अन्यथा अर्थात् ऊरुस्तम्भ न होने पर इसकी अतिशीघ्र गति को कहेंगे । 'विस्मय' के कारण जिसका 'ऊरुस्तम्भ' हो गया है । 'अवहित्थ' का अर्थ है कृत्रिम ( बनावटी ) धैर्य । कृत्रिमता हम लोगों को सुश्लिष्ट करने में समर्थ है । वहाँ आधिक्य ही होता है । उसी से कुशल लोग कृत्रिमता को जानते हैं ॥ ३४ ॥

---

१. क-ङ. विक्षते ।
२. ख. पुस्तके श्लोकार्धोऽयं नास्ति ।
३. ग. विफलान्तरपातिता ।

अत्यादरवदौत्सुक्येन सम्यगन्वितो य एव शृङ्गारभेदस्तत्रैव विप्रलम्भ इति यावत् । स्वच्छन्दगमन इति कार्येण विना क्रीडाचङ्क्रमणे[1] । अधिकले इत्यधि-शब्दोऽधिकार्थः । अधिकलामिति केचित् । आधिक्यं प्रकर्षेण चतुःस्वरूपेण संख्या चैतत्[2] । प्लुतस्य विरामस्य च स्वरूपाधिक्ये तालबोधः संख्याधिक्येन षडष्टकलादेर्वि-कृष्टमधिकृतं कलान्तरं परिमाणं यथा तथाभूतः पादपातो यस्याम् । अत एवैतत्पा-दपतनप्रसङ्गविचारणाद्वक्ष्यति—

[3]षट्कलन्तु न कर्तव्यं तथाष्टकलमेव च ।
पादस्य पतनं तज्ज्ञैः खेदनं तद्भवेत् स्त्रियाः ॥ १२/१८४-१८५ ॥

अर्धैकद्विचतुष्कलमिति वचसा षडष्टकलयोर्निषेधेन च त्रिकलपञ्चकलादी-नामभावं सूचयति । विषमाणां सपरिमाणोत्क्षेपणनिपातनायोगात्तालविदां हि साम्यमुपनिषद्भूतं तच्चात्र स्फुटयति ॥ ३५ ॥

---

अत्यन्त आदर से विशिष्ट औत्सुक्य से युक्त शृङ्गार का जो विप्रलम्भ नामक भेद है उसमें यह गति होती है । 'स्वच्छन्दगमन' का तात्पर्य है बिना किसी लक्ष्य या कार्य के क्रीड़ा करते हुए चलना ( क्रीड़ा के साथ चङ्क्रमण करना ) । 'अधिकलान्तरपपातिता' में 'अधि' शब्द आधिक्य अर्थ का सूचक है । कुछ लोग 'अधिकला' पाठ मानते हैं । **'आधिक्य'**—चार कला के प्रमाण की गति से स्थितलय में पादप्रक्षेप । करना आधिक्य हैं, प्रकर्ष है । यह प्लुत जैसे स्वर या विराम के आधिक्य से ताल का बोधक होता है । छः, आठ कलाओं की संख्या के आधिक्य से अभिनय के विकृष्ट रङ्गमञ्च का बोध होता है । पादपात का जिस गति में जैसा कलान्तर का परिमाण बतलाया गया है वैसा ही पादपात होना चाहिए । इसलिए इसे पाद-पातन के प्रसङ्ग के विचार में आगे कहेंगे—

"अभिनय-विशेषज्ञों को स्त्रियों से छः कलाओं और आठ कलाओं तक के पाद-पात ( पाद का पतन ) नहीं कराना चाहिए, क्योंकि ऐसा कराने में स्त्रियों को ( थकावट ) होगी ।"

**अभिनव**—'अर्धैकद्विचतुष्कलम्' इस वचन ( वाक्य ) से और छः एवं आठ कलाओं को पाद-पातन के निषेध से त्रिकल और पञ्चकल पादपात का अभाव सूचित होता है । विषम संख्या के किसी विशेष परिमाण में पाद का उत्क्षेपण और निपातन का योग नहीं बनता है । अतः आचार्यगण यहाँ सम संख्या को ही प्रमाणभूत मानते हैं उसी को यहाँ स्फुट करते हैं ॥ ३५ ॥

---

१. क. क्रीडाचङ्क्रमेण ।
२. क. चेतनप्लुतस्य । ख. चैतदप्लुतस्य ।
३. क. षट्कलस्तु ।

[1]पुनश्चिन्तान्विते चैव गतिः कार्या चतुष्कला ।
[2]अस्वस्थकामिते चैव भये वित्रासिते तथा ॥ ३६ ॥
आवेगे चैव हर्षे च [3]कार्यं यच्च त्वरान्वितम्[4] ।
अनिष्टश्रवणे चैव क्षेपे[5] चाद्भुतदर्शने ॥ ३७ ॥
अपि चात्ययिके कार्ये [6]दुःखिते शत्रुमार्गणे ।
[7]अपराद्धानुसरणे श्वापदानुगतौ[8] तथा ॥ ३८ ॥
[9]एतेष्वेवं गतिः प्राज्ञो [10]विकलां सम्प्रयोजयेत् ।

---

एवमेतेषु षट्कलादप्यधिकं मानं तथा च तपःशान्तानां परिक्रमे यत्र उल्लसनाख्यो लयः कोहलादिभिरुक्तो यस्यातिविलम्बितः कालावधिः ।

एवं कलाधिक्यमभिधाय न्यूनत्वमप्यस्तीत्याह—अस्वस्थकामित इत्यादि ।

---

अभिनव—इस प्रकार इन प्रकरणों में षट्कल में भी अधिक प्रमाण तथा और भी तपःश्रान्तों के परिक्रम में जो उल्लसन नामक लय को कोहल आदि आचार्यो ने कहा है जिसकी कालावधि अतिविलम्बित है समझना चाहिए ।

**अभिनव**—इस प्रकार कलाधिक्य को कहकर अब कलाओं में न्यूनता भी होती है इस बात को कहते हैं—'अस्वस्थकामित इत्यादि ।

**अनुवाद—फिर चिन्ता से युक्त दशा में गति चतुष्कल अर्थात् चार कला की होनी चाहिए । अस्वस्थकामित अर्थात् प्रच्छन्न कामुक में, भय में, वित्रासन में, आवेग में, हर्ष में, शीघ्रता युक्त कार्य में, अनिष्ट बात के में, श्रवणआक्षेप ( निन्दा ) में या क्षेपण में, अद्भुत वस्तु के दर्शन में, कष्ट कर कार्य में; दुःख में, शत्रु के खोजने में, अपराधी के पकड़ने में, श्वापद अर्थात् व्याघ्रादि हिंसक पशुओं के अनुसरण में विद्वान् कला-रहित ( विकल ) गति का प्रयोग करें ॥ ३६-३९ ॥**

---

१. ग. पुस्तके श्लोकार्धोऽयं नास्ति ।  २. ख. ग. अस्वस्थे कामिते ।
३. ग. कार्यं ।  ४. क-ड. यच्च तुरान्बिते ।
५. ख. कोपेर्ष्याद्भुतदर्शने ।
६. ग. तथा चैवारिमार्गणे ।
७. ख. ग. अपराध्वानुसरणे । क-न. अपराद्धानुकरणे ।
क-प. अवरुद्धानुकरणे ।
८. ख. ग. श्वापदानुगते ।  ९. ग. एतेष्वेव ।  १०. ख. ग. ङ. द्विकलां ।

अस्वस्थे प्रच्छन्नकामिते हि त्वरातिशयः। अनिष्टं यदा बान्धवादेः श्रुतं तदा—[1]तदन्तिकं द्रुतगमनं, अद्भुतदर्शनविषये यदा क्षेपः प्रक्षिप्तता, पुनरेतन्न दुष्यत इति। यन्नाभिरुचितमवश्यकर्तव्यं च तत्त्वरया क्रियते, त्वरयान्वितं सुकार्यमभिरुचितमेवेति विशेषः त्वरान्वितमिति। इयता यद्यपि सर्वं लभ्यते तथापि कविनटव्युत्पादनाय प्रपञ्चः॥ ३६-३७॥

अत्ययोऽतिक्रमणं शीघ्रसम्पादनं प्रयोजनमस्य। अपराधोऽभिनेयः शत्रोरन्य एव, यद्वा यस्यापराधः कृतो गुर्वादिस्ततश्च रुषा गतः सोऽपराद्धः, तथापि एतेष्विति एवंप्रकारेष्वन्येषु मदादिष्वपीत्यर्थः। विकलामिति विकलः कलापरिमाणो यस्याः सा कला अर्धकलारहिता तुर्या यद्यपि, तथापि नादरणीया, यतः त्रिभागषड्भागादिरपि तत्र भवति। अत एव संभ्रमोत्पातरोषेषु चतुरर्धकलमित्यनेन पौनरुक्त्यं तस्याविषयत्वादस्य तु विषयभागविषयत्वात्।

**अभिनव**—अस्वस्थ का अर्थ है प्रच्छन्न और कामित का अर्थ है कामुक। जब बान्धव आदि का अनिष्ट श्रवण हो तो उसके पास शीघ्रता से जाना। अद्भुत वस्तु के दर्शन में जब क्षेप (प्रक्षिप्तता) हो या उतावलापन हो तो त्वरा (शीघ्रता) गति का दोष नहीं होता। जहाँ अभिरुचि नहीं है किन्तु अवश्य कर्त्तव्य (कार्य) को शीघ्रता से किया जाता है। शीघ्रता से किया हुआ सुन्दर कार्य अभिरुचित ही है यह विशेष है। 'यच्च त्वरान्वितम्' अर्थात् जो शीघ्रता से करणीय है, वहाँ शीघ्रता ( त्वरा ) करनी चाहिए। इतने से यद्यपि सब कुछ मिल जाता है, फिर भी कवियों एवं नटों को व्युत्पन्न करने के लिए यह प्रपञ्च किया गया है।

'अत्यय' का अर्थ है अतिक्रमण अर्थात् शीघ्रता से सम्पादन ही प्रयोजन है जिसका। अपराध अभिनेय है किन्तु वह शत्रुकृत अपराध से भिन्न है अथवा जिसका अपराध किया है उस गुरु आदि से रुष्ट होकर जो चला गया है, वह अपराद्ध है। फिर भी इस प्रकार के मदादि में भी, यह 'एतेष' का अर्थ है। 'विकलाम्' अर्थात् विकल है कला का परिमाण जिसका, ऐसी अर्धकला रहित चतुर्थी कला यद्यपि होती है, तथापि वह आदरणीय नहीं है, क्योंकि उसमें तीसरा एवं छठा हिस्सा भी होता है। इसलिए सम्भ्रम, उत्पात और रोष ( क्रोध ) में चतुरर्धकल कहा है। इससे पुनरुक्ति है, किन्तु यह उसका ( पुनरुक्ति का ) विषय नहीं है इसका विषय तो विषम विभाग है।

१. क. तदन्तिकं।

**उत्तमानां गतिर्या तु न तां मध्येषु योजयेत् ॥ ३९ ॥**
**या गतिर्मध्यमानां तु न तां नीचेषु योजयेत् ।**

तथाहि मत्तगतौ शेखरकस्य खण्डकप्रयोगे हि "गहिदुं धिं" इत्येवं रूपे मात्रा तृतीये, तृतीयस्य नामात्र धं धग् इत्येकः पातः, त्सुक इति द्वितीयो, धि इति तृतीयो, न चैषां साम्यम् । एतेन च कलानां साम्यं न्यूनाधिकतानिरूपणेन समविषमकलाभागभङ्गाभिधानेन गुरुलघुद्रुतप्लुतानां स्वीकारात्तद्वैचित्र्यम् । इयमपि [1] भङ्गोपभङ्गविभङ्गप्रकारप्रस्तारसंगृहीता लक्ष्यसिद्धा भङ्गलयव्यवस्था प्रतिपाद्याक्षरतदर्थादिरूपा च धाराबन्धादिविषयाधातमार्गशब्देन प्रसिद्धा व्यवस्था स्फुटमेव दर्शिता ।

माभूदेवं कालप्रमाण (कलापरिमाण ?) नियमाभिधानं गजस्नानीभूतमित्याह–उत्तमानां गतिर्या त्विति ।

जैसे 'गहि दं धि' इस प्रकार के खण्डकाव्य के प्रयोग में शेखरक के मत्तगति में तीसरे 'दुं' अक्षर में मात्रा है। इस प्रसङ्ग में यहाँ तृतीय अक्षर का 'धं धग्' यह एक पात है। 'त्सुक' यह द्वितीय पात है, 'धिं' यह तृतीय पात है। किन्तु इसमें समानता नहीं है। इससे कलाओं के साम्यता एवं न्यूनाधिकता के निरूपण एवं सम, विषम कलाओं के भागों में भङ्गादि के अभिधान से तथा गुरु, लघु एवं प्लुतों को द्रुत मान लेने से कलाओं में वैचित्र्य है। यह भङ्ग, विभङ्ग उपभङ्ग के प्रकारों के प्रस्तार से संगृहीत लक्ष्यसिद्ध लय का व्यवस्था और जो धाराबन्धादि विषय घातमार्ग शब्द से प्रसिद्ध प्रतिपाद्य अक्षर और तत्प्रतिपाद्य अर्थ रूप व्यवस्था उसे स्पष्ट रूप से दिखा दिया है ॥ ३६-३९ ॥

**अभिनव**—कलाओं के परिमाण के विषय में नियम का कथन हाथी के स्नान के समान न हो जाय, इस आशय से कहते हैं—उत्तमानामित्यादि ।

**अनुवाद—उत्तम पुरुषों की जो गति बताई गई है उसका प्रयोग मध्यम पात्रों में न करे और मध्यम पात्रों की जो गति है उसका प्रयोग नीच पात्रों में नहीं करना चाहिए ॥ ४० ॥**

१. क. भङ्गा द्वादश—चञ्चत्पुटः चाचपुटः, षट्पितापुत्रका, संपक्वेष्टका, हेला, त्रिगता, नर्कुटः नकुंटी, खञ्जकः, खञ्जिका, आक्रोडिता, विलम्बिता च । उपभङ्गाः, षट्—कुटिलाः, आक्षिप्तिकाः, त्र्यस्रा, चतुरस्रा, चटुला, संयुक्तिका च । विभङ्गाः—विशेषः, माला, सुभद्रं संगतं च । लयतालानां भङ्गप्रस्तारद्वारेण यद्यवधिर्न स्यात्, तेषां ध्रुवातालेतिप्रसिद्धाश्चत्वारिंशत् कोहलोक्ता गतिपरिक्रमे विनियुज्यन्ते । ध्रुवातालानामुदाहरणानि विक्रमोर्वश्यादौ द्रष्टव्यानि । तुम्बुरुदत्तानि तालाध्यायमुद्रणावसरे सूचयिष्यायः ।

गतिः श्रृङ्गारिणी कार्या [1]स्वस्थकामितसम्भवा ॥ ४० ॥
[2]दूती दर्शितमार्गस्तु प्रविशेद्रङ्गमण्डलम् ।
[3]सूचया चाप्यभिनयं कुर्यादर्थसमाश्रयम्[4] ॥ ४१ ॥

---

**तुरेवार्थे [5] अन्यक्रमेणैवेत्यर्थः । एतदुक्तं भवति अनियमेन निदर्शितेन नियमो विप्लुतः, तथापि कलाधिक्ये षट्कलतोत्तमस्य, तत्र मध्यमस्य चतुष्कलता, अधमस्य द्विकलता । यत्र न्यूनकलमुक्तं तत्राप्युत्तमस्यैका कला, मध्यमस्यार्धकला, अधमस्य कलातुर्यभाग इति कथं विप्लवः ॥ ३८-३९ ॥**

**एवं प्रकृतिभेदेन गतिमभिधाय रसविषयेण दर्शयितुं प्रथमं पुरुषार्थोपयोगिरसविषयां निरूपयन् प्राधान्याच्च श्रृङ्गारे तावदाह—गतिः श्रृङ्गारिणीत्यादि ।**

---

**अभिनव—**यहाँ पर 'तु' शब्द 'एव' अर्थ में है। नियम के क्रम में भेद है, यह अर्थ भी इससे प्राप्त होता है। यह कहा गया है कि अभिनय के निदर्शन से ( दिखा देने से ) नियम का विलोप हो जाता है। फिर भी कलाओं की अधिकता में उत्तम पात्रों की षटकलता, मध्यम पात्रों की चतुष्कलता और अधम पात्रों की द्विकलता सिद्ध है। और जहाँ न्यूनकला का प्रतिपादन है वहाँ उत्तम पात्रों की एक कला, मध्यम पात्रों की अर्धकला और अधम पात्रों की चतुर्थांश कला होती है, अतः विप्लव कैसे हो सकता है ? ॥ ४० ॥

**अभिनव**—इस प्रकार प्रकृति-भेद से गति का अभिधान करके रस के विषय में गति को दिखलाने के लिए पहिले पुरुषार्थ के उपयोगी रसों के विषय का निरूपण करते हुए रसों में श्रृङ्गार के प्रधान होने से उसको गति को कहते हैं—'गतिः श्रृङ्गारिणी' इत्यादि ।

## १. श्रृङ्गार रस में गति

**अनुवाद—स्वस्थ अर्थात् अप्रच्छन्न कामुक की गति श्रृङ्गारिणी होनी चाहिए। श्रृङ्गारी पात्र दूती के द्वारा दर्शित ( दिखाये गये ) मार्ग से रङ्गमञ्च पर प्रवेश करे। वह किसी अर्थ-विशेष का आश्रय लेकर सूचा चारी के द्वारा अभिनय करे ॥ ४०-४१ ॥**

---

१. ख. ग. स्वच्छकामितसम्भवा ।
२. क. दूतीदर्शनमार्गस्तु । क-प. दूतीदर्शनमार्गेण ।
३. ख. सूचयञ्चाप्यभिनयं । ग. सूचयन्वाभिनयनं । क-प. सूचया चाभिगमनं ।
४. क-न. कुर्यादर्थस्य संश्रयम् ।
५. क. अन्यक्रममनेनैवेत्यर्थः ।

[1]हृद्यैर्गन्धैस्तथा वस्त्रैरलङ्कारैश्च भूषितः ।
नानापुष्पसुगन्धाभिर्मालाभिः समलंकृतः ॥ ४२ ॥
गच्छेत् सललितैः पादैरतिक्रान्तस्थितैस्तदा[2] ।
तथा सौष्ठवसंयुक्तैर्लयतालवशानुगैः[3] ॥ ४३ ॥

---

स्वस्थकामितमप्रच्छन्नम् । अर्थसमाश्रये सिद्धे सूचाया पुनवर्चनं हृद्यस्य पदार्थस्य पर्यालोचनं सातिशयं चमत्कारकारीति निरूपयितुं तत्र चर्वितचर्वणवत्पुनः पुनः कञ्चिदपि भागमत्यजन् सूचां शृंगारे कुर्यादिति दर्शयति ।

युद्धवीरादौ हि प्रधानानुसंधानमेवोचितं तन्मध्यपतितानां कार्यान्तराणामपर्यालोचनीयत्वात्, पर्यालोचने आचार्यं मातुलान् भ्रातृन् स्वजनमित्याद्यापत्तेः, येऽपि चान्तरमार्गा इत्यत्रत्यान् नृत्त सूच्यान् परिहर्तुमित्यर्थसमाश्रयणमित्यसत् ॥४०-४१॥

साऽपि हि निरर्थिका सूचैव हि कथं स्यात् ? सूचतोऽपि चान्तरङ्गमस्य प्रकृतां गतिमाह—नानेति । शोभनो गन्धः सुगन्धः । नानापुष्पैः सह सुगन्धः । अत्र समासान्ताभावः । सललितैः सविलासैः । सौष्ठवेनाङ्गचातुरश्र्येण युक्तः, लयो विलम्बितादि, तालं चतुरश्रादि, भूयः पुनः समान्येन उक्ताप्युत्तमगतिः पुनर्विशेषतया निरूप्यत इति भावः ॥ ४२-४३ ॥

---

**अभिनव**--स्वस्थकामित का अर्थ है अप्रच्छन्न कामुक । अर्थ के समाश्रयण से सूचा के समाश्रयण की सिद्धि हो जाती है, फिर सूचा का पुनः कथन आकर्षक पदार्थ का पर्यालोचन अत्यन्त चमत्कारी होता है, इसका निरूपण करने के लिए तथा चर्वित-चर्वण की तरह बार-बार निरूपण में किसी भाग को न छोड़ते हुए शृङ्गार में सूचा चारी का प्रयोग करना चाहिए, यह दिखाते हैं ।

युद्ध-वीर आदि में प्रधान का अनुसन्धान करना ही उचित है; क्योंकि उनके बीच में आने वाले अन्य कार्य अपर्यालोचनीय है । पर्यालोचन में तो गीता में कथित 'आचार्य, मामा, भाई, स्वजन आदि का कैसे मारूँगा' इत्यादि कथन आपत्तिजनक हो जायेगा और जो 'आन्तरमार्ग है' वहाँ पर नृत्त में सूच्य ( सूचनीय ) वस्तु का परिहार करने के लिए अर्थ समाश्रयण करना चाहिए, यह कथन असत् है ॥ ४०-४१ ॥

**अनुवाद**—हृद्य गन्ध, आकर्षक वस्त्र, और अलङ्कारों से सुशोभित तथा नाना प्रकार के पुष्प, सुगन्धित पदार्थ तथा माला आदि से अलङ्कृत, सौष्ठव से युक्त तथा ताल, लय, कला के अनुसार सुललित अतिक्रान्त चारी में स्थित पैरों से चलें ॥ ४२-४३ ॥

---

१. क-ग. हृद्यैवस्त्रैस्तथा गन्धैधूपैश्चूर्णैश्च भूषितः ।
२. ख. अतिक्रान्तोत्थितस्तथा । ३ ख. समन्वितैः ।

[1]पादयोरनुगौ हस्तौ नित्यं कार्यौ प्रयोक्तृभिः ।
[2]उत्क्षिप्य हस्तं पातेन पादयोश्च विपर्ययात् ॥ ४४ ॥

प्रच्छन्नकामिते चैव गतिं भूयो निबोधत ।
[3]विसर्जितजनः त्रस्तस्तथा दूतीसहायवान् ॥ ४५ ॥

निर्वाणदीपो नात्यर्थं भूषणैश्च विभूषितः ।
[4]वेलासदृशवस्त्रैश्च सह[5] दूत्या शनैस्तथा ॥ ४६ ॥

व्रजेत् प्रच्छन्नकामस्तु[6] पादैर्निश्शब्दमन्दगैः ।
[7]शब्दशङ्क्युत्सुकश्च स्यादवलोकनतत्परः ॥ ४७ ॥

वेपमानशरीरश्च शंकितः प्रस्खलन् मुहुः ।

---

**अभिनव**—क्योंकि वह निरर्थक है तो सूचा ही कैसे कहलायेगी ? अतः सूचा से अन्तरङ्ग इसकी प्रकृत गति को कहते हैं—नानेति । शोभन गन्ध सुगन्ध है । नाना प्रकार के पुष्पों के कारण सुगन्धित मालाएँ । यहाँ समासान्त 'इत' ( इतच् ) प्रत्यय का अभाव है । सललित का अर्थ है सविलास । सौष्ठव अङ्ग-चातुरस्र्य से युक्त लय विलम्बित आदि । ताल का अर्थ है चतुरस्र आदि ताल । सामान्य रूप से उत्तमों की गति यद्यपि कह दी गई है तथापि विशेष रूप से कहते हैं ॥ ४२-४३ ॥

**अनुवाद—नाट्य प्रयोक्ताओं को पादों के अनुसार हाथों का प्रयोग करना चाहिए और एक हाथ को ऊपर उठाकर विपरीत दिशा में पैरों के पात से अभिनय करे ॥ ४४ ॥**

---

१. क. ग. पादयोरनुगौ चापि हस्तौ कार्यौ प्रयोक्तृभिः ।
२. ख. उत्क्षिप्तः सह पादेन पतनेन विपर्ययः ।
३. ख. विसर्जितजनस्तत्र तथा दूतीसहायवान् ।
क-ज. विसर्जितगतिस्तत्र तथा दूतसहायवान्
४. ख. वेलासदृशवस्त्रश्च ।
५. क-ज. तथा दूत्या सहायवान् ।
६. क. नृत्तसूचाम् ।
६. ख. प्रच्छन्नकामैस्तु ।
७. क. शब्दशङ्क्युत्सुकश्च ।

प्रच्छन्नं कृत्वा कामितं यत्र शृङ्गारे सागरिकादाविव वत्सराजादेः तदन्यत्र सीतादाविव पौलस्त्यप्रभृतेस्तु । निर्वाणदीपः । वेलातुल्यवस्त्रः इति । तथाहि चन्द्रालोके सितवस्त्रागुण्ठितो घनसारपरागपुञ्जमञ्जुगात्रो मुक्ताप्रायप्रचुराभरणो वस्त्राद्युपलक्षणम् ॥ ४५-४६ ॥

प्रच्छन्नकामस्तु । एवंविधकामिविषयमेव [1]सुभद्राभिधानं ध्रुवातालमाहुः कोहलाद्याः । यस्य हि प्रस्तारो द्रुतलघुमिश्रः । शब्दशङ्कीत्यादिना खण्डितां कलां सूचयन् मिश्रप्रयोगां गतिमत्राह । उत्सुक इत्यादिना कार्यः । वेपमानदेहः प्रस्खलन्नित्यादिना कलातुर्यांशात् ॥ ४७ ॥

अनुवाद—अब प्रच्छन्न कामुक की गति को फिर से समझिये। प्रच्छन्न कामी सहायकों को लौटाकर दूती के साथ चले। वह दीपक को बुझा दे और शरीर को अलङ्कारों से अधिक विभूषित न करे। समय के अनुसार वस्त्र धारण कर प्रच्छन्न कामुक दूती के साथ बिना आहट किये शब्द (आहट) की शङ्का से उत्सुकता से इधर-उधर देखते हुए काँपते हुए शरीर से शङ्कित लड़खड़ाते हुए पैरों से मन्दगति से गमन करें ॥ ४५-४८ ॥

अभिनव—प्रच्छन्न रूप से अर्थात् छिपकर कामिनी से सम्बन्ध हो जिस शृङ्गार में। जैसे सागरिका से वत्सराज का। उससे भिन्न अप्रच्छन्न कामुक जैसे सीता आदि में पौलस्त्य (रावण) आदि का सम्बन्ध। 'निर्वाणदीपः' का अर्थ है दीपक को बुझा देना। 'वेलातुल्यवस्त्रः' का अभिप्राय है कि चन्द्रमा के प्रकाश में सफेद वस्त्रों को धारण करने वाला कपूर से मिश्रित परागपुञ्ज से लिप्त शरीर वाला, मोती की माला (आभूषण) को धारण करने वाला। यहाँ पर वस्त्रादि आभूषण आदि का उपलक्षण है अर्थात् वस्त्रादि से आभूषणादि का भी ग्रहण होता है ॥ ४५-४६ ॥

इस प्रकार के अर्थात् प्रच्छन्न कामी के विषय में कोहल आदि आचार्यों ने सुभद्रा नामक ताल का विधान बताया है। उसका प्रस्तार द्रुत एवं लघु से मिश्रित है। शब्दशङ्की इत्यादि के द्वारा खण्डित कला को सूचित करते हुए मिश्रित प्रयोग वाली गति को कहते हैं। 'उत्सुक' इत्यादि के द्वारा कार्य में उत्कण्ठा सूचित होती है 'वेपमानदेह' का अर्थ है काँपते हुए शरीर वाला। 'प्रस्खलन्' इत्यादि के द्वारा कला से चतुर्थांश का संकेत है ॥ ४७-४८ ॥

१. ख. सुभद्रमित्युपभङ्गविशेषः। तल्लक्षणं तु कोहलमते—

नवमः पञ्चमश्चैव षष्ठः पुनर्गिहेष्यते।
शेषास्तु गुरवः सप्त सुभद्रं रौद्रवीरयोः ॥
त्रिमात्रान्ते प्रभावत्यां ठक्करागस्थ भाषया ।
इति त्रिमात्रान्तविरामं प्रभावतीनामकद्विपदीच्छन्दः प्रयुक्तं च सुभद्रम् ।

रसे रौद्रे तु वक्ष्यामि दैत्यरक्षोगणान् प्रति ॥ ४८ ॥
एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमाः ।
नेपथ्यरौद्रो विज्ञेयस्त्वङ्गरौद्रस्तथैव च ॥ ४९ ॥
तथा [1]स्वभावजश्चैव त्रिधा रौद्रः प्रकल्पितः[2] ।

विप्रलम्भे तु शृङ्गारिण्येव करुणव्यामिश्रा गतिर्व्यभिचारिसंवादिन्यभिप्रेत्य पृथङ्नोक्ता । एवं विषयाभिलाषप्राणे शृङ्गारेऽभिधाय तद्रूप एव रौद्रे गतिं निरूपयति—रौद्रे रसे त्विति ।

दैत्यादिप्रयुक्तं यदुक्तं तत्केनाशयेनेति शङ्काशमनायाह—एक एवेति । ननु किं तेषां क्रोधेन विनापि रौद्रता? ओमिति ब्रूमः । कथमिति चेत् रसाध्यायोक्तन्यायेनानुरसयितुमाह—नेपथ्यरौद्र इत्यादि स्वभावज इत्यन्तम् । एवमेक एव रसस्तेषामिति कथितम्, रसाध्याये चैतत्प्रपञ्चितम् ॥ ४९-५० ॥

विमर्श शृङ्गारी पात्र ललित वेशभूषा धारण कर स्वच्छन्द रूप से ताल एवं लय के आश्रित पादगति से रङ्गमञ्च पर मन्द-मन्द सञ्चरण करता है । किन्तु प्रच्छन्नकामो चन्द्र-ज्योत्स्ना में कर्पूरवासित श्वेत वस्त्र धारण कर शब्द-श्रवण मात्र से भयभीत तथा शङ्कित दृष्टि से लड़खड़ाते पैरों से शनैः शनैः गमन करता हुआ संकेत स्थान पर जाता है ॥ ४७-४८ ॥

**अभिनव—**विप्रलम्भ शृङ्गार में तो सम्भोग शृङ्गार के समान करुण से मिश्रित व्यभिचारि-सम्वादिनी शृङ्गारिणी ही गति होती है । इस अभिप्राय से सम्भोग से पृथक् गति को नहीं कहा है । इस विषय की अभिलाषा रूप वाले शृङ्गार रस में गति को कहकर रसत्वेन समान रूप वाले रौद्र रस में गति का निरूपण करते हैं— 'रौद्रे रसे तु' ।

## २. रौद्र रस में गति

**अनुवाद**—अब मैं रौद्र रस के विषय में दैत्य, दानव, राक्षसों की गति को कहता हूँ । हे ब्राह्मणों ! उनके यहाँ रौद्र ही एकमात्र स्थायी रस होता है ॥४८-४९॥

**अनुवाद**—रौद्र रस तीन प्रकार का होता है - प्रथम नेपथ्य रौद्र रस जानना चाहिए । दूसरा अङ्ग रौद्र होता है और तीसरा स्वभावज रौद्र होता है, इस प्रकार तीन प्रकार का रौद्र कहा गया है ॥ ४९-५० ॥

१. क. स्वभावतश्चैव । स्वभावश्चेति ।
२. ख. प्रकीर्तितः ।

रुधिरक्लिन्नदेहो यो रुधिरार्द्रमुखस्तथा ॥ ५० ॥
तथा[1] पिशितहस्तश्च रौद्रो [2]नेपथ्यजस्तु सः ।
बहुबाहुर्बहुमुखो नानाप्रहरणाकुलः ॥ ५१ ॥
स्थूलकायस्तथा प्रांशुरङ्गरौद्रः प्रकीर्त्तितः ।
रक्ताक्षः पिङ्गकेशश्च असितो विकृतस्वरः ॥ ५२ ॥
[3]रुक्षो निर्भत्सनपरो रौद्रः [4]सोऽयं स्वभावजः ।
चतुस्तालान्तरोत्क्षिप्तैः पादैस्त्वन्तरपातितैः[5] ॥ ५३ ॥
गतिरेवं प्रकर्त्तव्या तेषां ये चापि तद्विधाः ।

---

**अभिनव**—दैत्य, दानव आदि में प्रयुक्त, यह जो कहा गया है वह किस आशय से कहा गया है, इस शङ्का के शमन के लिए कहते हैं—'एक एव इति'। क्या उसमें क्रोध के बिना भी रौद्रता रहती है? कहते हैं कि हाँ। यह कैसे? रसाध्याय में कहे हुए न्याय के अनुसार रसन करने के लिए 'नैपथ्य रौद्र' से लेकर, 'स्वभावज' यहाँ तक है। इस प्रकार उन दैत्यादि में एक ही रस कहा गया है। रसाध्याय में इसका विस्तार से कथन किया गया है ॥ ४९-५० ॥

**अनुवाद**—खून से सना हुआ शरीर और खून से आर्द्र मुख तथा हाथ में मांस के टुकड़े से युक्त रहना नेपथ्य रौद्र रस कहलाता है ॥ ५०-५१ ॥

**अनुवाद**—जो अनेक भुजाओं और अनेक मुखों वाला, अनेक प्रकार के आयुधों को धारण करने से आकुल, स्थूल शरीर वाला तथा उन्नत (ऊँचा, लम्बा) है, वह अङ्ग रौद्र है ॥ ५१-५२ ॥

**अनुवाद**—लाल आँखें, पीले केश, काला वर्ण (रङ्ग), विकृत स्वर, रूखे स्वभाव वाला, फटकारने में तत्पर रहना स्वभावज रौद्र होता है ॥ ५२ ॥

**अनुवाद**—इसमें पैरों को चार के अन्तर पर उठाकर उससे कम तालों के अन्तर से गिराया जाता है, इस प्रकार की गति उन्हें करनी चाहिए और जो उनके समान है उन्हें भी ऐसी गति करनी चाहिए ॥ ५३-५४ ॥

---

१. ख. तथापि शिरहस्तश्च । ग. तथापि सहितस्तच्च ।
२. क-ङ. रौद्रनेपथ्यजस्तु । ३. ख. रूक्षो ।
४. क. रौद्रे सोऽयं स्वभावजं ।
५. ख. ग. पादैस्त्र्यन्तरपातितैः ।

चतुस्तालान्तरोत्क्षिप्तैरिति तालान्तरपातित्वं द्वितीयतालान्तरालापापेक्षयेति केचित्। उपाध्यायास्तु तालशब्देनात्र कालमानमुक्तं न तु देशमानम्, तेन यावता कालेनोत्क्षेपस्ततो न्यूनेन पतनमिति। एतदनु प्रकृतिसन्धिसंरम्भत्वं चाभिदधता विषमगतित्वमेषामनुज्ञातम्। तथा च कोहलमुखाः कलातदर्थद्वयलक्षणेन नर्तनकोत्फुल्लकादिना रौद्रादौ परिक्रममाहुः। तद्विधा इति भीमसेनादयः। अनेन युद्धवीरेऽप्येषैव गतिरिति सूचयति॥ ५३-५४॥

**अभिनव—'चतुष्तालान्तरोत्क्षिप्तैरिति'।** इसका अभिप्राय है कि—तालान्तर का पात द्वितीय तालान्तर की अपेक्षा से होता है, ऐसा कुछ आचार्य कहते हैं। हमारे उपाध्याय जी तो कहते हैं कि यहाँ ताल शब्द से काल का मान ( प्रामाण्य ) कहा गया है न कि देश का मान। इससे अर्थात् तालान्तरपातित्व से जितने काल तक उत्क्षेप होता है उससे न्यून काल में पतन होता है, इसी के अनुगत प्रकृति में सन्धि का संरम्भत्व का अभिधान करते हुए इनके विषम गति की अनुज्ञा दी है और कोहल आदि आचार्य कला और उसके अर्थद्वय रूप लक्षण वाले नर्तनक, उत्फुल्लक आदि के द्वारा रौद्र आदि में परिक्रम को कहा है। 'तद्विधाः' पद से भीमसेन आदि का ग्रहण है। इससे युद्धवीर में ऐसे व्यक्ति की ऐसी ही गति होती है, यह सूचित होता है॥ ५३-५४॥

**विमर्श—**रौद्र रस के अभिनय में दैत्य, दानव आदि पात्र होते हैं। अभिनय प्रयोग में उनके अङ्ग रुधिर-स्नात होते हैं। कभी अनेक मुख, अनेक बाहु वाले होते हैं और कभी रक्त-नयन, रूखे स्वर, काले वर्ण आदि के द्वारा रौद्र रूप का प्रदर्शन करते हुए विषम रूप में पाद-प्रचार करते हैं॥ ५३-५४॥

१. नर्तनकस्य लक्षणं यथा—

तिस्रोऽथ यतयः कार्या विरामोऽन्ते द्रुतैस्त्रिभिः।
लयो नर्तनकः प्रोक्तः सौम्यात्र द्विपदी भवेत्॥
विजयारम्भहर्षेषु मत्तोन्मत्तप्रमत्तके।
नर्तनकः प्रयोक्तव्यष्ठक्करागस्य भाषया॥

उत्फुल्लकस्य लक्षणं तु—

द्वौ द्रुतौ लघुरेकश्च चतस्रो यतयः स्मृताः।
छिन्नकस्य विरामोऽन्ते लयमुत्फुल्लकं विदुः॥
उत्तमाधममध्यानां कामोन्मादविलासयोः।
परिक्रमे पञ्चमेन तोटकं सचतुष्टयम्॥
मध्यमोत्तमपात्राणां प्रफुल्लकमिहेष्यते।
छन्दश्चतुष्पदा चात्र गुरुमध्यविवर्जिता॥

[1]अहृद्या तु मही यत्र श्मशानरणकश्मला ॥ ५४ ॥
गतिं तत्र प्रयुञ्जीत बीभत्साभिनयं[2] प्रति ।
क्वचिदासन्नपतितैः विकृष्टपतितैः क्वचित् ॥ ५५ ॥
एलकाक्रीडितैः पादैरुपर्युपरि पातितैः ।
तेषामेवानुगैर्हस्तैर्बीभत्से [3]गतिरिष्यते ॥ ५६ ॥

---

अथ रौद्रप्राणौग्रचविवक्षामध्ये पुरुषार्थप्राणायातबीभत्साश्रयां गतिमाह—अहृद्या त्विति ।

श्मशानरूपा युद्धपतितकबन्धप्रभृतिविरचिता[4] अत एव रणेन कश्मला जुगुप्सिता । आसन्नपतितत्त्वेन कलार्धतुर्यांशत्वादि, विकृष्टपतितत्वेन कलासार्धकलादि सूचयति ॥ ५४-५६ ॥

---

## ३. बीभत्स रस में गति

**अभिनव**—इसके बाद रौद्र रस की प्राणभूता 'उग्रता' को कहने की इच्छा के मध्य पुरुषार्थ के प्राण के अनुसार प्राप्त बीभत्स रस की गति को कहते हैं—'अहृद्या इत्यादि' ।

**अनुवाद—जहाँ पर श्मशान और युद्धभूमि होने से जुगुप्सित ( घृणित, घिनौनी ) भूमि अप्रिय हो गई हो वहाँ बीभत्स रस के अभिनय में उपर्युक्त गति का अभिनय करना चाहिए ॥ ५५ ॥**

**अनुवाद—कहीं पर आसन्नपतित और कहीं पर दूर-पतित ऊपर-ऊपर उछलते हुए एलकाक्रीड़ित पादों से और उन्हीं के अनुगामी हाथों से उपलक्षित गति बीभत्स रस में कही गई है ॥ ५५-५६ ॥**

**अभिनव**-श्मशानरूपा अर्थात् जहाँ युद्ध में कट-कट कर गिरने वाले कबन्ध ( रुण्ड-मुण्ड ) आदि के कारण भूमि श्मशान बन गई हो, इसलिए युद्ध के कारण भूमि जुगुप्सिता ( घृणित ) बन गई हो । यहाँ कश्मला का अर्थ जुगुप्सा ( घृणा ) है ॥ ५४ ॥

---

१. क-न. आहोर्णा । ग. (टि.) आद्या । २. ख. बीभत्सानुनयं ।
३. ख. बीभत्सागतिरिष्यते । बीभत्सगतिरुच्यते ।
४. क. (टि.) युद्धपतितबन्धनिहृनिपरिचिता ।

अथ वीरे च [1]कर्त्तव्या [2]पादविक्षेपसंयुता ।
[3]द्रुतप्रचाराधिष्ठाना नानाचारीसमाकुला ॥ ५७ ॥

---

अथ वीरगतिमाह— अथ वीरे चेति ।

विस्तारेण क्षेप इति स्यन्दितापस्यन्दितादेर्ग्रहणम् । तत्र च कलयार्धकलादि च प्रयोगः । तत एवोल्लासनिकाख्यं[4] तालमत्राहुर्लक्ष्यविदः । द्रुतेन प्रचारेणाधिष्ठानं गन्तव्ये देशे यस्यामिति । मल्लघटीत्र्यश्रादि विकृष्टपतितत्वे कलासार्धलघुद्रुतप्रचारं सूचितमनेन वीरे रौद्रे वा प्रवेगस्य स्पर्शभावत्वात् ॥ ५७ ॥

---

**अभिनव**—आसन्नपतित होने से बोभत्स में कला की आधी गति अथवा कला की चतुर्थांश गति और विकृष्ट अर्थात् दूरपतित होने के कारण बीभत्स में कला या अर्धकला प्रमाण की गति होती है, यह सूचित होता है ॥ ५५ ॥

**विमर्श**—बीभत्स रस के अभिनय में भूमि श्मशान तथा युद्ध में कटे हुए नरकंकाल से घृणित हो जाती है । इसमें पैर कभी पास में पड़ते हैं और कभी दूर पड़ते हैं । इसमें कट-कट कर गिरने वाले नर कंकालों से भूमि श्मशान बन जाती है, जो देखने और सुनने में अप्रिय लगती है ॥ ५४-५५ ॥

## ४. वीररस की गति

**अभिनव**—अब वीर रस की गति को कहते हैं—वीरे चेति ।

**अनुवाद—वीर रस में पाद-विक्षेप पूर्वक द्रुत प्रचार के अधिष्ठान से युक्त और नाना प्रकार की चारियों से समाकुल ( व्याप्त ) गति का अभिनय करना चाहिए ॥ ५७ ॥**

---

१. ख. प्रकर्त्तव्या । २. ख. पदविक्षेपसंयुता ।

३. द्रुता प्रहरणाविद्धा ।

४. क. (टि०) उल्लसनाख्यस्य तालस्य लक्षणं कोहलमते—

तोटकस्यैव यः पादः द्रुतद्वयलयत्रयः ।
मालिनी द्विपदा चात्र ठक्करागस्य भाषया ।
अन्योन्यकार्यसंसर्गे मदे गर्वे प्रहर्षिते ।
उल्लसना प्रयोक्तव्या सर्वदा लयवेदिभिः ।

पार्श्वक्रान्तैर्द्रुताविद्धैः[1] सूचीविद्धैस्तथैव च ।
[2]कलाकालगतैः पादैरावेगे योजयेद् गतिम् ॥ ५८ ॥

---

**तत्र गतिमाह—कलाकालगतैरिति पादैरिति बहुवचनेन त्रयः पादपाता गृह्यन्ते। तेन कलया कालेन च सन्निधानात् तालगतैव गतिरिति लघु पातनं येषाम्। अथवैको लघुपातो द्वावन्योन्यद्रुतपातौ कलामात्रं च विराममित्येवम् ॥ ५८ ॥**

---

**अभिनव**—'पादक्षेप' का अर्थ है विस्तार से क्षेपण। इससे स्यन्दिता चारी एवं अपस्यन्दिता चारी का ग्रहण होता है। इसमें एक कला या अर्धकला का प्रयोग होता है। इसीलिए नाट्यवेत्ता लोग यहाँ उल्लासनिक नामक ताल को कहते हैं। इसमें गन्तव्य प्रदेश में द्रुतगति (शीघ्रता) से आगे चलकर अधिष्ठान (स्थान) प्राप्त करना अभीष्ट होता है। मल्ल एवं घटीयन्त्र आदि के विकृष्ट देश में पड़ जाने पर डेढ़ कला तक कभी लघु एवं कभी द्रुत प्रचार सूचित होता है। इससे वीर और रौद्र रस में आवेग नामक भाव का स्पर्श होने से कभी धीरे और कभी द्रुत प्रचार का विधान सूचित होता है ॥ ५७ ॥

**अनुवाद—पार्श्वक्रान्ता, द्रुताविद्ध एवं सूचीविद्ध चारी से उपलक्षित कला प्रमाण वाले काल के अनुसार पैरों से आवेश की दशा में उचित गति का प्रयोग करना चाहिए ॥ ५८ ॥**

**अभिनव**—अब आवेग में गति को कहते हैं—'कलाकालगतैरिति अर्थात् कलागत प्रमाण वाले काल के अनुसार गतिशील पैरों से यहाँ पर 'पादैः' इस बहुवचन के प्रयोग से तीन पादपातों का ग्रहण है। इससे कला और काल के सन्निधान से तालानुसरिणी गति होती है, इसलिए इसमें लघु-पातन होता है अथवा एक लघु पात, एक दूसरे की ओर दो द्रुतपात और फिर एक कला का विश्राम होता है ॥ ५८ ॥

---

१. ख. तथाविद्धैः।
२. ख. ग. कालाकालागतैः।

उत्तमानामयं प्रायः प्रोक्तो गतिपरिक्रमः ।
मध्यानामधमानां च गतिं वक्ष्याम्यहं पुनः ॥ ५९ ॥
विस्मये चैव हर्षे च विक्षिप्तपदविक्रमान् ।
आसाद्य तु रसं [1]हास्यमेतच्चान्यञ्च योजयेत् ॥ ६० ॥

---

उत्फुल्लकपरिक्रमः । स चोभयोर्वीररौद्रयोः क्रमः । उत्तमानामिति । ननु [2]बीभत्सस्यैवोत्तमविषयतैवं केनैतदुपदिष्टं भवतः ? पुरुषार्थसाधनः बीभत्सः उत्तमेष्वेवैतदभिहितरसविषय व्यभिचारियोगे तु ॥ ५९ ॥

मध्यमानां गतिमाह—विस्मये चेति ।

---

अनुवाद—मैंने प्रायः उत्तम पात्रों का यह गति का परिक्रम बतलाया है। अब मैं मध्यम एवं अधम पात्रों की गति को कहूँगा ॥ ५९ ॥

अभिनव—उत्फुल्लकपरिक्रमेति–वीर और रौद्र दोनों रसों में यह गतिपरिक्रम होता है। उत्तमानामिति—अब प्रश्न होता है कि बीभत्स रस की उत्तम-विषयता है तो आपको किसने इसका उपदेश दिया है ? कहते हैं कि बीभत्स भी पुरुषार्थ का साधन है। अतः रस के विषय में कहे हुए रसानुकूल व्यभिचारियों के संयोग से उत्तम पात्र में भी बीभत्स रस होता है ॥ ५९ ॥

## ५-६. अद्भुत और हास्य रस में गति

अभिनव—अब मध्यम पात्रों की गति को कहते हैं—'विस्मये च'।

अनुवाद—विस्मय और हर्ष में पैरों की गति विक्षिप्त होनी चाहिए। भाव यह कि विस्मय और हर्ष की दशा में पाँव-क्रम इधर-उधर लड़खड़ाते हुए होने चाहिए। हास्य रस को प्राप्त करके तो इसी प्रकार की अन्य उचित गति की योजना करनी चाहिए ॥ ६० ॥

---

१. ख. ग. हास्यमेताश्चान्याश्च ।
२. क. (टि.) न तु बीभत्सस्योनोत्तमविषयतैवं ।

पुनश्च करुणे कार्या गतिः स्थिरपदैरथ ।
वाष्पाम्बुरुद्धनयनः[1] सन्नगात्रस्तथैव च ॥ ६१ ॥
उत्क्षिप्तपातितकरस्तथा [2]सस्वनरोदनः ।
[3]गच्छेत्तथाध्यर्धिकया प्रत्यग्राप्रियसंश्रये ॥ ६२ ॥
एषा स्त्रीणां प्रयोक्तव्या नीचसत्त्वे तथैव च ।

चकारादावेगादौ व्यभिचार्यन्तरेष्वपि । विक्षिप्तः इतस्ततो व्याकुलप्रायो लघुद्रुतबहुलः परिक्रमो यस्य तथा विस्मय एव व्यभिचारिरूपे स्थायिनि अद्भुतरसरूपे मध्यमानाम् ।

पुनरिति पुनर्ग्रहणादुत्तमानामद्भु्तेऽपि स्वच्छन्दगतिरेव पूर्वोक्तेति दर्शयति । केवलं तत्र विस्मयो वदन उत्पाद्यो मुखरागे ।

### ७. करुण रस में गति

**अभिनव**—अब करुण रस की गति को कहते हैं—पुनश्चेति ।

**अनुवाद**—पुनश्च करुण रस में स्थिरपद अर्थात् विलम्बित गति में पैरों को रखना चाहिये। आँसुओं के जल से रुद्ध ( लबालब भरे ) नेत्र, शरीर का सुन्न होना, हाथों को उठाकर फिर नीचे पटकना, चिल्ला चिल्ला कर रोना आदि अध्यर्धिका चारी के द्वारा नवीन अप्रिय घटना के समय में अभिनय करना चाहिए। इस गति का प्रयोग स्त्रियों तथा नीच पात्रों के विषय में करना चाहिए ॥ ६१-६३ ॥

**अभिनव**—यहाँ पर चकार से यह सूचित होता है कि आवेग आदि अन्य व्यभिचारी भावों में यह गति होती है। 'विक्षिप्त' का अर्थ है इधर-उधर आने-जाने से व्याकुल तथा लघु-द्रुत-बहुल परिक्रम पादविक्षेप है जिसका। व्यभिचारी रूप का अर्थ है चितवृत्तिरूप। अद्भुत रसात्मक को प्राप्त होने वाले चित्तवृत्तिरूप विस्मय स्थायोभाव में मध्यम पात्रों की गति होतो है।

**पुनरिति**—पुनः पद के ग्रहण से सूचित होता है कि उत्तम पात्रों के अद्भुत रस में स्वच्छन्द गति पहिले बतायी जा चुकी है। केवल विशेषता यह है कि यहाँ वदन में मुख पर राग 'लालिमा' उत्पन्न हो जाती है।

१. क-ज. वाष्पाम्बुनद्धनयनः । २. क-ड. सस्वररोदनः ।
३. ख. ग. गच्छेत्तथाविद्धकायः प्रत्यग्रगतिसंश्रये ।

उत्तमानां तु कर्त्तव्या [1]सधैर्या वाष्पसंगता ॥ ६३ ॥
[2]निःश्वासैरायतोत्सृष्टैस्तथैवोर्ध्वनिरीक्षितैः ।
न तत्र सौष्ठवं कार्यं न प्रमाणं तथाविधम् ॥ ६४ ॥

---

एतच्चेति परं हास्यं स्मिताद्यतिहसितपर्यन्तं, यदोत्तमानां स्वस्थगतिरेव तदा मध्याधमानान्तु अपहसितातिहसितयोर्विक्षिप्तगतित्वमेव। अन्यच्चेति तावद्विदूषकगतौ वक्ष्यमाणम्। एवं प्रसङ्गाद् द्रुतहास्ययोग्यगतिरभिहिता[3] करुणे तूच्यते पुनश्च करुण इति।

"ज्वरार्ते चे" त्यादिश्लोकेन यद्यपि स्तोकगतिरुक्ता तथापि यद्वक्ष्यत इति पुनः शब्दार्थः। स्थिरपदैः विलम्बितैः ॥ ६१-६२ ॥

आयतं दीर्घं कृत्वा उत्सृष्टैस्त्यक्तैः। उर्ध्वनिरीक्षणैः देवोपालम्भसूचकैः। न प्रमाणं तथाविधमिति नात्र सर्वथा प्रमाणाभावः, अपि त्वनियन्त्रितमेव पातात्मकं प्रमाणम्। अत एवात्र विलम्बितलयेन लघुलयेन द्रुतलयेन गुरुप्लुतमात्रेण च विरामेण

---

**एतच्चेति**—स्मित से लेकर अतिहसित पर्यन्त उत्कृष्ट हास्य है। इसमें उत्तम पात्रों को गति स्वस्थ होती है। किन्तु वहीं अपहसित और अतिहसित में मध्यम पात्र की गति विक्षिप्त होती है। 'अन्यच्च' पद से विदूषक की गति को आगे कहेंगे, यह संकेत दिया गया है। इस प्रकार यहाँ प्रसङ्गवश हास्य के योग्य द्रुत गति बतलाई गई है।

**अभिनव**—यद्यपि 'ज्वरार्त्ते च' इत्यादि श्लोक के द्वारा करुण में स्तोक गति का उल्लेख कर दिया है तथापि जिसको आगे कहेंगे, यह पुनः शब्द का अर्थ है। 'स्थिरपदैः' का अर्थ है 'विलम्बित गति से पैर रखना' ॥ ६१-६३ ॥

**अनुवाद**—उत्तम पात्रों की गति का अभिनय धैर्य से युक्त एवं आँसुओं से परिप्लुत, लम्बे लम्बे छोड़े गये दीर्घ निःश्वास और ऊर्ध्व-निरोक्षण के द्वारा करना चाहिए। इस गति में न सौष्ठव का कोई विधान है और न गति का कोई प्रमाण रहता है। इसमें अनियन्त्रित (स्वतन्त्र) पादपात ही प्रमाण होता है ॥ ६३-६४ ॥

---

१. ख. सधैर्यं। २. ख. उत्क्रुष्टैः।
३. क. (टि.) धृतहास्यत्रिभिरभिहिता।

'मध्यानामपि सत्त्वज्ञा गतिर्योज्या विधानतः ।
उरःपात[2]हतोत्साहशोकव्याकुलचेतनः[3] ॥ ६५ ॥
नात्युत्क्षिप्तैः पदैर्गच्छेत् इष्टबन्धुनिपातने ।

---

जम्भटिकाख्यो[4] लयः कोहलेन दर्शितः ॥ ६३-६४ ॥

उरसः पातः आभुग्नत्वात् करुणप्रसङ्गात्प्रहारे गतिमाह ॥ ६५ ॥

---

**अभिनव**—'आयत' का अर्थ है दीर्घ करके छोड़े गये दीर्घ श्वाँस । 'ऊर्ध्व-निरीक्षण' पद दैवोपालम्भ का सूचक है । 'न प्रमाणं तथाविधम्' का अभिप्राय है गति का कोई शास्त्रीय प्रमाण न होना । इसमें केवल अनियन्त्रित पादपात की योजना ही प्रमाण है । इसलिए यहाँ पर कोहल ने विलम्बित एवं द्रुत लय के द्वारा तथा गुरु एवं प्लुत अक्षरों पर विराम के द्वारा 'जम्भटिका' लय का प्रयोग प्रदर्शित किया है ॥ ६३-६४ ॥

**अनुवाद—सत्त्व के ज्ञाता अथवा सत्त्व के वेत्ताओं को विधान के अनुसार मध्य पात्रों की गति की योजना करनी चाहिए । इष्ट-बन्धु ( प्रियजनों ) के विनाश अर्थात् निधन हो जाने पर छाती पीटना, उत्साहहीन होना तथा शोक से व्याकुल-**

---

१. ख. ग. पुस्तकयोः श्लोकार्धोऽयं नास्ति ।

२. ख. ग. उरःपातः गतोत्साह ।

३. ग. शोकव्यामूढचेतनः । क-ज. शोकव्याकुलचेतसः ।

४. जम्भटिकालक्षणमुक्तं तुम्बुरुणा—

आदावृजुद्वयं कृत्वा द्विद्रुतान्तविरामिकम् ।
पुनरप्येवमेव स्याज्जम्भटो नाम कीर्तिता ॥
करुणारसपात्रेषु जम्भटीं सम्प्रयोजयेत् ॥
तदेव कोहलमते--
"लघुद्वयं विधायाथ द्वौ द्रुतौ सविरामकौ ।
पुनरप्येवमेव स्याज्जम्भटीपात इष्यते ॥
मरणे पतने चैवाप्रियस्य श्रवणे तथा ।
जम्भटिका सदा कार्या ह्युत्तमाधममध्यमैः ॥
गुरुद्वया चतुर्मात्रा गुरुरन्ते व्यवस्थितः ।
ककुभेन प्रयोक्तव्या जम्भटीलयकोविदैः ॥
जम्भटी, जम्भेटी, जम्भाटिका, जम्भेटिका च पर्यायवाचकाः ॥

गाढप्रहारे [1]कार्या च शिथिलाङ्गभुजाश्रया[2] ॥ ६६ ॥
विघूर्णितशरीरा च [3]गतिश्चूर्णपदैरथ ।
शीतेन चाभिभूतस्य वर्षेणाभिद्रुतस्य[4] च ॥ ६७ ॥
गतिः प्रयोक्तृभिः कार्या स्त्रीनीचप्रकृतावथ ।

---

चूर्णानि परिमितोत्क्षिप्तानि अधिकपतितानि पादानि [5]तेनाध्यर्धिकातोऽल्पान्तरं स्यात् ।

करुणे रसे दारिद्र्यमभिभवस्त्वत्र शीतः [6]वर्षभवः संभाव्यत इति । तद्भवगतिमाह—शीतेन चेति ॥ ६७ ॥

---

चित्त हो जाना बतलाया गया है । ऐसी दशा में पैरों को बहुत ऊँचे उठाकर नहीं चलना चाहिए ॥ ६५-६६ ॥

**अभिनव**—आभुग्न अर्थात् झुक जाने से छाती का पात 'उरःपात' है ।

**अनुवाद—चोट लगने ( गाढ़ प्रहार ) पर अङ्गों को शिथिल कर भुजाओं के आश्रित तथा शरीर को घुमाता हुआ पैरों को 'चूर्णपद' की स्थिति में रखना चाहिए । पैरों को थोड़ा ऊपर उठाकर जोर से पृथ्वी पर पटकना 'चूर्णपद' कहलाता है ॥ ६६-६७ ॥**

**अभिनव**—करुण रस का प्रसङ्ग, होने से प्रहार अर्थात् चोट लगने पर 'गति' का निरूपण करते हैं—'चूर्णपदैरिति' । पैरों को थोड़ा ऊपर उठाकर फिर जोर से नीचे की ओर गिराना 'चूर्णपद' कहलाता है । इस क्रिया से चूर्णपद में अध्यर्धिका से थोड़ा अन्तर रह जाता है ॥ ६६-६७ ॥

**अभिनव**—करुण रस के अभिनय में शीत से अभिभव होता है और वर्षा से अभिद्रव होता है अर्थात् प्रकृत में अभिभव शीतभव है और अभिभद्रव वर्षभव है। अतः शीतभव और वर्षभव गति को कहते हैं—शीतेन चेति ।

**अनुवाद—शीत (ठण्ड) से अभिभूत तथा वर्षा होने पर दौड़ने वाले की गति का अभिनय नाट्य-प्रयोक्ताओं को स्त्री तथा अधम पात्रों की गति की तरह करनी चाहिए ॥ ६७-६८ ॥**

---

१. ख. कार्ये ।　　२. क-ङ. शिथिलांसभुजाश्रण ।
३. ग. गतिस्तूर्णा पदैरथ । क-ङ. गतिघूर्णपदैरथ ।
४. ख-ग. वर्षेणाभिहतस्य च ।
५. क. (टि.) तेनाभ्यद्धिकातो ।　　६. क. (टि.) शीतभावः ।

पिण्डीकृत्य तु गात्राणि तेषां चैव प्रकम्पनम् ॥ ६८ ॥

करौ वक्षसि निक्षिप्य [1]कुब्जीभूतस्तथैव च।

दन्तोष्ठस्फुरणं चैव चिबुकस्य[2] प्रकम्पनम् ॥ ६९ ॥

कार्यं शनैश्च[3] [4]कर्त्तव्यं शीताभिनयने गतौ।

---

अथेत्यनेन मध्यमोत्तमानामनुभावन्यूनभावेन [5]शीतादिगतिं सूचयति। तेषामिति पिण्डीकृतानां गात्राणां, चकारेण कम्पनं सङ्कोचनं समुच्चीयते। एवकारेण सौष्ठवचातुरश्र्यादि निरस्यते कराविति कटिपातरूपावित्यर्थः। गात्राणि पिण्डीकृत्य करौ वक्षसि च कृत्वा या गतिः लोके तस्याभिगमने [6]योऽयं शीताभिनयस्तत्र कर्तव्यः प्रयोक्तृभिर्नटैर्गात्रकम्पनं [7]कुब्जीभूतो देह इत्यादि कार्यमिति पदसङ्गतिः ॥६८-७०॥

---

**अनुवाद** -शीत के अभिनय में शरीर को सिकोड़ लेना, शरीर के अङ्गों का काँपना, हाथों को छाती पर रखकर कुबड़े की तरह टेढ़ा हो जाना, दाँत और ओठों का पकड़ना, चिबुक ( ठुड्डी ) का प्रकम्पन होना चाहिए तथा ठंड से धीरे-धीरे कार्य करना चाहिए ॥ ६९-७० ॥

**अभिनव**—'अथ' पद से मध्यम और उत्तम पात्रों की शीतादि से होने वाली गति अनुभावों से शून्य भावों के द्वारा सूचित की जाती है। 'तेषाम्' का अभिप्राय है पिण्डीकृत पात्रों की। 'च' पद से (चकार) से शरीर के कम्पन एवं सङ्कोचन का समुच्चय होता है। 'एव' पद से सौष्ठव एवं चातुरश्र्य आदि का निषेध किया गया है। 'करौ' पद से यहाँ वे हाथ अपेक्षित है जो कटि के ऊपर गिराये गये हैं। शरीर को सिकोड़कर हाथों को वक्षःस्थल ( छाती ) पर रखकर जो गति लोक में प्रसिद्ध है उसके अभिगमन में यह शीत का अभिनय है, वहाँ करना चाहिए और नाट्य-प्रयोक्ता को शरीर का कम्पन, देह का कुब्जोभाव ( कुञ्चन ) आदि लोकप्रचलित रूप में प्रस्तुत करना चाहिए ॥ ६८-७० ॥

---

१. क-ढ. कुञ्चीभूतस्तथैव च।

२. ख. चिबुकस्य तु कम्पनम्। क-च. चिम्बुकस्य च कम्पनम्।

३. क-न. शनैस्तु। ४. ख. ग. गन्तव्यं।

५. क. (टि.) गीतादिगतिं।

६. क. (टि.) यो भावः क्रियते गीताभिनयः।

७. क. (टि.) नात्र कम्पनम्।

तथा भयानके चैव गतिः कार्या विचक्षणैः ॥ ७० ॥
स्त्रीणां कापुरुषाणां च ये चान्ये सत्त्ववर्जिताः ।
विस्फारिते चले नेत्रे विधुतं च शिरस्तथा ॥ ७१ ॥
भयसंयुक्तया दृष्ट्या पार्श्वयोश्च विलोकनैः[1] ।
[2]द्रुतैश्चूर्णपदैश्चैव बद्ध्वा हस्तं कपोतकम् ॥ ७२ ॥
प्रवेपितशरीरश्च शुष्कोष्ठस्खलितं व्रजेत् ।

---

एवं करुणे तत्प्रसङ्गेन चान्यत्रापि गतिमभिधाय भयानकं कथयति—ये चान्य इति ।

येषामुत्तमत्वं [3]कुलाद्यौचित्यात् । अथ सत्त्वविहीनाः । तद्यथा—विराटपुत्र उत्तरः ॥ ७१ ॥

द्रुतैरित्यनेन [4]धारालयादिः कोहलोक्तः सूचितः ॥ ७२ ॥

---

## ८. भयानक रस की गति

**अभिनव**—इस प्रकार करुण रस के प्रसङ्ग में और अन्यत्र भी गति का कथन करके अन्य भयानक रस में गति का निरूपण करते हैं—'ये चान्ये' ।

**अनुवाद**—भयानक रस के अभिनय में विद्वानों को स्त्री, कापुरुष और अन्य जो सत्त्व से वर्जित ( बलहीन ) व्यक्तियों की गति उस प्रकार प्रदर्शित करनी चाहिए । भयानक रस के अभिनय में नेत्र विस्तारित तथा चञ्चल, शिर कम्पित, भयातुर दृष्टि से दोनों पार्श्वों में देखना, चूर्णपद से युक्त द्रुत गति होती है । इसमें हाथ को कपोत मुद्रा में बाँधकर, शरीर को कम्पित तथा ओष्ठ को शुष्क रखते हुए स्खलित गति से चलना चाहिए ॥ ७०-७२ ॥

**अभिनव**—जिसमें कुल-शील आदि के औचित्य के कारण उत्तमत्व का औचित्य के प्राप्त होने पर भी जो सत्त्वहीन हैं । जैसे—विराट का पुत्र उत्तर ।

**अभिनव**—'द्रुतैः' पद से कोहल के द्वारा बतलाये हुए धारालयादि का संकेत है ।

---

१. ग. विलोकितैः । २. ग. द्रुतैः घूर्णपदैः ।
३. क. (टि.) कलाद्यौचित्यात् ।
४. क. ( टि० ) धारालक्षणं कोहलयते—
"आद्यावष्टौ द्रुता ज्ञेया अन्ते चापि द्रुताष्टकम् ।
विरामरहिता धारा अधमेषु द्रुते लये ॥

एषानुकरणे कार्या तर्जने त्रासने तथा ॥ ७३ ॥

सत्त्वं च विकृतं दृष्ट्वा श्रुत्या च विकृतं स्वरम्[1] ।
एषा स्त्रीणां [2]प्रकर्त्तव्या नृणाञ्चाक्षिप्तविक्रमा ॥ ७४ ॥

क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ।
[3]एलकाक्रीडितैः पादैरुपर्युपरि पातितैः ॥ ७५ ॥

एषामेवानुगैर्हस्तैर्गतिं भीतेषु योजयेत् ।

---

अनुसरण इति शत्रोः पृष्ठतः आगमनमित्यर्थः । नृणां पुनराक्षिप्तविक्रमं यत्तेनोपाहृतं मध्ये-मध्ये कृतधैर्यं यस्यामित्यर्थः । तेन मध्ये गुरु-लघु-पादपाता अपि । तदाह—क्वचिदासन्नपतितैरित्यादि ॥ ७३-७५ ॥

---

**अनुवाद**—शत्रु के द्वारा अनुसरण अर्थात् पीछा करने, फटकारने तथा डराने में इस गति का प्रयोग करना चाहिए। विकृत सत्त्व ( प्राणी ) को देखकर और विकृत स्वर को सुनकर आक्षिप्त ( दबे हुए ) पराक्रम वाले स्त्री और पुरुषों के सम्बन्ध में इस गति का प्रयोग करना चाहिए। कहीं आसन्नपतित अर्थात् समीप में हलके पादपात और कहीं पर विकृष्टपतित अर्थात् एक दूसरे से दूर रखकर भारी पादपात और कही एलकाक्रीडित चारो में एक पैर से दूसरे पैर का पादपात और इन्हीं के अनुगामी हाथों से उपलक्षित गति का प्रयोग करना चाहिए ॥ ७३-७६ (१)

**अभिनव**—'अनुसरण' का अभिप्राय है—शत्रु का पीछे से आगमन ( आ जाना )। जिनमें विक्रम पुनः आक्षिप्त है उस उपाहृत विक्रय से बीच-बीच में धैर्य लाया जाता है। इसमें बीच में हलके और भारी पादपात भी होते हैं। इसी को 'आसन्नपतितैः' आदि के द्वारा कहा गया है ॥ ७३-७६ (१) ॥

---

१. ग. विकृतं रवम् । ख. विकृतस्वरम् ।

२. ग. प्रयोक्तव्या ।

३. ख. ग. एड़काक्रीडितैः ।

वणिजां सचिवानां च गतिः कार्या स्वभावजा ॥ ७६ ॥
कृत्वा नाभितटे [1]हस्तमुत्तानखटकामुखम् ।
आद्यं चारालमुत्तानं कुर्यात्पार्श्वं [2]स्तनान्तरे ॥ ७७ ॥
न निषण्णं न च स्तब्धं न चापि परिवाहितम् ।
कृत्वा गात्रं तथा गच्छेत्तेन चैव क्रमेण तु ॥ ७८ ॥

---

अथ शान्तरसे गतिर्वक्तव्या । स च प्राधान्येन तथा प्रयोगसौन्दर्यमावहति अतोऽन्तस्संस्काररूपता येषां वणिक्प्रभृतीनामस्ति "धीरप्रशान्ता वाणिज" इति वचनात् । यतिप्रभृतयोऽपि शान्तरसप्रधानाः, ये नाटकादौ प्रसङ्ग भवन्ति तेषामुभयेषामपि गतिमाह—वणिजामित्यादिना ।

सचिवा अमात्याः । शान्तत्वादेव हि हृदयं नियम्ययेषां वणिगमात्यप्रभृतीनाम् । स्वभावशब्देन तत्र [3]तत्रानाविष्टमेव रूपमाह । ७६-७८ ।

---

## शान्तरस अथवा वणिक् एवं अमात्य की गति

**अभिनव—**इसके बाद शान्त रस की गति बतलानी चाहिए थी, किन्तु यह गति प्रधान रूप से उसी प्रकार सौन्दर्य का आवहन करतो है, अतः 'धोरप्रशान्ता वणिजः' अर्थात् 'वणिक् ( बनिये ) धीरप्रशान्त होते हैं, इस वचन के अनुसार जिन वणिक् प्रभृति पात्रों के अन्तःकरण में वह शान्तरस संस्कार के रूप में स्थित है तथा जो शान्तरस प्रधान यति प्रभृति भी नाटक आदि में प्रसङ्ग होते हैं, उन सब की गति भी 'वणिजाम्' इत्यादि के द्वारा बतलाते हैं—

**अनुवाद—वणिक् और सचिवों ( अमात्यों ) की गति स्वाभाविक होनी चाहिए। इसमें खटकामुख हस्त को उत्तान करके नाभि पर रखकर फिर एक अराल हस्त को उत्तान करके दोनों स्तनों के मध्य में पार्श्व में रखे। फिर शरीर को निषण्ण स्तब्ध और परिवाहित ( हिलते हुए ) न रखे, अर्थात् शरीर को बिना हिलाये डुलाये उसी क्रम से अवाहित गति से चले ॥ ७६-७८ ॥**

**अभिनव—**'सचिव' का अर्थ अमात्य है। वणिक्, अमात्य आदि का हृदय शान्त होने से नियमन के योग्य है। स्वभाव शब्द से स्वभावजा गति के अनाविष्ट रूप को बतलाया गया है अर्थात् जिसको गति आवेश रहित हो ॥ ७६-७८ ॥

---

१. ख. ग. हस्तं मुक्ताङ्गकटकामुखम् ।
२. ख. ग. तदन्तरे ।
३. क. अनाविष्टं भावाविष्टमेव ।

[1]अतिक्रान्तैः पदैर्विप्रा द्वितालान्तरगामिभिः ।
[2]यतीनां श्रमणानाञ्च ये चान्ये तपसि स्थिताः ॥ ७९ ॥
[3]तेषां कार्या गतिर्ये तु नैष्ठिकं व्रतमाश्रिताः ।
अलोलचक्षुश्च भवेद्युगमात्रनिरीक्षणः[4] ॥ ८० ॥
उपस्थितस्मृतिश्चैव[5] गात्रं सर्वं विधाय च ।
अचञ्चलमनाश्चैव यथावल्लिङ्गमाश्रितः[6] ॥ ८१ ॥
विनीतवेषश्च भवेत् कषायवसनस्तथा ।

---

नैष्ठिकमिति ब्रह्मचर्य एव प्रवर्तित इत्यर्थः । युगं चतुरहस्तम् । उपस्थिता झटिति संस्कारप्रबोधप्रभवा स्मृतिर्यस्य । लिङ्गं जपभस्म कौपीनादि । अन्येष्विति नाममात्रवृत्तिषु तत्र तु विपर्यासौ यथोचितं द्रष्टव्यः । तद्यथा, लोलं चक्षुः, मनश्चञ्चलम् । लिङ्गं पुनर्जटादि भवति । एवमन्यदुत्प्रेक्ष्यम् ॥ ७९-८१ ॥

---

## यति, श्रमण आदि की गति

अनुवाद—हे विप्रों ! दो ताल के अन्तर के चाल से अतिक्रान्त पदों से यतियों, श्रमणों तथा जो अन्य तपस्या में स्थित है और जो नैष्ठिक ब्रह्मचर्य के व्रत में रत है उनको गति का अभिनय करना चाहिए। अभिनय में अभिनेता अलोल चक्षु अर्थात् चञ्चल दृष्टि रहित, युगमात्र का निरीक्षण करते हुए अर्थात् चार हाथ तक भूमि पर दृष्टि डालते हुए, अभिनेय वस्तु को स्मृति में रखकर, समस्त शरीर को सन्नद्ध करके स्थिरचित्त होकर अपने चिह्न को धारण कर, विनीत वेष तथा कषाय ( गेरुआ ) वस्त्र को धारण करे ॥ ७९-८२ ॥ (१)

---

१. ख. पुस्तके श्लोकार्धोऽयं नास्ति ।
२. ग. यतीनां चैव सर्वेषां ।
३. ख. तेषां कार्या गतिर्विप्रा नैष्ठिकं व्रतमाश्रिता ।
४. क-न. युगमात्रावलोकनः ।
५. क-च उपस्थितगतिश्चैव ।
६. ख. तथालिङ्गं समाश्रितः ।

प्रथमं समपादेन [1]स्थित्वा स्थानेन वै बुधः ॥ ८२ ॥
हस्तं च चतुरं कृत्वा तथा चैकं प्रसारयेत्[2] ।
प्रसन्नं[3] वदनं कृत्वा प्रयोगस्य वशानुगः[4] ॥ ८३ ॥
अनिषण्णेन गात्रेण गतिं गच्छेद् व्यतिक्रमात्[5] ।
उत्तमानां भवेदेषा लिङ्गिनां ये महाव्रताः ॥ ८४ ॥
एभिरेव विपर्यस्तैर्गुणैरन्येषु योजयेत् ।
तथा[6] व्रतानुगावस्था ह्यन्येषां लिङ्गिनां गतिः ॥ ८५ ॥
विभ्रान्ता [7]वाप्युदात्ता वा विभ्रान्तनिभृताऽपि[8] वा ।
शकटास्यस्थितैः पादैरतिक्रान्तैस्तथैव च ॥ ८६ ॥
कार्या पाशुपतानां च गतिरुद्धतगामिनी[9] ।

---

अभिनव—नैष्ठिक ब्रह्मचारियों की गति ब्रह्मचर्य से ही प्रवृत्त होती है। 'युग' शब्द चतुरहस्त या चतुर्हस्त का वाचक है। 'उपस्थितास्मृतिः' का अर्थ है—संस्कार के उद्बुद्ध होने से सर्वदा उपस्थित रहती है स्मृति जिसकी वह। 'लिङ्ग' पद का अभिप्राय है—जप, भस्म, कौपीन आदि। 'अन्येषु' का तात्पर्य है नाम मात्र के लिङ्गी, उनमें जपादि का विपर्यास ( अभाव ) दिखाई देता है। जैसे, उनके नेत्र लोल ( कम्पित ), मन चञ्चल और लिङ्ग जटा आदि हैं। इसी प्रकार अन्य की भी उत्प्रेक्षा कर लेनी चाहिए ॥ ७९-८१ ॥

अनुवाद—विद्वान् अभिनेता पहिले समपाद नामक स्थान में स्थित होकर एक हाथ को चतुर हस्त मुद्रा में रखकर दूसरे को फैला दे और प्रसन्नमुख होकर तथा प्रयोग के अनुसार नियन्त्रित होकर अस्थिर शरीर से व्यतिक्रम गति से चले। उत्तम यतियों की तथा अन्य महाव्रतधारी सन्यासियों की यही गति होती है। इन्हीं गुणों से विपरीत गुणों से अन्य व्यक्तियों की गति की भी योजना करे ॥ ८२-८५ ॥

---

१. ख. कृत्वा । २ ख. प्रयोजनम् । ३. क-न. प्रसन्नवदनं ।
४. क. वशानुगम् । ५. ख. गच्छेदति अक्रमात् ।
६. ख-ग. तथा व्रतानुगा च ह्यान्येषां लिङ्गिनां गतिः ।
७. क. वाप्युदात्ता । ८. क. विभ्रान्ता निभृतापि वा ।
९ ख. गतिरुद्भ्रान्तगामिनी ।

व्रतानुगतत्त्वं स्फुटयति विभ्रान्ता चेति। [1]उन्मत्तादिव्रतं हि श्रूयते। आगमेषु [2]तत्तदुचितैरित्यैवमेव गतिरित्यर्थः। [3]क्रमणादुत्क्रान्तं कृत्वा पतिः पाशुपतानां परमेश्वरव्रतधारिणां गतिरत्युदात्तेत्यर्थः। यदि वा परमयोग्यवस्थायां [4]नाकुल-दर्शनप्रतिपन्नानामुन्मत्तव्रतमप्यस्ति, तद्विषमेवोद्भ्रान्तत्वं गतौ। एवं रसान्त-रसङ्गतिरुक्ता। [5]यच्चान्यै रौद्रानन्तरं शान्तरसाभिप्रायेण पठितम्।

" [6]रूपादित्वनिराशंसः परोपायविचिन्तकः।
चतुष्कलैर्द्विपातैश्च पादैर्भ्रान्तिगतिं व्रजेत् ॥ इति

[7]तदनर्थमेव, [8]एतत् ग्रन्थे पुनरुक्तमपुष्कलार्थं, पुस्तके कथं दृष्टमिति स्वकल्पितमेवेत्युपेक्ष्यम्[9] ॥ ८५-८६ ॥

**अनुवाद-इनके अतिरिक्त अन्य सन्यासियों के व्रत की अवस्था के अनुगामी—जो विभ्रान्त होकर उदात्त अथवा विभ्रान्त होकर निभृत (शान्त) हैं उनकी गति का अभिनय शकटास्याचारी तथा अतिक्रान्ताचारी से करनी चाहिए। इसी प्रकार पाशुपत सम्प्रदाय के शैव सन्यासियों की उत्क्रान्तगामिनी गति का भी इन्हीं चारियों से अभिनय करे ॥ ८२-८६ ॥**

**अभिनव**-अब 'व्रतानुगा' का अभिप्राय स्पष्ट करते हैं – **'विभ्रान्ता'** इति। आगमों में जो उन्मत्त आदि व्रत सुनाई देते हैं, उनके योग्य पादों से इसी प्रकार की गति होती है। क्रमण अर्थात् उत्क्रमण करने के कारण परमेश्वर के व्रत को धारण करने वाले पाशुपतों की गति भी उदात्त होती है, उद्धत होती है अथवा परमयोगी की अवस्था में नकुलीश दर्शन के ज्ञाता पाशुपतों के लिए उन्मत्त व्रत का विधान भी है। इस व्रत के कारण उनकी गति में उद्भ्रान्तता ( उद्धतता ) होती है। इसी प्रकार रसान्तरों की सङ्गति कह दी गई हैं। जो अन्य विद्वानों ने रौद्र रस के बाद शान्त रस के अभिप्राय से कहा है—

"रूप, रस आदि विषयों का निराकरण कर परमेश्वर ( परमतत्त्व ) की प्राप्ति के उपायों के चिन्तक विद्वान् चतुष्कल एवं द्विपात पादों से उद्भ्रान्त (उद्धत) गति से चले।"

यह कथन अनर्थक है, निरर्थक है। इस ग्रन्थ में पुनरुक्त वचन पुष्कल नहीं है तो पुस्तक में कहाँ से कैसे देख लिया? यह सब निजी कल्पना है, अतः यह उपेक्षणीय है ॥ ८५-८६ ( ? ) ॥

१. क. उत्तमादिव्रतं। २. क. तत्र तदुचितैरेवं। ३. क. (टि) भ्रमणादुत्क्रान्तं।
४. क. नाकुटिल। ५. क. यस्त्वन्थैर्वीररौद्रानन्तरं। ६. क. रूपादिसत्त्व।
७. क. तदानवमेन। ८. क. तद्ग्रन्थस्य। ९. ख. उत्प्रेक्ष्यम्।

अन्धकारेऽथ[1] याने च गतिः कार्या प्रयोक्तृभिः ॥ ८७ ॥
भूमौ विसर्पितैः पादैर्हस्तैर्मार्गप्रदर्शिभिः[2] ।

---

एवं रसानुसारेण गतिमुक्त्वा देशानुसारेणाप्याह—अन्धकार इति अन्धत्वेन गमन इति[3] । विसर्जितैरपक्षेणशून्यैः मार्गप्रदर्शिभिः मार्गान्वेषणपरैरित्यर्थः ॥८७-८८॥

---

**विमर्श**—इस प्रकरण में यतियों, तपस्वियों एवं श्रमणों की गति का निरूपण किया गया है। यतियों, श्रमणों एवं नैष्ठिक व्रत को धारण करने वाले अर्थात् आजीवन ब्रह्मचर्य व्रत को धारण करने वाले नैष्ठिक ब्रह्मचारियों की गति का अभिनय दो ताल के अन्तर का ताल से अतिक्रान्त पैरों से करना चाहिए। लिङ्ग अर्थात् भस्म, कौपीन आदि धारण करने वाले लिङ्गी तपस्वी होते हैं जिनकी दृष्टि अचञ्चल, मति स्मृतिमान्, मन चञ्चलता रहित है, जो विनीतवेष एवं गेरुआ वस्त्र धारण करने वाले हैं, उनकी भी गति इसी प्रकार की होती है। इनके अतिरिक्त अन्य तपस्वियों की गति उक्त गुणों के विपरीत गुणों के द्वारा होती है। अन्य लिङ्गियों अर्थात् पाशुपतव्रतधारियों की गति विभ्रान्त होते हुए भी उदात्त अथवा निभृत अर्थात् अनुद्धत होती है। इस प्रकार उनकी गति शकटास्य एवं अतिक्रान्त पैरों से प्रदर्शित करनी चाहिए। पाशुपतों की गति उत्क्रान्तगामिनी होती है। नकुलीश पाशुपत दर्शन के अनुसार पाशुपतों के लिए जो व्रत बताये गये हैं उनमें एक उन्मत्त व्रत भी है जिसमें साधक उन्मत्तों के समान आचरण करता है। शरीर-कंपाना, लंगड़ाकर चलना, ऊट-पटांग बोलना, उलटा-सीधा काम करना, कामुक के समान आचरण करना, भस्म धारण करना आदि पाशुपतों के व्रत हैं ॥ ७९-८६ ॥

**अभिनव**—इस प्रकार रसों के अनुसार गति को कहकर अब देशों के अनुसार गति को कहते हैं—

**अनुवाद—नाट्यप्रयोक्ताओं को अन्धकार में या अन्ध पात्रों के गमन में भूमि पर सरकते हुए पैरों तथा हाथों से मार्ग ( रास्ता ) को टटोलते हुए गति का प्रदर्शन करना चाहिए ॥ ८७-८८ ॥**

**अभिनव**—अन्धकार में अथवा अन्धे की तरह चलने में। 'विसर्पितैः' अर्थात् अपक्षेपण से शून्य भूमि पर पैर को खिसकाते हुए चलने से। 'मार्गप्रदर्शिभिः' का अभिप्राय है मार्ग ( रास्ता ) के अन्वेषण में तत्पर ॥ ८७ ॥

---

१. ख-ग. अन्धकारेऽन्धयाने च ।
२. ख. मार्गप्रदर्शितैः ।
३. इत्यर्थः ।

[1]रथस्थस्यापि कर्त्तव्या [2]गतिश्चूर्णपदैरथ ।
समपादं तथा स्थानं कृत्वा रथगतिं व्रजेत् ॥ ८८ ॥
धनुर्गृहीत्वा चैकेन तथा चैकेन[3] कूबरम् ।
सूतश्चास्य भवेदेवं [4]प्रतोदप्रग्रहाकुलः ॥ ८९ ॥
वाहनानि विचित्राणि कर्तव्यानि विभागशः ।
द्रुतैश्चूर्णपदैश्चैव गन्तव्यं रङ्गमण्डले[5] ॥ ९० ॥

कर्तव्या गतिरिति च्छेदः । [6]तदाह चूर्णपदैः, । चूर्णपदैरित्यनेन [7]खण्डधारालयं द्रुतबहुलं गुर्वन्तं कोहलोक्तं सूचयति । समपादेन स्थानकेन रथेन[8] गतिः यस्मिन् देशे तं व्रजेत् । रथविशिष्टा वा गतिः । सामान्यके अकर्मकरभसात्मिका साऽत्र इति । कूबरं युगन्धरं प्रतोदः प्रेषणकः, प्रग्रहो वल्गा । वाहनानि रथ्यानि तानि, प्रकृतिविभागौचित्येन विचित्राणि तुरगबलीवर्दखरौष्ट्रकानि चित्राणि लिखितानि । अस्य सूतस्यैव कर्तव्यानि तच्चित्रपटं सूतस्यैव हस्ते आवर्जयेदिति यावत् । चूर्णपदानां लयविशेषनिरूपणाय पुनर्ग्रहणं[9] द्रुतैरिति । रङ्गमण्डल इत्यनेनेवमाह—वस्तुतोऽसौ [10]रङ्गमण्डल एव गतिक्रियां करोति तथात्र सर्वम् । [11]तच्चित्रं तद्रथाकृति कर्तव्यं तत्त्वनुगतपदमात्रमेव, रथो यातीति प्रतीयते । एवं सर्वत्र ।

### रथस्थ पात्र की गति

अनुवाद—रथ पर बैठे हुए पात्र की गति चूर्णपदों के द्वारा प्रदर्शित करनी चाहिए । रथारूढ़ पात्र समपाद स्थानक को करके एक हाथ से धनुष को लेकर और दूसरे हाथ से रथ का कूबर पकड़ कर रथ की गति का अभिनय करे और उसका सारथि चाबुक एवं लगाम को संभालने में व्यस्त हो । अलग-अलग प्रकृतियों के विभाग के अनुसार विचित्र वाहनों का अभिनय करे और द्रुत लय के साथ चूर्णपदों से रङ्गमञ्च पर प्रवेश करे ॥ ८८-९१ ॥

१. ख. अथस्तस्यापि । २. ख-ग. गतिस्तूर्णपदैरथ ।
३. ग. ह्येकेन । ४. क. प्रतोदप्रग्रहाकुलम् ।
५. क-न. रङ्गमण्डलम् । ६. क. तामाह चूर्णपदै ।
७. खण्डधाराया लक्षणम्—"वेदखत्रिदाः खण्डधारा" ।
८. क. अथमेन । ९. क-ख. पुनर्ग्रहघूरिति ।
१०. क. रथ्यामण्डल । क-ख. रम्यामण्डल । ११. क-ख. तच्छत्रम् ।

विमानस्थस्य कर्तव्या ह्येषैव[२] स्यन्दिनी गतिः ।
[३]आरोढुमुद्वहेद् गात्रं किञ्चित् स्यादुन्मुखस्थितम् ॥ ९१ ॥
अस्यैव वैपरीत्येन कुर्याच्चाप्यवरोहणम् ।

---

अत एवाह—विमानस्थस्यापीति । दिव्यस्याकाशगामिनोऽपि पुष्पकादेरित्यर्थः । अथ रथप्रसङ्गादुद्धतं क्रियान्तरमप्याह—आरोढुमिति । उद्वहेदूर्ध्वं प्रापयेत् । वैपरीत्येन अधोमुखत्वेन गात्राधोनयनेन चेत्यर्थः ॥ ९१-९२ ॥

---

**अभिनव**—'कर्त्तव्या गतिः' इस प्रकार पदच्छेद है। इसलिए 'चूर्णपदैः' कहा है। 'चूर्णपदैः' इससे कोहल के द्वारा कहे हुए द्रुतबहुल एवं गुर्वन्त (गुरु अक्षर पर विराम) खण्डधारालय का सङ्केत है। समपाद स्थानक के द्वारा रथ से जिस देश में गति हो उस वेश में जाना चाहिए अथवा रथविशिष्ट की गति यहाँ प्रदर्शित है। सामान्यतः यहाँ पर अकर्मक रभसात्मिका (वेगवान्) गति है। 'कूबर' का अर्थ युगन्धर है, 'प्रतोद' का अर्थ चाबुक है और प्रग्रह का अर्थ लगाम है। 'वाहन' का अर्थ रथ में जोतने योग्य अश्वादि है। प्रकृति के विभागगत औचित्य से विचित्र अश्व, बैल, गदहा तथा ऊँट आदि चित्रित हों, इस सूत के ही ये कर्त्तव्य है, इसलिए चित्रपट को सूत के ही हाथों में आवर्जित कर दे। चूर्णपदों के लय विशेष का निरूपण करने के लिए 'द्रुतैः' पद का पुनः ग्रहण किया गया है। 'रङ्गमण्डल' इस पद के द्वारा यह कहा गया है कि जिस प्रकार वस्तुतः वह रङ्गमण्डल में ही गति कर्म करता है, वैसे ही यहाँ सब कार्य करता है। इसलिए रथ के आकार का चित्र बनाना चाहिए। वह भी अनुगत पदमात्र ही है, पदों में ही अनुकूलगमन हो जिससे, रथ से चल रहा है (रथ से जा रहा है), यह प्रतीत होता है। इसी प्रकार सब जगह करना चाहिए ॥ ८८-९१ ॥

## विमानस्थ गति

**अनुवाद**—विमान पर आरोहण करते समय इसी स्यन्दिनी गति (रथारोहण की गति) का अनुसरण करना चाहिए। विमान पर आरोहण करने के लिए किञ्चित् उन्मुख (उन्नत) होकर शरीर का उद्वहन करे अर्थात् विमानारोहण के समय गात्र को उन्नत (ऊँचा उठाकर) स्थित करे और इसके विपरीत अर्थात् आरोहण क्रिया के विपरीत पद्धति से विमान से अवरोहण करे ॥ ९१-९२ ॥

---

२. ख. एषैव । ३. ख. ग. आरूढमुद्वहेद् ।

बालानामपि कर्त्तव्या स्वच्छन्दपदविक्रमा[1] ।
न [2]तस्याः सौष्ठवं कार्यं न [3]प्रमाणं प्रयोक्तृभिः ॥ १९४ ॥

---

गतिरिति चतुस्ताला चतुष्कला च, अनुत्तमस्त्रीणां द्वितालां द्विकलेति ततऽप्यर्धा कापुरुषाणां, तत्कर्मकराणामेकताला[4] एककला चेति । किमुत्तमानामेवेयं स्थाने दर्शयति मध्यमोत्तमानां [5]नृणामपुंसा यद्गतिचेष्टितं तदेव उदात्तमध्यमोत्तमनीचानां स्त्रीणां तथा तत्कर्मकराणां कुर्यादित्युत्तमग्रहणम् ॥ १९२-१९३ ॥

सर्वग्राहकं दर्शयितुं यत्रोत्तमादिविभागो नोद्भिन्नः तत्र गतिमाह—बालानामपीति ॥ १९४ ॥

---

**अभिनव**—'गतिः' से तात्पर्य है कि गति का परिमाण चार ताल और चार कलाओं का है । अनुत्तम स्त्रियों की गति का परिमाण द्विताल ( दो ताल का ) और द्विकल ( दो कला ) होता है । उससे भी आधा अर्थात् एक ताल और एक कला परिमाण की पुरुषों की और कर्मकर भृत्यों की गति होती है । क्या उत्तम पुरुषों को यही गति है, उसे दिखाते हैं—मध्यम और उत्तम पुरुषों एवं नपुंसकों की जो गति एवं चेष्टाएँ हैं वही गति-चेष्टाएँ उदात्त, मध्यम, उत्तम एवं नीच स्त्रियों की तथा उनके कर्मकरों भृत्यों को भी होनी चाहिए, इसी बात को संकेतित करने के लिए 'उत्तम' पद का ग्रहण है ॥ १९१-१९३ ॥

**अभिनव**—सर्वग्राहकत्व को दिखलाने के लिए जहाँ पर उत्तमादि का विभाग उद्भिन्न अर्थात् स्पष्ट नहीं है उस विषय में गति को कहते हैं—'बालानामित्यादि' ।

## बाल-गति

**अनुवाद**—बालकों अथवा बालाओं को गति स्वच्छन्द पद-विन्यास (पदक्रम) वाली होती है । नाट्य-प्रयोक्ताओं को इसमें सौष्ठव का प्रयोग नहीं करना चाहिए और न प्रमाण की अपेक्षा करनी चाहिए ॥ १९४ ॥

---

१. ख.ग. स्वच्छन्दगतिविक्रमा । २. क. तस्यां ।
३. प्रमाणं च ।
४. क-क. द्विकला ।
५. क-ख. अयं सा । नृणामुदारत्वमिति पाठान्तरम् ।

[1]तृतीया प्रकृतिः कार्या नाम्ना चैव नपुंसका ।
नरस्वभावमुत्सृज्य स्त्रीगतिं तत्र योजयेत् ॥ १९५ ॥
विपर्ययः प्रयोक्तव्यः पुरुषस्त्रीनपुंसके[2] ।
स्वभावमात्मनस्त्यक्त्वा तद्भावगमनादिह ॥ १९६ ॥
[3]व्याजेन क्रीडया वाऽपि तथा भूयश्च वञ्चनात् ।
स्त्री पुंसः प्रकृतिं कुर्यात् स्त्रीभावं पुरुषोऽपि च ॥ १९७ ॥

---

तद्भावगमनादिति। यदेव रूपं यो गृह्णाति तदीयैव तस्य गतिः ॥ १९६ ॥
विपर्ययपरिग्रहे च विशिष्टार्थं कारणमाह—व्याजेनेति।

---

**अनुवाद**—तृतीया प्रकृति अर्थात् जो नाम से नपुंसक है उनमें पुरुष स्वभाव को छोड़कर स्त्रीपात्र के गति की योजना करनी चाहिए ॥ १९५ ॥

## भूमिका विपर्यय में पात्रों की गति

**अनुवाद**—स्त्री, पुरुष और नपुंसक अपने स्वभाव का परित्याग कर जिस स्वरूप को धारण किया हो उसी के भाव के अनुसार विपर्यय प्रयोग करे ॥ १९६ ॥

**अभिनव**—'तद्भावगमनादिह' जो जिस रूप को ग्रहण करता है वही उसकी गति है ॥ १९६ ॥

**विमर्श**—अभिनय की दृष्टि से भूमिका विपर्यय का बड़ा महत्त्व है । भरत ने संक्षेप में इस सिद्धान्त का प्रतिपादन किया है । भरत के अनुसार भूमिका-विपर्यय में स्त्री, पुरुष और नपुंसक पात्र अपने स्वभाव को छोड़कर दूसरे के स्वभाव को ग्रहण कर भूमिका अदा कर रसोदय का वातावरण उपस्थित करते हैं । भरत के अनुसार भूमिका विपर्यय की दो परिस्थितियाँ होती हैं—१. अपने स्वभाव का परित्याग और दूसरा तद्भावगमन अर्थात् पात्र अपये स्वभाव को छोड़कर जिस स्वभाव को ग्रहण करता है उसी के अनुसार गति ( गमन ) का प्रयोग करे ॥ १९६ ॥

**अभिनव**—विपर्यय के ग्रहण करने में विशिष्ट कारण को कहते हैं—**व्याजेनेत्यादि** ।

**अनुवाद**—किसी व्याज से, क्रीड़ा से और बार-बार वञ्चना के द्वारा स्त्री पुरुष की प्रकृति का और पुरुष स्त्री के भाव का अभिनय करे ॥ १९७ ॥

---

१. श्लोकोऽयं केषुचित् पुस्तकेषु नास्ति ।
२. क. पुरुषस्त्रीनपुंसकौ ।
३. ख. व्याजेन सेवया वाऽपि । क-न, व्यायामेन क्रीडयाऽपि ।

[1]धैर्योदार्येण सत्त्वेन बुद्ध्या तद्वच्च कर्मणा ।
स्त्री पुमांसं त्वभिनयेत् वेषवाक्यविचेष्टितैः ॥ १९८ ॥

स्त्रीवेषभाषितैर्युक्तं [2]प्रेक्षिताप्रेक्षितैस्तथा ।
[3]मृदुसन्नगतिश्चैव पुमान् स्त्रीभावमाचरेत् ॥ १९९ ॥

---

व्याजः कस्यचित्कार्यस्य साधनाय, यथा विदूषकस्य संकेतस्थाने चेटिकावस्त्रधारणम् । क्रीडा यथा इष्टजनस्याकृतौ नायिकानाम् । वञ्चनादिति यथा विदूषकं वञ्चयितुं चेटकस्य स्त्रीवेषकरणम् । अपिचेति ग्रहणात् स्त्रीपुंसयोर्नपुंसकेन सह तस्य च ताभ्यां सह विपर्ययं दर्शयति ॥ १९७ ॥

अत्रैव विपर्यये गतिविपर्यये प्रसङ्गेन व्यभिचारिभावसात्त्विकोपाङ्गाद्यभिनयविपर्ययमप्याह—धैर्यौदार्येणेति ।

---

**अभिनव**—व्याज ( छल ) किसी कार्य की सिद्धि के लिए किया जाता है। जैसे सङ्केत-स्थान में विदूषक का चेटी का वस्त्र धारण करना। क्रीडा से जैसे, नायिकाओं का प्रियजन ( पुरुष ) का आकृति का धारण करना। बञ्चना से जैसे, विदूषक की वञ्चना के लिए चेट का स्त्री का वेष धारण कर लेना। 'अपि च' पद के ग्रहण से स्त्री और पुरुष का नपुंसक के साथ और नपुंसक का स्त्री और पुरुष के साथ विपर्यय होता है, यह दिखलाया गया है।

**अभिनव**—इसो विपर्यय की अवस्था में गति के विपर्यय में प्रसङ्गवश सञ्चारीभाव एवं सात्त्विक भावों तथा उपाङ्गादि के अभिनयों में विपर्यय को कहते हैं—'धैर्येणेत्यादि'।

**अनुवाद**—धैर्य, औदार्य, सत्त्व, बुद्धि और उसी प्रकार के कर्म से तथा वेषभूषा, वाक्य एवं चेष्टाओं के द्वारा स्त्री पुरुष पात्र का अभिनय करे ॥ १९७ ॥

**अनुवाद**—इसी प्रकार स्त्रीपात्रोचित वेष-भूषा एवं भाषण ( वाक्य ) तथा प्रेक्षिताप्रेक्षित अर्थात् किसो वस्तु के देखने, न देखने के द्वारा मृदु एवं मन्द गति वाला पुरुष स्त्री भाव का आचरण करे, अभिनय करे ॥ १९८ ॥

---

१. ख. धैर्योद्धारेण ।
२. ख. ग. प्रेषिताप्रेषितैस्तथा ।
३. क. मृदुसन्वगतिश्चैव । क-द. मृदुसत्त्वगतिश्चैव ।

[1]जातिहीनाश्च या नार्यः, पुलिन्दशबराङ्गनाः ।
याश्चापि, तासां कर्तव्या तज्जातिसदृशी गतिः ॥ २०० ॥
व्रतस्थानां तपःस्थानां लिङ्गस्थानां तथैव[2] च ।
खस्थानाश्चैव नारीणां समपादं प्रयोजयेत् ॥ २०१ ॥
उद्धता येऽङ्गहाराः स्युर्याश्चार्यो मण्डलानि च ।
तानि नाट्यप्रयोगज्ञैर्न कर्तव्यानि योषिताम्[3] ॥ २०२ ॥

[4]धैर्यौदार्ये सामान्याभिनयोक्ते । ताभ्यां भावा उपलक्ष्यन्ते । बुद्धयेति स्थायित्वम् । सत्त्वेनेति सात्त्विकाः कर्मणेति [5]स्थानकादिविषयः, वेषेति आहार्यप्रकाराः, वाक्येति वाचिकगतसंस्कृतादिप्रयोगः, चेष्टितैरिति अन्तरालस्थाने त्रिपताकादयः ॥ १९८ ॥

[6]यथास्थानकगतानां पूर्वपञ्चाद्भावि तथोपवेशनात्मकमासनमपीति तद्विधमाह—तथासनविधिरिति तथैवेति गतौ[7] हि शयनमपि पूर्वपश्चाद्भावि शयनाश्रय इति शेषः ॥ २०३ ॥

---

**अभिनव**—यहाँ सामान्य अभिनय में कथित धैर्य और औदार्य का ग्रहण है । इनसे अन्य भावों का भी उपलक्षण है । जैसे, 'बुद्धया' पद से स्थायीभाव का, 'सत्त्व' से सात्त्विक भाव का, 'कर्म' से स्थानकादि विषयक अनुभावों का, 'वेष' से आहार्य अभिनय ( वेष-भूषादि ) के प्रकारों का, 'वाक्य' से वाचिक अभिनय से संस्कृत आदि भाषाओं के प्रयोग का, 'चेष्टित' पद से त्रिपताक आदि अभिनयों का उपलक्षण से ग्रहण होता है ॥ १९८ ॥

अनुवाद—जो जाति-भ्रष्ट अथवा हीन जाति की नारियाँ हैं और जो पुलिन्द शबर आदि की स्त्रियाँ हैं उन्हें अपनी जाति के अनुसार ( सदृश ) उनकी गति का प्रदर्शन करना चाहिए ॥ १९९ ॥

अनुवाद—व्रतधारिणी, तपस्विनी, लिङ्गिनी और आकाशचारिणी नारियों की गति में 'समपाद' का प्रयोग करना चाहिए ॥ २०० ॥

अनुवाद—जो उद्धत अङ्गहार है, जो चारियाँ और मण्डल हैं, नाट्यप्रयोक्ताओं को उनका प्रयोग स्त्रियों की गति में नहीं करना चाहिए ॥ २०१ ॥

---

१. ख विजातीयास्तु  २. क. तथा पुनः ।  ३. ख-ग. योषिता
४. क-ख. धैर्योदार्या  ५. क. सात्त्विकादि ।
६. क. यथास्थानगतैः  ७. क. गते । ख. गतो ।

[1]तथासनविधिः कार्यो नृणां स्त्रीणां[2] विशेषतः ।
नानाभावसमायुक्तस्तथा[3] च शयनाश्रयः ॥ २०३ ॥
[4]विष्कम्भिताञ्चितौ पादौ[5] त्रिकं किञ्चित्समुन्नतम् ।
[6]हस्तौ कट्यूरुविन्यस्तौ स्वस्थे स्यादुपवेशने[7] ॥ २०४ ॥

---

विष्कम्भेन वैशाखस्थानकोचितेन विस्तारेणाञ्चितौ विस्तीर्णान्तरौ सुन्दरौ पादौ, न त्वत्राञ्चितपादलक्षणयोगः । स्वस्थे पुंसि यदुपवेशनमासनपीठिकादौ तत्र त्रिकमुन्नतं स्यादिति सम्बन्धः । "इति शब्देन वाक्यार्थः, स्यादित्यत्र कर्तव्याख्येय" इति स्यादिति । हस्ताविति कर्कटरूपौ समाहारद्वन्द्वे ॥ २०४ ॥

---

## आसन विधान

**अभिनव—**जिस प्रकार स्थानकगत गमन आगे-पीछे होता है उसी प्रकार उपवेशनात्मक आसन में भी पूर्वपश्चाद्भाविता रहती है, इसलिए उसके प्रकार को कहते हैं—**'तथासनाविधिरिति'** ।

**अनुवाद—इस प्रकार स्त्री और पुरुषों के आसन-विधि ( बैठने की विधि ) नाना प्रकार के भावों से युक्त होनी चाहिए। इसी प्रकार उनकी शयन-विधि का भी विधान करना चाहिए ॥२०३ ॥**

**अभिनव—**'तथैव' पद से अभिप्राय है कि जैसे गति के विषय में पूर्व और पश्चाद्भाविता है उसी प्रकार शयन और शयन के आश्रय में भी पूर्वपश्चाद्भाविता है ॥ २०३ ॥

**अनुवाद—स्वस्थ उपवेशन ( बैठने ) से दोनों को विष्कम्भित एवं अञ्चित करके त्रिक को थोड़ा समुन्नत करे, फिर दोनों हाथों को कटि और जंघा पर ( ऊरु ) विन्यस्त करे ॥ २०४ ॥**

**अभिनव—**'विष्कम्भक अर्थात् वैशाख स्थानक के उचित विस्तार से अञ्चित अर्थात् विस्तीर्ण अन्तर पद से सुन्दर पादों का ग्रहण है । यहाँ पर अञ्चित पाद का लक्षणानुसारी स्वरूप अभीष्ट नही है । स्वस्थ पुरुष के आसन या पीठ पर उपवेशन

---

१. ख. अथासनविधिः । कार्यो नृणां स्थोणां विशेषतः ।
२. क. तथासनविधिः कार्यः स्त्रीणां नृणामथापि च ।
३. क-ग. तथैव ।
४. ख. ग. विष्कम्भेणाञ्चितौ ।
५. क-ख. कक्षः ।
६. ख. हस्ता। कट्यूरुविन्यस्ता ।
७. ग. बाहुशोर्षाश्रितं शिरः ।

पादः प्रसारितः किञ्चिदेकञ्चैवासनाश्रयः ।
शिरः [1]पार्श्वगतं चैव सचिन्त उपवेशने ॥ २०५ ॥
चिबुकोपाश्रितौ हस्तौ बाहुशीर्षाश्रितं शिरः ।
सम्प्रणष्टेन्द्रियमनाः शोकौत्सुक्योपवेशने[2] ॥ २०६ ॥
प्रसार्य बाहू शिथिलौ तथा चोपाश्रयाश्रितः[3] ।
[4]मोहमूर्च्छामदग्लानिविषादेषूपवेशयेत् ॥ २०७ ॥

[5]सम्प्रणष्टेन्द्रियमात्र इति पाठः। मन इति पाठे ( प्रोच्यत्वे ? ) कृते त्वध्याहृत्य सङ्गतिः कार्या ॥ २०६ ॥

अपाश्रयतीत्यादिकमाश्रितम् उपवेशयेदिति स्वार्थे णिच् आचार्ये वा कर्तृभूतत्वमात्रम् । आचार्यास्तु बाहू प्रसार्यैवासने उपवेशयेत् विश्रामयेदित्याहुः ॥ २०७ ॥

अर्थात् बैठने पर त्रिक समुन्नत होता है, यह सम्बन्ध है । 'इति' शब्द के वाक्यार्थ और 'स्यात्' से कर्त्तव्य का आख्यान है, यही स्यात् का सम्बन्ध है । वहाँ दोनों हाथ कटि और ऊरु पर कर्कट मुद्रा में रखे जाँय, यह अभिप्रेत है ॥ २०४ ॥

**अनुवाद**—चिन्तायुक्त पात्र के उपवेशन में एक पैर कुछ फैलाया हुआ और दूसरा पैर आसन पर आश्रित ( टिका हुआ ) तथा शिर पार्श्व में नत (झुका हुआ) होता है ॥ २०५ ॥

**अनुवाद**—शोकाकुल ( शोकयुक्त ) पात्र के उपवेशन में दोनों हाथ चिबुक ( ठुड्डी ) पर अञ्चित होते हैं और शिर बाहु शीर्ष अर्थात् भुजाओं के सहारे टिका हुआ होता है और मन एवं इन्द्रियाँ आकुल ( चेतना शून्य-सी ) हो जाती हैं ॥२०६॥

**अभिनव**—यहाँ 'सम्प्रणष्टेन्द्रियमात्रः' यह पाठ है। अतः 'संप्रणष्ट' शब्द केवल इन्द्रिय से सम्बद्ध है। मन से सम्बन्ध मानकर 'संप्रणष्टेन्द्रियमनाः' इस प्रकार पाठ मानने पर 'विकाल' या 'अकुल' पद का अध्याहार करके अर्थ-सङ्गति करते हैं अर्थात् शोक की दशा में आकुल मन से उपवेशन करे ॥ २०६ ॥

**अनुवाद**—मोह, मूर्च्छा, मद, श्रम, ग्लानि तथा विषाद की अवस्था में दोनों भुजाओं को फैलाकर शिथिल कर दे और किसी वस्तु के सहारे आसन पर बैठे ॥ २०७ ॥

१. क. पार्श्वानतं । पार्श्वोन्नतं । २. क. ग. भवेच्छोकोपवेशने ।
३. क. तथा चापाश्रयश्रितः । ४. क-ग. मूर्च्छामदश्रमग्लानि ।
५. क. 'संप्रणष्टशब्देनेन्द्रियमात्र' इति पाठः ।
क-क. शब्देन विशेषणेन संप्रणष्टेन्द्रियमात्र इति पाठः ।

सर्वपिण्डीकृताङ्गस्तु [1]संयुक्तः पादजानुभिः ।
[2]व्याधिव्रीडितनिद्रासु ध्याने चोपविशेन्नरः ॥ २०८ ॥

[3]तथा चोत्कटिकं स्थानं स्फिक्पार्ष्णीनां समागमः[4] ।
पित्र्ये [5]निवापे जप्ये च सन्ध्यास्वाचमनेऽपि च[6] ।
विष्कम्भितं पुनश्चैव जानुं भूमौ निपातयेत् ॥ २०९ ॥

पिण्डितत्वमङ्गानां जानुविश्लेषादूर्ध्वकायं कुटिलीकरोतीत्युत्कटं [7]संज्ञायां कटतेः । अत्र च विरलत्वं जानुनोः स्फिग्भ्यां भूमेः [8]परामर्शः पूर्वत्र तु नैतदुभयमपीति विशेषः ॥ २०८ ॥

**अभिनव**—'उपाश्रयाश्रितः' का अर्थ है अपने आश्रित वस्तु का सहारा लेना । 'उपवेशयेत्' में णिच् प्रत्यय है । अतः यहाँ केवल कर्त्तामात्र विवक्षित है । अन्य आचार्य कहते हैं कि दोनों बाहुओं को फैलाकर आसन पर बैठा दे, विश्राम करा दे ॥ २०७ ॥

**अनुवाद - व्याधि, लज्जा, निद्रा एवं ध्यान में मनुष्य मिले हुए पाद एवं जानुओं के साथ शरीर के अङ्गों को पिण्डीकृत अर्थात् सङ्कुचित कर आसन पर उपवेशन करे अर्थात् बैठे ॥ २०८ ॥**

**अभिनव**—अङ्गों के पिण्डीकृतत्व का अभिप्राय है कि जानुओं अर्थात् घुटनों के विश्लेष होने से अर्थात् अङ्गों के पिण्डीकृत होने में जानुओं एवं शरीर के ऊपरी भाग को जो संयोग ( मेल ) हो गया था उससे विघटन कर देने पर घुटने अलग होकर ऊर्ध्वकाय कुटिल ( टेढ़ा ) हो जायगा । ऐसी स्थिति उत्कटिक स्थान कहलाती है । यहाँ संज्ञा में 'कन्' प्रत्यय होकर उत्कटिक शब्द बना है। इसमें घुटनों का विरलत्व और स्फिच् अर्थात् कूल्हों का भूमि से स्पर्श होता है । पूर्व पिण्डिताङ्गत्व की अवस्था में दोनों नहीं होते, यही विलक्षणता है ॥ २०८ ॥

**अनुवाद—पितरों के तर्पण में, जप करने, सन्ध्या-बन्दन करने और आचमन में भी उत्कटिक स्थानक, स्फिच् ( कूल्हें ) और पार्ष्णि ( एड़ी ) को मिलाकर आसन पर उपवेशन करे अर्थात् विस्तृत कर फिर एक जानु को बिष्कम्भित भूमि पर गिरा दे ॥ २०९ ॥**

१. ग. सम्पाते । क-ढ. संयुक्तः । २. क. (टि०) व्याधिपीडावहिश्थेषु ।
३. ख. तथा चोत्कटिकास्थानं । ४. ग. समागमम् ।
५. ग. निर्वापसलिले । ६. आचमनेषु च ।
७. क. पुंसंज्ञायां कटेः । ८. क. परस्पर्शः ।

[1]प्रियाप्रसादने कार्यं होमादिकरणेषु च ।
[2]महीगताभ्यां जानुभ्यामधोमुखमवस्थितम् ॥ २१० ॥
देवाभिगमने [3]चैव रुषितानां प्रसादने[4] ।
शोके चाक्रन्दने [5]तीव्रे मृतानां चैव दर्शने ॥ २११ ॥
त्रासने च कुसत्त्वानां [6]नीचानाञ्चैव याचने[7] ।
होमयज्ञक्रियायाञ्च प्रेष्याणाञ्चैव कारयेत्[8] ॥ २१२ ॥
मुनीनां नियमेष्वेष भवेदासनजो विधिः ।

---

पित्र्य इति श्राद्धादौ निवापसलिल इति पितृतर्पणे, प्रतिग्रहार्थं परस्य सलिलदाने तत्प्रतिग्रहे च । सन्ध्याशब्देन तदवसरोचितं, जपध्यानादि । विष्कम्भितमिति विस्तारितमेकं भूमौ जानु द्वितीयं यथास्थितं यंत्रनिकटे ढौकनं गमनं शङ्क्यं सन्तापादिभयात् । तत्र च कार्यं मन्त्रं तदुपलक्षणम् ॥ २०९ ॥

---

**अभिनव**—'पित्र्य' पद का अर्थ है पितरों के उद्देश्य से किया जाने वाला श्राद्धादि कर्म । 'निवाप' का अर्थ है 'पितृ-तर्पण' । 'निवाप सलिले' का अभिप्राय है पितृ-तर्पण में जल लेने के लिए अर्थात् दूसरे को जल देने तथा जल लेने में । 'सन्ध्या' शब्द से सन्ध्या के अवसर के योग्य जप एवं ध्यान आदि का ग्रहण है । 'विष्कम्भित' का अर्थ है एक जानु को विस्तारित कर भूमि पर गिरा दे और दूसरे को यथास्थित रखे । यन्त्र के निकट जाने में सन्तापादि का भय रहता है, अतः इस विषय में मन्त्रणा करनी चाहिए । यह मन्त्रणा उपलक्षण है और भी उपाय करना चाहिए ॥ २०९ ॥

**अनुवाद**—प्रिया के प्रसादन ( प्रसन्न करने ) में और होम आदि धार्मिक क्रियाओं में दोनों जानुओं को पृथ्वी पर टिका कर अधोमुख करके बैठे ॥ २१० ॥

**अनुवाद**—देवताओं की वन्दना में, रुष्ट व्यक्तियों के मनाने में, शोक में, तीव्र आक्रन्दन में, मृतकों ( शव, मुर्दों ) को देखने में, कुत्सित प्राणियों के डराने में, नीच पुरुषों के याचना में, होम, यज्ञ आदि क्रियाओं में सेवा ( या सेवक ) के सम्बन्ध में इसी आसन का प्रयोग करना चाहिए और मुनिजनों के नियमों में भी इसी आसन विधि का विनियोग करना चाहिए ॥ २११-२१३ ॥

---

१. क-च.द. प्रियप्रसादने ।　२ क-द. महीमुखाभ्यां ।　३. क. कार्यं ।
४. क-च. रुषितानां च सान्त्वने ।　५. ख. तीव्रमृतानां । ग. तीव्र मृतानां ।
६. ग. दीनानां ।　७. क. (टि०) दर्शने ।　८. ग. योजयेत् ।

¹तथासनविधिः कार्यो विविधो नाटकाश्रयः ॥ २१३ ॥
स्त्रीणाञ्च पुरुषाणाञ्च बाह्यश्चाभ्यन्तरस्तथा ।
आभ्यन्तरस्तु नृपतेर्बाह्यो बाह्यगतस्य च ॥ २१४ ॥

---

अभिगमनं वन्दनम् । शोके चेति नीचानाञ्चेति सर्वत्रात्र संबध्यते। नीचानां शोकजनितो यस्तीव्राक्रन्दस्तत्रैव, नीचा यदा मृतमवलोकयन्ति । सम्बन्ध—मात्रे षष्ठीत्युभयप्राप्त्यभावान्न नियमः कुसत्त्वा शिवादयः यदा नीचान् त्रासयन्ति तदा । नीचा यदा किञ्चिद्याचन्ते तदा जानुद्वयक्षेपो भूमौ ॥ २११-२१३ (१) ॥

अथासनात्मककालसन्निवेशप्रसङ्गेन तदधिकरणेषु विधिमाह—तथासनविधिरिति ।

बाह्यः सर्वजनविषयः आभ्यन्तरो राजोचितः ॥ २१४ ॥

---

**अभिनव**—'अभिगमन' का अर्थ 'अभिवन्दन' ( वन्दना करना ) है । 'शोके च' और 'नीचानां च' इनका यहाँ सब जगह सम्बन्ध है । नीच पुरुषों का शोकजनित जो तीव्र आक्रन्द है, उसी में ( इस आसन का विनियोग होता है ) । नीच पुरुष जब मृतक को देखते हैं, ( उस समय ) । यहाँ सम्बन्ध मात्र में षष्ठी विभक्ति है, क्योंकि यहाँ कर्त्ता और कर्म दोनों में षष्ठी का नियम न होने से सम्बन्ध मात्र में षष्ठी है । 'कुसत्व' से गीदड़ आदि कुत्सित प्राणियों का ग्रहण है, ये जब नीचों का डराते हैं तब और नीच जब कुछ माँगते हैं तब दोनों जानुओं को भूमि पर पातन ( क्षेपण ) होता है ॥ २१०-२१३ (१) ॥

**अभिनव**—इसके बाद आसनात्मक कालसन्निवेश के प्रसङ्ग से आसन के विषय में विधान को कहते हैं—**'तथासनविधिरिति'** ।

**अनुवाद—नाट्य के प्रयोग में विविध प्रकार के आसन-विधान करना चाहिए । स्त्री और पुरुषों के लिए बाह्य और आभ्यन्तर दो प्रकार के आसन-विधान हैं । इनमें आभ्यन्तर आसन-विधि राजा के लिए है और बाह्य आसन-विधि बाह्यगत सामान्य जन के लिए है ॥ २१३-२१४ ॥**

**अभिनव**—अभिनवगुप्त के अनुसार बाह्य आसन-विधि सब लोगों के लिए और आभ्यन्तर-विधान राजा के लिए उचित है ॥ २१३-२१४ ॥

---

१. ग. अथासनविधिः ।

देवानां नृपतीनाञ्च दद्यात्सिहासनं द्विजाः ।
पुरोधसामात्यानां [1]भवेद्वेत्रासनं तथा ॥ २१५ ॥
[2]मुण्डासनञ्च दातव्यं सेनानीयुवराजयोः ।
[3]काष्ठासनं द्विजातीनां कुमाराणां[4] कुथासनम् ॥ २१६ ॥
एवं [5]राजसभां प्राप्य [6]कार्यस्त्वासनजो विधिः ।

वेत्रलताकृतं वेत्रासनं वेत्रासनादन्य एव रूढो वर्णकम्बलखण्डः । विस्तारिकेत्यन्ये । [7]मुण्डासनं चातुरी [8]काष्ठासनं पीठकं ॥ २१६ ॥

## पुरुषपात्र का आसन विधान

अनुवाद—हे द्विजों ! देवताओं और राजाओं के लिए सिंहासन देना चाहिए और पुरोहित एवं अमात्यों के लिए वेत्रासन देना चाहिए । सेनापति और युवराज के लिए मुण्डासन देना चाहिए । ब्राह्मणों के लिए काष्ठासन ( चौकी ) और कुमारों के लिए गलीचे या दरी का आसन देना चाहिए । इस प्रकार राजसभा में आसन विधान ( आसन की व्यवस्था ) करना चाहिए ॥ २१५-२१७ (१) ॥

अभिनव—बेंत रूपी लता का बनाया हुआ आसन 'वेत्रासन' है । इस वेत्रासन से भिन्न प्रसिद्ध रङ्गीन कम्बल खण्ड भी एक आसन है । जिसे अन्य लोग 'विस्तारिका' कहते हैं । अभिनव ने मुण्डासन का अर्थ 'चातुरी' किया है । चातुरी का अर्थ चतुराई या चतुरता है जिसका आसन से कोई सम्बन्ध नहीं प्रतीत हाता । कुछ लोग 'चातुरी' का अर्थ चतुराई से निर्मित आसन करते हैं । अन्य लोग 'मुण्डासन' के स्थान पर 'मुञ्जासन' पाठ मानकर 'मुञ्जासन' का अर्थ 'मूँज का आसन' करते हैं । किन्तु यहाँ युवराज के लिए मूँज का आसन देने का औचित्य नहीं प्रतीत होता । अन्य आचार्य 'मुण्ड' का अर्थ शिरस्, शीर्ष या उच्च करते हैं और मुण्डासन का अर्थ 'शीर्ष ( मूर्द्धन्य ) आसन या उच्च आसन करते हैं ॥ २१५-२१६ ॥

---

१. क-द. भवेदर्घासनं पुनः । २. ग. मुञ्जासनं ।
३. क.ग. काष्ठासनं ब्राह्मणानां ।
ख. कुब्जासनं द्विजातीनां । मुञ्जासनं द्विजातीनां ।
४. ख. कुमारीणां कुथासनम् । क-द. कुमाराणामथाशुभम् ।
५. ग. टि०) एवं राजासनं । ६. क-द. कार्यं आसनजो विधिः ।
७. क-ख. दण्डासनं । ८. क-ख. मयूरकं ।

[1]स्त्रीणाञ्चाप्यासनविधिं सम्प्रवक्ष्याम्यहं पुनः ॥ २१७ ॥
सिंहासनन्तु राज्ञीनां देवीनाम्मुण्डमासनम्[2] ।
[3]पुरोधोऽमात्यपत्नीनां [4]दद्याद्वेत्रासनं तथा ॥ २१८ ॥
भोगिनीनां [5]तथा चैव वस्त्रश्चर्म कुथाऽपि वा ।
[6]ब्राह्मणीतापसीनाञ्च पट्टासनमथापि च ॥ २१९ ॥
[7]वेश्यानाञ्च प्रदातव्यमासनञ्च मसूरकम् ।
शेषाणां प्रमदानान्तु भवेद् [8]भूम्यासनं द्विजाः ॥ २२० ॥

राज्ञी राजवंश्या देवी । सेनापतिपुत्र्यो राज्ञा परिणीताः भोगिन्यः [9]संगृहीतकन्याः मसूरकं वस्तुशून्यं, भूमिरेवासनं भूम्यासनम् ॥ २१८-२२० ॥

## नारी-आसन-विधान

अनुवाद—इसके बाद अब मैं स्त्रियों के लिए आसन-विधि को कहूँगा। महारानी के लिए सिंहासन, देवियों के लिए मुण्डासन, पुरोहित एवं अमात्य की पत्नियों के लिए वेत्रासन देना चाहिए ॥ २१७-२१८ ॥

अनुवाद—भोगिनी नारियों के लिए गलीचा या दरी अथवा वस्त्र एवं चर्म का आसन, ब्राह्मणी और तपस्विनियों के लिए पट्टासन ( कौशेय आसन ) तथा वैश्य एवं श्रेष्ठिजनों को स्त्रियों के लिए ( अथवा वेश्याओं के लिए पाठान्तर से ) मसूरक नामक आसन अथवा भूम्यासन ( भूमि रूप आसन ) देना चाहिए। ( पाठभेद से 'मसूरकम्' के स्थान पर 'मयूरकम्' पाठ मान कर 'मयूरासन' का ग्रहण है )। इस प्रकार वेश्याओं के लिए 'मयूरासन' होना चाहिए और अन्य नारियों के लिए भूमि का आसन होना चाहिए ॥ २१९-२२० ॥

अभिनव—'राज्ञी' का अर्थ है राजकुल में उत्पन्न देवी ( रानी )। सेनापति आदि की पुत्रियाँ, जिनका राजा ने परिणय ( विवाह ) कर लिया है, इस प्रकार की संगृहीत स्त्रियाँ 'भोगिनी' कहलाती हैं। 'भूम्यासन' का अभिप्राय भूमिरूप आसन है ॥ २१८-२२० ॥

१. क-ग. स्त्रीणां चैवासनविधिं । २. ग. मण्डलासनम् ।
३. क-द. पुरोसवां तपस्वीनां भवेत् । ४. ग. भवेद्वेत्रासनं ।
५. ग. पुनश्चैव । क-द. पुनश्चैव कृत्वा चर्म कुथा तथा ।
६. ग. ब्राह्मणीनां यतीनां च । ७. ख ग. वेश्यानाञ्च ।
क. वैश्यानामपि कार्तव्यमासनं हि मसूरकम् ।
८. ख. दिव्यासनं । ९. क-ख. पीठनं । १०. क-ख. संगीत कन्याः ।

[1]एवमाभ्यन्तरो ज्ञेयो बाह्यश्चासनजो विधिः ।
तथा स्वगृहवार्तासु च्छन्देनासनमिष्यते ॥ २२१ ॥

[2]नियमस्थमुनीनां च भवेदासनजो विधिः ।
[3]लिङ्गिनामासनविधिः कार्यो व्रतसमाश्रयः ॥ २२२ ॥

---

[4]एवमिति नरपतिसन्निधौ । अन्यदात्मस्वेच्छयेति दर्शयति—तथा स्वगृहेति । वार्ताशब्देन सेनापतेरमात्यगृहगमन इत्यादि सूचयति ॥ २२१ ॥

नियमस्थ इति कस्यचिदङ्गविष्टरोऽन्यस्य मृगाजिनम् । लिङ्गिनामिति । यथा शाक्यानां बृसो, शैवानां मुण्डासनं, क्षपणकानां वेत्रवल्कलडिम्बकम् ॥ २२२ ॥

---

**अनुवाद**—इस प्रकार बाह्य और आभ्यन्तर आसन विधियों को जानना चाहिए और अपने घर में बात-चीत के समय स्वच्छन्द ( स्वतन्त्रतापूर्वक ) आसन विधि करनी चाहिए ॥ २२१ ॥

**अभिनव**—'एवम्' पद का अभिप्राय है 'राजा की सन्निधि में'। अन्यथा अर्थात् अन्य समय में अपनी इच्छा से आसन-विधान करे, यह 'स्वगृहवार्त्तासु' इत्यादि के द्वारा दिखाते हैं। 'स्वगृहवार्त्ता' शब्द से यहाँ सेनापति अमात्य के घर जाना सूचित होता है ॥ २२१ ॥

**अनुवाद**—नियमस्थ अर्थात् नियम में स्थित मुनियों का आसन-विधान स्वतन्त्र होना चाहिए अर्थात् किसी का अङ्गविष्टर तो किसी का मृगाजिन आसन होना चाहिए। लिङ्गी सन्यासियों का आसन-विधान उनके व्रत के अनुसार होना चाहिए ॥ २२२ ॥

**अभिनव**—'नियमस्थ' का अभिप्राय है कि किसी मुनि का आसन अङ्गविष्टर तथा किसी मुनि का आसन मृगछाला होना चाहिए। 'लिङ्गिनाम्' अर्थात् लिङ्गियों का आसन व्रत के अनुसार होना चाहिए। जैसे—शाक्य मुनियों का आसन बृशी या बृषी ( कुशासन ) होना चाहिए। शैवों का मुण्डासन, क्षपणकों का आसन बेंत, वल्कल तथा डिम्बक का बना हुआ होना चाहिए। इसी बात को 'बृशी' इत्यादि के द्वारा कहते हैं ॥ २२२ ॥

---

१. एवमन्तःपुरे ज्ञेयो बाह्यश्चासने विधिः ।

२. क. नियमस्थो मुनीनां च । क-प. नियमस्थे मुनीनां च ।

३. ग. लिङ्गिनां वासनविधिः । क-द. लिङ्गिनां चासनाविधिः ।

४. क-क. एषविधिः । क-ख. एष्विति ।

[1]ब्रुसीमुण्डासनप्रायं वेत्रासनमथापि च[2] ।
होमे यज्ञक्रियायाञ्च पित्र्येऽर्थे च प्रयोजयेत् ॥ २२३ ॥
स्थानीया ये च पुरुषाः कुलविद्यासमन्विताः ।
तेषामासनसत्कारः कर्तव्य[3] इह पार्थिवैः ॥ २२४ ॥

समे समासनं दद्यात् मध्ये [4]मध्यममासनम् ।
अतिरिक्तेऽतिरिक्तञ्च होने भूम्यासनं भवेत् ॥ २२५ ॥

---

स्थानाय हिता वृद्धाः ये भवन्ति तन्निकटे व्यवस्था दृष्टादृष्टोपयोगिनी । अत एवाह—कुलविद्ये ति । आसनसत्कार इहास्यतामिति ॥ २२४ ॥

---

**अनुवाद**—होम, यज्ञ क्रिया तथा पितरों के उद्देश्य से किये जाने वाले श्राद्ध आदि में बुशी या वृषो ( कुशासन ) मुण्डासन (मुञ्जासन) तथा वेत्रासन का प्रयोग करना चाहिए ॥ २२३ ॥

## सामान्य आसनविधि

**अनुवाद**—कुल एवं विद्या से समन्वित ( कुलीन एवं दिद्वान् ) जो स्थानीय पुरुष हैं उनका आसन-सत्कार राजा को 'इह आस्यताम्' अर्थात् 'यहाँ बैठिये' इस प्रकार करना चाहिए ॥ २२४ ॥

**अभिनव**—'स्थानीयाः' का अभिप्राय है स्थानों अर्थात् आश्रमादि स्थानों के लिए हित करने वाले जो वृद्ध हैं जिनके निकट दृष्ट और अदृष्ट के उपयोगिनी व्यवस्था होती है । इसलिए कहते हैं कि कुल और विद्या से सम्पन्न वृद्धों का आसन-सत्कार 'यहाँ आइये, बैठिये' इस प्रकार कहकर करना चाहिए ॥ २२४ ॥

**अभिनव**—आसन के विषय में विभाग करते हैं—

**अनुवाद**—सम अर्थात् बराबर वालों के लिए 'सम' आसन देना चाहिए, मध्यम पात्रों के लिए 'मध्यम' और अतिरिक्त अर्थात् उत्तम पात्रों के लिए विशिष्ट ( अतिरिक्त ) आसन तथा हीन पात्रों के लिए भूम्यासन अर्थात् भूमि रूप आसन का विधान करना चाहिए ॥ २२५ ॥

---

१. ख. दण्डमुण्डवृषीप्राय । ग. वृषीमुण्डासनप्रायं ।
२. क-ग. वा । ३. क-न. कर्त्तव्यो गुरुपार्थिवैः ।
४. क-ग. मध्यमे मध्यमासनम् ।

उपाध्यायस्य नृपतेर्गुरूणामग्रतो बुधैः ।
भूम्यासनन्तथा[1] कार्यमथवा काष्ठमासनम् ॥ २२६ ॥
नौनागरथयानेषु [2]भूमिकाष्ठासनेषु च ।
सहासनं न दुष्येत गुरूपाध्यायपार्थिवैः[3] ॥ २२७ ॥

---

तत्र विभागमाह—सम इति तत्तुल्यजातिविद्यः । सममिति त्रित्वाच्चासनापेक्षया मध्य इति किञ्चिदूनेन, मध्यममिति स्वासनात्प्रमाणतोऽप्यूनं हीन इति स्वापेक्षया भूम्या सह भूमिरेव इहास्यतामिति निर्दश्या । स एव तस्यासनसत्कारः ॥ २२५ ॥

काष्ठमिति एकमेव दीर्घं भरसहं पर्यङ्कं दर्शयितुं काष्ठमित्युक्तं न तु काष्ठमयमिति ॥ २२६ ॥

---

**अभिनव**—'सम' का अभिप्राय है जो जाति एवं विद्या में तुल्य ( समान ) हों । आसन चार प्रकार के होते है—सम, मध्य, अतिरिक्त अर्थात् उच्च और भूमि । 'सम' तीनों की अपेक्षा से सम । 'मध्य' आसन उससे कुछ कम अर्थात् अपने आसन के प्रमाण से थोड़ा न्यून ( कम ) । 'हीन' अर्थात् अपनी अपेक्षा से हीन । भूम्यासन अर्थात् भूमि हो आसन । 'यहाँ बैठिए' इस प्रकार का निर्देश भूमि हो हीन पात्रों का आसन है यह बतलाया गया है । इस प्रकार बैठने के लिए निवेदन करना आसन-सत्कार है ॥ २२५ ॥

**अनुवाद—विद्वानों को उपाध्याय, नृपति और गुरुजनों के समक्ष भूमि रूप आसन अथवा काष्ठ के आसन पर बैठना चाहिए ॥ २२६ ॥**

**अभिनव**—एक ही लम्बे भार को सहन करने वाले पर्यङ्क ( पलंग ) को दिखलाने के लिए 'काष्ठ' यह कहा गया है, न कि काष्ठमय आसन अर्थात् यहाँ काष्ठ का प्रयोग है । काष्ठमय आसन का प्रयोग नहीं है ॥ २२६ ॥

**अनुवाद—नौका, हाथो और रथ यान में, भूमि और काष्ठ के आसन पर गुरु, उपाध्याय के साथ बैठने पर आसन-दोष अथवा ( कोई दोष ) नहीं है ॥२२७॥**

---

१. ग. सदा । २. ख. तथा काष्ठासनेषु च ।
३. क-ख. उपाध्याये गुरौ नृपे ।

आकुञ्चितं समञ्चैव प्रसारितविवर्तने[1]।
उद्वाहितं [2]नतञ्चैव शयने कर्म कीर्त्यते ॥ २२८ ॥
[3]सर्वैराकुञ्चितैरङ्गैः शय्याविद्धे तु जानुनी।
स्थानमाकुञ्चितं नाम [4]शीतार्तानां प्रयोजयेत् ॥ २२९ ॥

---

अथ शयनसन्निवेशनमाह—आकुञ्चितमिति। विक्। या निजशरीरस्य कुटिलीकरणात्सा स्यात्। बाहु (मध्यम ?) प्रसारणे विक्षेपयोगात् पार्श्वे[5] संनिवेशन-वशात्। पूर्वकायस्यापरकायस्योर्ध्वनयनं [6]नान्यशयनसंनिवेशात् ॥ २२८ ॥

---

## शयन-विधि

**अभिनव**—अब इसके बाद शयन के सन्निवेश को कहते हैं—**'आकुञ्चित-मित्यादि'**।

**अनुवाद—आकुञ्चित, सम, प्रसारित, विवर्त्तित, उद्वाहित और नत ये शयन में छः प्रकार के कर्म कहे जाते हैं ॥ २२८ ॥**

**अभिनव**—जो स्थिति ( सङ्केत ) अपने शरीर के कुटिलीकरण से होती है वह आकुञ्चित है। पूर्व काय अर्थात् शरीर के ऊपरी भाग के समीप में उपवेशन के कारण बाहुओं के फैलाने में विक्षेप होता है और शयन पर दूसरे के सन्निवेश ( बैठ जाने ) से अपरकाय अर्थात् शरीर के नीचे के भाग को ऊपर ले जाने में भी विक्षेप होता है। अतः अपने शरीर के कुटिलीकरण से जो निर्देश है वह 'आकुञ्चित' कहलाता है ॥ २२८ ॥

## आकुञ्चित स्थान

**अनुवाद—जिसमें समस्त अङ्ग सङ्कुचित अर्थात् सिकुड़े हुए हों और दोनों घुटने शय्या ( बिछौने ) से आविद्ध (सटे हुए) हों, उसे 'आकुञ्चित' स्थान कहते हैं। शीत से पीड़ित पात्रों के लिए उस स्थान का प्रयोग होता है ॥ २२९ ॥**

---

१. क-न. प्रसारितविवर्त्तिते।
२. ख. समञ्चैव। ग. तथा चैव।
क-न. नते षोढ़ा शय्यास्थानानि निर्दिशेत्।
३. ख. स्वैरमाकुञ्चितैरङ्गैः शल्यविद्धेषु जानुनी।
४. ख-ग. शीतानान्तु।
५. क-ख. सन्निवेशनात्।
६. क-ख. ऊर्ध्वशयनं।

उत्तानितमुखं चैव [1]स्रस्तमुक्तकरं तथा ।
समं नाम [2]प्रसुप्तस्य स्थानकं संविधीयते ॥ २३० ॥
एकं भुजमुपाधाय सम्प्रसारितजानुकम् ।
स्थानं प्रसारितं नाम [3]सुखसुप्तस्य कारयेत् ॥ २३१ ॥
अधोमुखस्थितञ्चैव [4]विवर्तितमिति स्मृतम् ।
शास्त्रक्षतमृतोत्क्षिप्तमत्तोन्मत्तेषु कारयेत् ॥ २३२ ॥
[5]अंसोपरि शिरः कृत्वा कूर्परक्षोभमेव च ।
उद्वाहितन्तु विज्ञेयं लीलया [6]वेशने प्रभोः ॥ २३३ ॥

## सम-स्थान

**अनुवाद**—जिसमें मुख उत्तानित ( ऊपर की ओर ) और दोनों हाथ शिथिल एवं मुक्त ( खुले हुए ) हों वह 'सम-स्थान' कहलाता है। प्रसुप्त अर्थात् नींद में सोये हुए पात्र के लिए इस स्थान का प्रयोग होता है ॥ २३० ॥

## प्रसारित स्थान

**अनुवाद**—जिसमें एक भुजा को तकिया बनाकर जानुओं ( घुटनों ) को फैलाकर शयन होता है, उसे 'प्रसारित-स्थान' कहते हैं। सुख से सोये हुए व्यक्ति के अभिनय में इस स्थान का प्रयोग किया जाता है ॥ २३१ ॥

## विवर्तित-स्थान

**अनुवाद**—जिसमें अधोमुख अर्थात् मुख को नीचा करके शयन होता है उसे 'विवर्त्तित' कहते हैं। शस्त्रक्षत ( शस्त्र-प्रहार ), मृत, उत्क्षिप्त, मत्त एवं उन्मत्त व्यक्तियों के लिए इस आसन का प्रयोग होता है ॥ २३२ ॥

## उद्वाहित-स्थान

**अनुवाद**—जिस शयन में शिर को कन्धे पर रखकर ( टिकाकर ) और केहुनी को मोड़कर शयन किया जाता है उसे 'उद्वाहित' समझना चाहिए। लीला-पूर्वक स्वामी के बैठने में इसका प्रयोग होता है ॥ २३३ ॥

---

१. क. प्रत्यङ्मुक्तकरं तथा । ख. ग. स्रस्तमुत्तरकं तथा ।
२. ख. ग. तु सुप्तस्य ।　　३. ख. ग. खलु सुप्तस्य ।
४. ख. ग. विकर्तनमिति स्मृतम् ।
५. क-ग. हस्तोपरि ।　　६. क. ग. वचने ।

ईषत्प्रसारिते जङ्घे यत्र [1]स्रस्तौ करावुभौ ।
आलस्यश्रमखेदेषु नतं स्थानं विधीयते ॥ २३४ ॥

गतिप्रचारस्तु मयोदितोऽयं
नोक्तश्च यः सोऽर्थवशेन साध्यः[2] ।
अतः परं [3]रङ्गपरिक्रमस्य
वक्ष्यामि कक्षां [4]प्रविभागयुक्ताम् ॥ २३५ ॥

इति भारतीये नाट्यशास्त्रे गतिप्रचारो नाम द्वादशोऽध्यायः[5] ।

---

अर्थवशेनेति लौकिकेनेत्यर्थः । अथैतदुपसंहृताध्यायानन्तरावकाशं सङ्गति-प्रदर्शनपूर्वकमाह—अतः परमिति । रङ्गे यत्परिक्रमात् परिक्रमणाद् वृत्ते गत्यध्याये निरूपितं तदुपयोगः कक्ष्याविशेषविभाग इति शिवम् ॥ २३५ ॥

---

## नत-स्थान

अनुवाद—जिसमें दोनों जङ्घाएँ थोड़ी फैली हुई हो और दोनों हाथ शिथिल हों, उसे 'नत-स्थान' कहते हैं। आलस्य, थकावट, खेद में इसकी योजना होती हैं ॥ २३४ ॥

अनुवाद—इस प्रकार मैंने इस गति-प्रचार को कहा है और जो बातें मैंने नहीं बतलाई है उसे प्रयोजन के अनुसार सिद्ध कर लेना चाहिए। इसके बाद मैं रङ्गपरिक्रम के विभाग-युक्त कक्ष्याओं का कथन करूँगा अर्थात् इसके बाद मैं रङ्गमञ्च पर परितः क्रमण के कक्ष्या-विभाग का कथन करूँगा ॥ २३५ ॥

इस प्रकार भारतीय नाट्यशास्त्र में गति-प्रचार नामक बारहवाँ अध्याय समाप्त हुआ ॥ १२ ॥

---

१. क. सृष्टौ ।
२. क-द. शास्त्रतः ।
३. ख. ग. रङ्गविधिक्रमस्य ।
४. क. ग. कक्ष्यान्तरसंविधानम् ।
५. ब. नवोदशोऽध्यायः ।

यावद्गतिभेदविधिप्रकटनमध्यायमिह विवृणुते
स्मरमथनचरणसरसिजपरागभूतोऽभिनवगुप्तः ।

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाटचवेदविवृतावभिनव-
भारत्यां गत्यध्यायो [1]द्वादशः समाप्तः

---

**अभिनव**—'अर्थवशेन' का अभिप्राय है लौकिक व्यवहार से । इसके बाद इस अध्याय के उपसंहार के बाद अगले अध्याय के अवकाश देने के लिए अर्थात् अगले अध्याय का प्रारम्भ को संगति के लिए कहते हैं—**अतः परिमिति** । रङ्गमञ्च पर परिक्रमण ( घूमने ) से सम्पन्न होने वाले गत्यध्याय अर्थात् पिछले अध्याय में जिसका निरूपण किया गया है उसका उपयोग कक्ष्याविशेष के विभाग में होता है, ऐसा कहेंगे । यहाँ 'इति शिवम्' अध्याय की समाप्ति का सूचक है ।

**अभिनव**—स्मर अर्थात् कामदेव का मथन ( विनाश ) करने वाले भगवान् शिव के चरणकमल के परागभूत आचार्य अभिनवगुप्त ने गति के जितने भेद हैं, उनके प्रकाशन करने वाले अध्याय की व्याख्या पूरी कर दी अथवा गति के समस्त भेदों के प्रकाशन करने की विधि बतलाने वाले बारहवें अध्याय की विवृत्ति ( व्याख्या ) पूरी कर दी ।

इस प्रकार श्रीमहामाहेश्वर अभिनवगुप्तपादाचार्य विरचित नाट्यवेदविवृत्ति अभिनवभारती में गत्यध्याय नामक बारहवाँ अध्याय समाप्त हुआ ॥ १२ ॥

इति डॉ० पारसनाथद्विवेदिविरचितायामभिनयभारत्याः
मनोरमाख्यायां हिन्दी व्याख्यायां गतिप्रचारो नाम द्वादशोऽध्यायः ॥ १२ ॥

इस प्रकार डॉ० पारसनाथद्विवेदी द्वारा रचित
अभिनवभारती की हिन्दी व्याख्या में बारहवां अध्याय
समाप्त हुआ ॥ १२ ॥

●

---

१. ख. त्रयोदशोऽध्यायः ।

## अभिनवभारतीस्वीकृतपाठक्रमाद्

## भिन्नपाठक्रमवान् द्वादशोऽध्यायः

### गतिप्रचारः

एवं व्यायामसंजातं कार्यं मण्डलकल्पनम् ।
अत ऊर्ध्वं प्रवक्ष्यामि गतिस्तु प्रकृतिस्थिताः ॥ १ ॥
तत्रोपवहनं कृत्वा भाण्डवाद्यपुरस्कृतम् ।
यथा मार्गरसोपेतं प्रकृतीनां प्रवेशनम् ॥ २ ॥
ध्रुवायां संप्रवृत्तायां पटे चैवापकर्षिते ।
कार्यः प्रवेशः पात्राणां नानार्थरससंभवः ॥ ३ ॥
स्थानं तु वैष्णवं कार्यमुत्तमे मध्यमे तथा ।
समुन्नतं समं चैव चतुरश्रमुरस्तथा ॥ ४ ॥
बाहुशीर्षे प्रसन्ने च नात्युत्क्षिप्ते च कारयेत् ।
ग्रीवाप्रवेशः कर्त्तव्यो मयूराञ्चितमस्तकः ॥ ५ ॥

---

### हिन्दी-अनुवाद

अनुवाद—इस प्रकार पिछले अध्याय में व्यायाम अर्थात् चारियों के संयोग में बनने वाले मण्डलों को कल्पना करनी चाहिए। इसके बाद पात्रों को गतियों का वर्णन करूँगा ॥ १ ॥

अनुवाद—पात्रों के प्रवेश के समय भाण्ड-वाद्यों के साथ मार्ग अर्थात् देश-काल और रसों से समन्वित उपवहन ( उपोहन ) क्रिया सम्पन्न करके ध्रुवा-गान के सम्यक् प्रयोग किये जाने पर और जवनिका ( परदे ) हटा दिये जाने पर नानार्थ रस के सर्जक पात्रों का प्रवेश करना चाहिए ॥ २-३ ॥

अनुवाद—प्रवेश के समय उत्तम तथा मध्यम पात्र वैष्णव स्थानक में स्थित रहे फिर वक्षःस्थल को समुन्नत, सम और चतुरस्र तथा बाहु एवं शिर को स्थिर रखे और अत्यन्त उत्क्षिप्त न करे तथा ग्रीवा प्रदेश को मोर के समान अञ्चित करना चाहिए ॥ ४-५ ॥

कर्णाभ्यां बाहुशिरसी स्यातामष्टाङ्गुलस्थिते।
उरसश्चापि चिबुकं चतुरङ्गुलसंस्थितम् ॥ ६ ॥
हस्तौ तथैव कर्तव्यौ कटिनाभितटस्थितौ।
दक्षिणे नाभिसंस्थस्तु वामः कटितटे स्थितः ॥ ७ ॥
पादयोरन्तरं कार्यं द्वौ तालावर्धमेव च।
पादोत्क्षेपश्च कर्तव्यः स्वप्रमाणविनिर्मितः ॥ ८ ॥
चतुस्तालो द्वितालश्चाप्येकतालस्तथैव च।
चतुष्तालस्तु देवानां पार्थिवानां तथैव च ॥ ९ ॥
द्वितालश्चैव मध्यानां तालः स्त्रीनोचलिङ्गिनाम्।
चतुष्कलोऽथ द्विकलस्तथा ह्येककलः पुनः ॥ १० ॥
चतुष्कलो ह्युत्तमानां मध्यानां द्विकलो भवेत्।
तथा चैककलः पातो नीचानां संप्रकीर्तितः ॥ ११ ॥
स्थितं मध्यं द्रुतं चैव समवेक्ष्य लयं बुधः।
यथाप्रकृति नाट्यज्ञो गतिमेधं प्रयोजयेत् ॥ १२ ॥

---

अनुवाद—कान से आठ अङ्गुलि की दूरी पर बाहु और शिर को स्थित करे और चिबुक को उरस् अर्थात् वक्षःस्थल से चार अङ्गुलि की दूरी पर स्थित करे ॥ ६ ॥

अनुवाद—इसी प्रकार दोनों हाथों को कटि और नाभि तट पर स्थित करे। उसमें दाहिना हाथ नाभि पर और बायां हाथ कटि पर स्थित करे ॥ ७ ॥

अनुवाद—पात्र अपने पैरों को ढाई ताल के अन्तर पर रखे। फिर चार ताल, दो ताल और एक ताल के प्रमाण के अनुसार पैरों का उत्क्षेपण करे। उनमें चार ताल देवताओं और राजाओं के लिए, दो ताल मध्यम पात्रों के लिए और एक ताल स्त्रियों तथा नीच पात्रों के लिए है। इस प्रकार पैरों का उत्क्षेपण चतुष्ताल, द्विताल और एक ताल के प्रमाण के अनुसार करना चाहिए ॥ ८-१० ॥

अनुवाद—उनमें उत्तम पात्रों का चार कला का, मध्यम पात्रों का दो कला का और नीच पात्रों का एक कला का पाद-पात कहा गया है ॥ ११ ॥

अनुवाद—नाट्यवेत्ता विद्वान् इस प्रकार स्थित, मध्य और द्रुत लयों को अच्छी तरह समझकर पात्रों के अनुसार गति का प्रयोग करे ॥ १२ ॥

स्वाभाविकोत्तमगतौ जानुं कुर्यात्कटीसमम् ।
युद्धचारीप्रचारेषु जानु स्तनसमं भवेत् ॥ १३ ॥
अयं विधिस्तु कर्तव्यः स्वच्छन्दगमनं प्रति ।
संभ्रमोत्थानरोषेषु प्रमाणं न विधीयते ॥ १४ ॥
दृप्तानां दैत्ययक्षाणां तथा पन्नगरक्षसाम् ।
चतुस्तालप्रमाणेन कर्तव्या तु गतिर्बुधैः ॥ १५ ॥
दिवौकसां तु शेषाणां मध्यमा गतिरुच्यते ।
तत्रापि चोत्तमा ये तु तेषां देवैः समा गतिः ॥ १६ ॥
पुलिन्दाः शबराश्चैव शेषा ये म्लेच्छजातयः ।
तेषां देशानुरूपेण कार्यं गतिविचेष्टितम् ॥ १७ ॥
जलाशयमृगव्यालपशुश्वापदपक्षिणाम् ।
देशजातिसमुत्थेन गतिं भावेन योजयेत् ॥ १८ ॥
स्थितं मध्यं द्रुतं चैव समवेक्ष्य लयं बुधैः ।
पादयोः पतनं सम्यक्प्रकुर्वीत यथाक्रमम् ॥ १९ ॥

---

अनुवाद—उत्तम पात्रों की स्वाभाविक गति में जानु को कटि के सम ( बराबर ) रखे और युद्धचारी के प्रचार में जानु को स्तन ( वक्षस्थल ) के बराबर रखे ॥ १३ ॥

अनुवाद—यह विधि ( विधान ) स्वच्छन्द-गमन के लिए करनी चाहिए। सम्भ्रम अर्थात् घबड़ाकर उठने में और रोष ( क्रोध ) में कोई विधान नहीं है ॥१४॥

अनुवाद—दृप्त, दैत्य, यक्ष, पन्नग और राक्षसों की गति विद्वानों को चार ताल के प्रमाण से करनी चाहिए ॥ १५ ॥

अनुवाद—अन्य द्युलोकवासियों की मध्यमा गति कही गई है। उनमें जो उत्तम पात्र है उनकी गति देवताओं के समान होनी चाहिए ॥ १६ ॥

अनुवाद—पुलिन्द, शबर और शेष जो म्लेच्छ जातियाँ हैं, देश के अनुसार उनकी गति एवं चेष्टाएँ होनी चाहिए ॥ १७ ॥

अनुवाद—जलाशय, मृग, व्याल, पशु, श्वापद और पक्षियों की गति (चाल) देश और जाति के अनुसार संयोजित करे ॥ १८ ॥

अनुवाद—विद्वानों को स्थित, मध्य और द्रुत लय को अच्छी तरह देखकर अच्छी तरह पाद-पातन करना चाहिए ॥ १९ ॥

स्थैर्योपपन्ना गतिरुत्तमानां मध्या गतिर्मध्यमसंस्थितानाम् ।
द्रुता गतिश्च प्रचुराधमानां लयत्रयं सत्त्ववशेन योज्यम् ॥ २० ॥

चतुष्कलं तूत्तमानां मध्यानां द्विकलं भवेत् ।
तथा चैककलं पातं नीचानां संप्रयोजयेत् ॥ २१ ॥

यः समैः संहितो गच्छेत्तत्र कार्यो लयाश्रयः ।
चतुष्कलश्च द्विकलस्तथा चैककलः पुनः ॥ २२ ॥
अथ मध्यमनीचैस्तु गच्छेत्संपरिवारितः ।
चतुष्कलस्तथार्धं च तथा चैककलो भवेत् ॥ २३ ॥

एवमेव तु विज्ञेयः कलानां गमने विधिः ।
पुनर्गतिप्रचारस्य प्रयोगं शृणुतानघाः ? ॥ २४ ॥
पार्श्वाक्रान्तैः सललितैः पार्श्वाद्यान्वितैरथ ।
रङ्गकोणोन्मुखो गच्छेत्सम्यक्पञ्चपदानि तु ॥ २५ ॥

---

अनुवाद—उत्तम पात्रों की गति स्थिरता से युक्त ( स्थित ) लय में, मध्यम पात्रों की गति मध्य ( मध्य लय में ) तथा अधम पात्रों की गति द्रुत लय में होनी चाहिए। इस प्रकार सत्त्व के अनुसार तीनों लयों को योजना करनी चाहिए ॥ २० ॥

अनुवाद—उत्तम पात्रों का पाद-पात चतुष्कल, मध्यम पात्रों का द्विकल और नीच पात्रों पाद-पात एक कल का होना चाहिए ॥ २१ ॥

अनुवाद—जहाँ सम स्थिति वाले पात्रों के साथ चलना हो, तो वहाँ गति लय ( स्थिर, मध्य, द्रुत ) के आधार पर चतुष्कल, द्विकल और एककल के अनुसार होनी चाहिए ॥ २२ ॥

अनुवाद—जब मध्यम और नीच पात्रों के साथ चलना हो तो चतुष्कल, द्विकल और एककल के अनुसार चलना चाहिए ॥ २३ ॥

अनुवाद—हे अनघ ! इस प्रकार कला के विषय में यह विधि समझनी चाहिए। अब गति-प्रचार के प्रयोग को सुनिये ॥ २४ ॥

अनुवाद—वाद्य-ध्वनि से युक्त, पार्श्वक्रान्ता चारी के अनुसार सुन्दर ललित पैरों से रङ्गमञ्च के कोण में उन्मुख होकर पाँच पग चले ॥ २५ ॥

एवं गतागतैर्गत्वा पदानामेव विंशतिम् ।
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणस्य च ॥ २६ ॥

रङ्गे विकृष्टे भरतेन कार्यो गतागतैः पादगतिप्रचारः ।
त्र्यश्रस्त्रिकोणे चतुरश्ररङ्गे गतिप्रचारश्चतुरश्र एव ॥ २७ ॥

द्रुता गतिस्तु कर्तव्या द्विकला पादपातने ।
ज्येष्ठे चतुष्कला कार्या द्विकला तत्र मध्यमे ॥ २८ ॥

द्विकला चोत्तमे यत्र मध्ये त्वेककला भवेत् ।
कलाप्रमाणं मध्ये च नीचे त्वर्धकला ततः ॥ २९ ॥

एवमर्धार्धहानिं तु कलानां संप्रयोजयेत् ।
उत्तमानां गतिर्या तु न तां मध्येषु योजयेत् ॥ ३० ॥

या गतिश्चैव मध्यानां न तां नीचेषु योजयेत् ॥ ३१ ॥

उत्तमानां मयोक्ता तु गतिर्विप्राः यथायथम् ।
मध्यानामधमानां च गतिं वक्ष्याम्यहं पुनः ॥ ३२ ॥

---

अनुवाद—इस प्रकार आने-जाने के प्रकार से पैरों के बीस पग ( कदम ) चलकर बाये पैर से वेध करे और फिर दक्षिण पाद से विक्षेप करे ॥ २६ ॥

अनुवाद—विकृष्ट रङ्गपञ्च पर अभिनेता के बार-बार आने-जाने के प्रकार से पाद-प्रचार करे। त्रिकोण रङ्गमञ्च पर त्र्यस्र और चतुष्कोण रङ्गमञ्च पर चतुरस्र गति प्रचार करना चाहिए ॥ २७ ॥

अनुवाद—पाद-पातन में द्रुत लय के अनुसार दो कला की गति होनी चाहिए। जब उत्तम पात्रों की गति चार कला प्रमाण की हो तो मध्यम पात्रों की गति दो कला प्रमाग की होनी चाहिए और जहाँ पर उत्तम पात्र की गति दो कला को हो तो मध्यम पात्र की गति एक कला को होनी चाहिए और जब मध्यम पात्रों की गति एक कला की हो तो अधम पात्रों की गति अर्द्धकला प्रमाण की होनी चाहिए ॥२८-२९ ॥

अनुवाद—इस प्रकार कलाओं का प्रमाण आधा-आधा कम करके प्रयोग करना चाहिए। उत्तम पात्रों की जो गति हो, उसे मध्यम पात्र की गति में प्रयोग नहीं करना चाहिए ॥ ३० ॥

वणिजां मन्त्रिणां चैव गतिः कार्या स्वभावजा ।
अतिक्रान्तपदैः सा तु द्वितालान्तरगामिभिः ॥ ३३ ॥
कृत्वा नाभितटे हस्तमुत्थानं खटकामुखम् ।
आद्यं चारालमुत्तानं कुर्यात्पार्श्वस्तनान्तरे ॥ ३४ ॥
न निषण्णं न च स्तब्धं न चैव परिवाहितम् ।
कृत्वा गात्रं तथा गच्छेत्तेन वाद्यक्रमेण तु ॥ ३५ ॥
हासे त्वथ गतिः कार्या तथा खञ्जनवामने ।
द्विकलार्धप्रयोगेषु (कुहको दाम्भिकः) कुहकाभिनयं प्रति ॥ ३६ ॥
खञ्जे गतिस्तु कर्तव्या स्तब्धैकचरणाश्रया
तथा द्वितीयः कार्यस्तु पादोऽग्रतलसंचरः ॥ ३७ ॥
स्तब्धेनोन्नमनं कार्यमङ्गस्य चरणेन तु ।
गमने च निषण्णः स्यात्तथान्यचरणाश्रये ॥ ३८ ॥

---

अनुवाद—जो गति मध्यम पात्रों की बताई गई है उसे अधम पात्रों की में प्रयोग न करे। हे विप्रों ! मैंने उत्तम पात्रों की गति बतलाई है। अब मध्यम और अधम पात्रों की गति बतलाता हूँ। वणिक् ( बनियों ) और मन्त्रियों की गति उनके स्वभाव के अनुसार होनी चाहिए ॥ ३१-३२ ॥

अनुवाद—बनियों और सचिवों की गति दो ताल के अन्तर पर अतिक्रान्त चारी में होनी चाहिए। इसमें खटकामुख हस्त को उत्तान करके नाभि पर रखकर, फिर अराल मुद्रा में एक हस्त को उत्तान करके दोनों स्तनों के मध्य में पार्श्व में रखे। शरीर को स्थित, स्तब्ध और परिवाहित ( हिलाते हुए ) न रखकर वादन के क्रम से चले ॥ ३३-३५ ॥

अनुवाद—हास्य उत्पन्न करने के लिए लूले, लंगड़े और बौने की गति से चलनी चाहिए। दम्भी अथवा ईर्ष्यालु व्यक्तियों की गति २½ कला की होनी चाहिए।

अनुवाद—खञ्ज व्यक्ति की गति में एक पैर स्तब्ध रखना चाहिए तथा दूसरा पैर अग्रतलसञ्चर में होना चाहिए। इसमें स्तब्ध पैर से शरीर का उत्थापन करना चाहिए और गमन में दूसरे पैर को निषण्ण रखे। लंगड़े व्यक्ति की गति में यही क्रम रखना चाहिए, पैर के तलवे में चोट, घाव होने, काँटा चुभने में इसी गति का प्रदर्शन करना चाहिए ॥ ३६-३८ ॥

एष खञ्जप्रयोगेषु तलशल्यक्षते तथा ।
पादेनाग्रतलेनाथ गतिः कार्याऽञ्चितेन तु ॥ ३९ ॥
निषण्णदेहा कर्तव्या नतजङ्घा तथैव तु ।
सर्वसंकोचिताङ्गी च वामने गतिरिष्यते ॥ ४० ॥
न तस्यातिक्रमः कार्यो विक्षेपश्चरणस्य तु ।
उद्वाहिता चूर्णपदैः सा कार्या कुहकात्मिका ॥ ४१ ॥
विदूषकस्यापि गतिर्हास्यत्रयविभूषिता ।
अङ्गहास्यं कार्यहास्यं हास्यं नेपथ्यजं तथा ॥ ४२ ॥
कुब्जः खञ्जोऽथ खलतिर्दन्तुरो विकृताननः ।
यत्तादृशो भवेद्विप्राः ! अङ्गहास्यं तु तद्भवेत् ॥ ४३ ॥
यदा तु बकवद् गच्छेदुल्लोकितविलोकितैः ।
अत्यायतपदत्वाच्चाप्यङ्गहास्यो भवेत्तु सः ॥ ४४ ॥
चीरचर्ममषीभस्मगैरिकादिविभूषणैः ।
यत्तादृशो भवेद्विप्राः ! हास्यं नेपथ्यजं तु तत् ॥ ४५ ॥

---

अनुवाद—अग्रतल सञ्चर तथा अञ्चित पैर से शरीर को स्थित एवं जङ्घा को नत ( झुका हुआ ) करके पङ्गु-पात्र का अभिनय करना चाहिए ॥ ३९ ॥

अनुवाद—बौने पात्र की गति में सम्पूर्ण अङ्ग को सङ्कुचित रखना चाहिए । उसका अतिक्रमण और पैरों का विक्षेप नहीं करना चाहिए ॥ ४० ॥

अनुवाद—तीन प्रकार के हास्यों से विभूषित चूर्णपदों से उद्वाहित दम्भ अथवा ईर्ष्या से युक्त विदूषक की गति का अभिनय करना चाहिए ॥ ४१ ॥

अनुवाद—अङ्गकृत हास्य, कार्यहास्य और नेपथ्यज हास्य ये तीन प्रकार के हास्य होते हैं। हे मित्रों ! दन्तुर ( बड़े-बड़े दाँतों वाला ) गञ्जा, कुबड़ा, लंगड़ा और विकृत मुख वाले इस प्रकार के विदूषक का प्रवेश हो तो 'अङ्गहास्य' कहलाता है। यदि वही पात्र बगुले की तरह ऊपर-नीचे देखते हुए और लम्बे-लम्बे डग भरते हुए चले तो भी 'अङ्गहास्य' होता है ॥ ४२-४४ ॥

अनुवाद—चीर ( चिथड़े ), चर्म, मसी ( स्याही ) भस्म और गैरिक ( गेरु ) आदि से विभूषित पात्र जहाँ हों, वह नेपथ्यज हास्य कहलाता है ॥ ४४-४५ ॥

कार्यहास्यं तु विज्ञेयमसंवद्धप्रभाषणैः ।
अनर्थवाक्यैर्विविधैस्तथा चाश्लीलभाषणैः ॥ ४६ ॥
तस्य तु प्रकृतिं ज्ञात्वा तथा भावं विचक्षणः ।
गतिप्रचारं विभजेन्नानावस्थान्तरात्मकम् ॥ ४७ ॥
स्वभावजायां विन्यस्य कुटिलं वामके करे ।
दक्षिणं चैव हस्तं तु कुर्याच्चतुरकं तथा ॥ ४८ ॥
पार्श्वमेकं शिरश्चापि हस्तं चरणमेव च ।
पर्यायतः सन्नमयेल्लयतालवशानुगम् ॥ ४९ ॥
स्वभावजाता तस्यैषा गतिरन्या विकारजा ।
लाभे तथा च भुक्तस्य तुष्टे चापि गतिर्भवेत् ॥ ५० ॥
शकारस्यापि कर्तव्या गतिश्चञ्चलदेहिका ।
वस्त्राभरणसंस्पर्शं सम्यक् पञ्चपदानि तु ॥ ५१ ॥
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणेन च ।
परिवृत्य द्वितीयं तु गच्छेत्कोणं ततः परम् ॥ ५२ ॥

---

अनुवाद—असम्बद्ध भाषण, निरर्थक और विकार युक्त अश्लील भाषण से युक्त हास्य 'कार्यहास्य' कहलाता है ॥ ४६ ॥

अनुवाद—विद्वान् पुरुष उसकी प्रकृति और भाव को जानकर नाना अवस्थाओं के अनुसार गति प्रचार का विभाजन करे ॥ ४७ ॥

अनुवाद—स्वाभाविक गति के अभिनय में बायें हाथ को कुटिल करके दाहिने हाथ को चतुरक हस्तमुद्रा में रखे। उसके बाद एक पार्श्व, शिर, हाथ तथा पैर को क्रम से ताल और लय के अनुसार झुका दे। यह स्वाभाविक गति है, इसके अतिरिक्त विकारजा गति होती है ॥ ४८-५० (१) ॥

अनुवाद—उपभोग किये हुए वस्त्रादि के लाभ में और सन्तुष्ट होने पर इस ( विकरजा ) गति का प्रयोग करे। शकार को गति चञ्चल शरीर से करनी चाहिये ॥ ५०-५१ ॥

अनुवाद—इसमें अभिनेता वस्त्र और आभूषणों का स्पर्श करता हुआ पाँच पग चले। उसके बाद बामवेध करे फिर दाहिने पैर से विक्षेप करे ॥५१-५२॥

तत्रापि वामवेधं तु विक्षेपो दक्षिणेन च।
ततो भाण्डोन्मुखो गच्छेदेतान्येव पदानि तु ॥ ५३ ॥
एवं गतागतैर्गत्वा पदानि त्वेकविंशतिम्।
वामवेधं ततः कुर्याद्विक्षेपः दक्षिणेन च ॥ ५४ ॥
एषा स्वभावगमने गतिः कार्या प्रयोक्तृभिः।
अवस्थान्तरयोगे तु गतिं समनुबोधत ॥ ५५ ॥
अस्वस्थकामिते चैव भयवित्रासयोस्तथा।
आवेगे च तथा हर्षे तथानिष्टश्रुतावपि ॥ ५६ ॥
कालातिक्रमणे चैव क्षेपे चाद्भुतदर्शने।
कार्ये आत्ययिके चैव दुःखिते चारिमार्गणे ॥ ५७ ॥
अवरुद्धानुसरणे श्वापदानुगतौ तथा।
गतिमेतेषु भावेषु द्विकलां संप्रयोजयेत् ॥ ५८ ॥

---

अनुवाद—उसके बाद दूसरे पैर को परिवर्त्तित कर दूसरे कोण में रखे। फिर बायें पैर से बेध करे और दाहिने पैर से विशेष करे। फिर भाण्ड-वाद्य की ओर उन्मुख होकर उतने ही पग चले ॥ ५२-५३ ॥

अनुवाद—इस प्रकार आने-जाने से इक्कोस पग चलकर फिर बाये पैर से वेध करे और दाहिने पैर से विक्षेप करे। प्रयोक्ताओं को स्वाभाविक गति में इस प्रकार प्रयोग करना चाहिए ॥ ५४-५५ ॥

अनुवाद—इसके बाद अन्य अवस्थाओं के योग में गति को समझिये। अस्वस्थकामित ( प्रच्छन्न कामुक ), भय, वित्रासन ( डराये हुए ), आवेग, हर्ष, और अनिष्ट बात के श्रवण में, समय के अतिक्रमण में निन्दा, अद्भुत वस्तु के दर्शन कष्टकर कार्य में या उत्पात-सूचक कार्य में, दुःख में, शत्रु के खोजने में, अपराधो के पकड़ने में, व्याघ्रादि हिंसक जानवरों के अनुसरण में इन भावों के प्रदर्शन में द्विकला गति का प्रयोग करे और देवताओं एवं राजाओं की गति का इसी प्रकार का विधान लाना चाहिए ॥ ५५-५८ ॥

दिव्यानां नृपतीनां च गतिरेवं विधीयते ।
अत्रोच्यते कथं देवैः समा राज्ञां गतिर्भवेत् ॥ ५९ ॥
दिव्या तु प्रकृतिर्ज्ञेया तथान्या दिव्यमानुषी ।
मानुषी चैव मन्तव्या नाट्यवृत्तिक्रियां प्रति ॥ ६० ॥
दिव्या तु देवप्रकृती राज्ञां स्याद्दिव्यमानुषी ।
अन्या या लोकसंस्था तु मानुषी सा प्रकीर्तिता ॥ ६१ ॥
तस्माद्देवानुकरणे दोषस्तत्र न विद्यते ।
गतिः शृङ्गारिणी कार्या स्वस्थकामितसंभवा ॥ ६२ ॥
चतुष्कलाप्रमाणेन सविलासा तथैव च ।
दूतीदर्शितमार्गस्तु प्रविशेद्रङ्गमण्डलम् ॥ ६३ ॥
सूच्या चैवाप्यभिनयं प्रकुर्यादर्थसंश्रयम् ।
हृद्यैर्वस्त्रैस्तथागन्धैर्धूपैश्चूर्णैश्च योजितैः ॥ ६४ ॥
सुगन्धिभिश्च मालाभिर्विचित्राभिरलंकृतः ।
गच्छेत्सललितैः पादैरतिक्रान्तोत्थितैरथ ॥ ६५ ॥
सौष्ठवेन समायुक्तैर्लयतालवशानुगैः ।
पादयोरनुगौ चापि हस्तौ कार्यौ प्रयोक्तृभिः ॥ ६६ ॥

---

अनुवाद—अब कहते हैं कि देवताओं के समान राजाओं को गति क्यों होती है? क्योंकि नाट्य एवं नृत्त क्रिया में प्रकृति तीन प्रकार को होती है—दिव्य प्रकृति, और दिव्यमानुषी तथा मानुषी। उनमें देवताओं की प्रकृति दिव्य, राजाओं की प्रकृति की दिव्य-मानुषी और अन्य लोक प्रसिद्ध पात्रों की प्रकृति मानुषी होती है। इसलिए देवताओं के अनुकरण करने में कोई दोष नहीं है॥ ५९-६२॥

अनुवाद—स्वस्थ अर्थात् अप्रच्छन्न कामुक की गति शृङ्गारिणी, चार कला प्रमाण की और ललित ( विलासयुक्त ) होती है॥ ६२-६३॥

अनुवाद—स्वस्थ कामुक ( शृङ्गारी ) दूती के द्वारा प्रदर्शित मार्ग से रङ्गमञ्च पर प्रवेश करे और वह किसी अर्थ विशेष का आश्रय लेकर सूचा चारी के द्वारा अभिनय करे॥ ६३-६४॥

प्रच्छन्नकामिते चैव गतिं भूयो निबोधत ।
विसर्जितजनस्तत्र तथा दूतीसमन्वितः ॥ ६७ ॥
निर्वाणदीपो नात्यर्थं भूषणैश्च विभूषितः ।
वेलासदृशवस्त्रश्च निवृत्तस्तु शनैः शनैः ॥ ६८ ॥
शब्दशंक्युत्सुकश्चापि पश्चाल्लोकनतत्परः ।
वेपमानशरीरश्च प्रस्खलंस्तु मुहुर्मुहुः ॥ ६९ ॥
शङ्कितः पुरुषो गच्छेद्दिदृक्षुर्वल्लभं जनम् ।
उत्तमानामियं कार्या पुरुषाणां गतिर्बुधैः ॥ ७० ॥
मध्यमानां गतिं चैव संप्रवक्ष्याम्यहं पुनः ।
ज्वरार्ते च रुजार्ते च तपः श्रान्ते भयान्विते ॥ ७१ ॥
विक्षते छन्नगमने त्ववहित्थे तथैव च ।
चिन्तान्विते तथा स्वस्थ औत्सुक्ये संहते तथा ॥ ७२ ॥
गतिः स्थिरलया कार्या करणाश्रयभाविनी ।

---

अनुवाद—आकर्षक वस्त्रों से सुसज्जित, गन्ध, धूप और पाउडर से सुवासित, चित्र-विचित्र सुगन्धित मालाओं से अलङ्कृत होकर ललित गति से 'अतिक्रान्त' चारी में और ताल, लय एवं कला के अनुसार सौष्ठव ने युक्त सुन्दर गति से चले। नाट्य-प्रयोक्ताओं को पादों के अनुसार हाथों का प्रयोग करना चाहिए ॥ ६४-६६ ॥

अनुवाद—अब प्रच्छन्न कामुक की गति को समझिये। प्रच्छन्न कामुक अपने सहचरों को लौटाकर दूती के साथ चले। दीपक को बुझाकर अधिक अलङ्कारों से अलङ्कृत न होकर, समय के अनुसार वस्त्रों को धारण कर शब्दों के आहट की शङ्का से पीछे देखते हुए, काँपते हुए शरीर से, बार-बार लड़खड़ाते हुए, सशङ्कित पुरुष अपनी प्रियजन को देखने की इच्छा से मन्द गति से गमन करे। विद्वानों ने इसे उत्तम पात्रों की गति कही है ॥ ६७-७० ॥

अनुवाद—अब पुनः मध्यम पात्रों की गति को कहता हूँ। ज्वर से पीड़ित, रोग से पीड़ित, तप से श्रान्त, भय से युक्त, विस्मय, अवहित्थ, प्रच्छन्न गमन में अथवा स्वच्छन्द गमन में, चिन्ता से युक्त, स्वस्थ और औत्सुक्य से समन्वित अवस्था में करणों के आश्रित स्थिर लय में गति प्रचार करना चाहिए ॥ ७१-७२ ॥

भये वित्रासिते चैव प्रमत्ते शङ्किते तथा ॥ ७३ ॥
व्याधिते हर्षिते क्रोधे कार्यं तु चतुराञ्चितम् ।
संभ्रमाद्‌भुतसंदर्शे मुहुर्मुहुरवेक्षणैः ॥ ७४ ॥
कम्पनेन च गात्राणां वस्त्रस्याकर्षणेन च ।
सुगन्धिता चूर्णपदा शकारस्य गतिर्भवेत् ॥ ७५ ॥
स्थूलस्यापि तु कर्तव्या गतिर्देहानुकर्षिणी ।
समुद्वाहितगात्रा च विलम्बितपदक्रमा ॥ ७६ ॥
विष्कम्भगामिनो चैव निश्वासबहुला तथा ।
अतिक्रान्ता च कर्तव्या तथा चूर्णपदैः सदा ॥ ७७ ॥
कार्या चैव तु होनानां चेट्यादीनां द्विजोत्तमाः ।
अधमा इति ये ख्याता नानाशीला कुवृत्तयः ॥ ७८ ॥
पार्श्वमेकं शिरश्चैव करं चरणमेव च ।
नामयेत्तद्‌गतौ किञ्चित्कुजन्मा चेटसंज्ञितः ॥ ७९ ॥

---

अनुवाद—भय में, वित्रासन में, प्रमाद में, शङ्कित अवस्था में, व्याधिग्रस्त दशा में, हर्षित अवस्था में और क्रोध में चतुराञ्चित गति का प्र.ोग करना चाहिए ॥ ७३ ॥

अनुवाद—घबड़ाहट से अद्भुत वस्तु के दर्शन में, बार-बार-इधर-उधर देखने से, शरीर के कम्पन के द्वारा, वस्त्रों के आकर्षण के द्वारा, सुगन्धित चूर्णपदों के द्वारा शकार की गति प्रदर्शित करे ॥ ७४-७५ ॥

अनुवाद—स्थूल पुरुष की गति शरीर का अनुकर्षण करने वाली शरीर को संभालने की चेष्टा से युक्त, विलम्बित पदक्रम वाली, किसी सहारे से चलने वाली तथा अधिक श्वास-प्रश्वास से युक्त अतिक्रान्त च.री में चूर्ण पदों से प्रदर्शित करनी चाहिये ॥ ७५-७७ (१) ॥

अनुवाद—हे द्विजोत्तमों ? चेटी आदि हीन पात्रों की और जो दुराचारी स्वभाव वाले अधम पात्र हैं, उनकी गति में एक पार्श्व, शिर, हाथ और पैर को झुका दे और चेट संज्ञक जो कुजाति पात्र है, उनकी और नीच जातियों की गति इधर-उधर देखने वाली होनी चाहिये ॥ ७८-७९ ॥

जातिनीचेषु कर्तव्या विलोकनपरा गतिः ।
विकला वकसंचारा गात्रं सर्वं नियम्य च ॥ ८० ॥
स्वजातिसदृशी चैव तथा देहानुकर्षिणी ।
संभ्रमे चैव हर्षे च विक्षिप्तपदविक्रमा ॥ ८१ ॥
आसाद्य हास्यं तु रसमेताश्चान्याश्च योजयेत् ।
पुनश्च करुणे कार्या गतिः स्थिरपदक्रमा ॥ ८२ ॥
सबाष्पः साश्रुनयनः सन्नगात्रस्तथैव च ।
उत्क्षिप्तपातितकरः तथा सस्वनरोदनैः ॥ ८३ ॥
गच्छेदथाध्यर्धिकया प्रत्यग्राप्रियसंश्रयात् ।
एषा स्त्रीषु प्रयोक्तव्या नीचसत्त्वेषु चैव हि ॥ ८४ ॥
उत्तमानां तु कर्तव्या सबाष्पा धैर्यसंयुता ।
निश्वासैरायतोत्सृष्टैस्तथा चोर्ध्वंनिरीक्षणैः ॥ ८५ ॥
न तत्र सौष्ठवं कार्यं न प्रमाणं यथोदितम् ।

---

अनुवाद—नीच पात्रों की गति विकल, बगुले के समान गति वाली समस्त शरीर नियन्त्रित कर अपनी जाति के समान शरीर को अनुकर्षित करने वाली होनी चाहिये ॥ ८० ॥

अनुवाद—सम्भ्रम एवं हर्ष में पैरों की गति विक्षिप्त गति वाली अर्थात् लड़खड़ाती हुई होनी चाहिये। हास्य रस के अभिनय में ऐसी ही गति और अन्य उचित गति की योजना होनी चाहिये ॥ ८१ ॥

अनुवाद—करुण रस में स्थिर पैरों से उपलक्षित गति होनी चाहिये। आँसुओं से भरे हुए नेत्र, सुन्न शरीर, हाथों को उठाकर फिर नीचे पटकना, चिल्ला-चिल्लाकर रोना आदि का अभिनय नवीन अप्रिय घटना के समय में अध्यर्धिका चारी के द्वारा करना चाहिये। इस गति का प्रयोग स्त्रियों तथा नीच पात्रों के विषय में करना चाहिये ॥ ८२-८३ ॥

अनुवाद—उत्तम पात्रों की गति का अभिनय धैर्य से युक्त, आँसुओं से परिप्लुत, लम्बे लम्बे छोड़े गये दीर्घ निःश्वास और ऊर्ध्व-निरीक्षण के द्वारा करना चाहिये। इस अभिनय में न सौष्ठव का विधान है और न पादपात का कोई प्रमाण है ॥ ८४-८६ (१) ॥

नात्युत्क्षिप्तैः पदैर्गच्छेदिष्टबन्धुनिपातने ॥ ८६ ॥
गाढ़े प्रहारे कार्या च शिथिलाङ्गभुजाश्रया ।
विघूर्णितशरीरा च गतिश्चूर्णपदैरथ ॥ ८७ ॥

गतिः कञ्चुकिनी प्रोक्ता वयोऽवस्था विशेषतः ।
वृद्धे वा मध्यमे वापि तथा चैव कनीयसी ॥ ८८ ॥
अर्धतालोत्थितैः पादैर्विष्कम्भैर्ऋजुभिस्तदा ।
उद्वहन्निव गात्राणि पङ्कमग्न इव व्रजेत् ॥ ८९ ॥

अथ वृद्धस्य कर्तव्या गतिः कम्पितदेहिका ।
विष्कम्भितगतिप्राणा मन्दोत्क्षिप्तपदा तथा ॥ ९० ॥

शीतेन चाभिभूतस्य वर्षेणाभिद्रुतस्य च ।
गतिः प्रयोक्तृभिः कार्या स्त्रीनीचप्रकृतौ सदा ॥ ९१ ॥
पिण्डीकृत्य च गात्राणि तेषां चैव प्रकम्पनात् ।
करौ वक्षसि निक्षिप्य कुब्जहा तथैव च ।
दन्तोष्ठस्फुरणाच्चैव चिबुकस्य प्रकम्पनात् ॥ ९२ ॥
शनैः शनैश्च कर्तव्या शीतार्ताभिनये गतिः ।
उष्णे चापि प्रयोक्तव्या गतिर्दाहसमाकुला ॥ ९३ ॥

---

अनुवाद—इष्ट बन्धुओं अर्थात् प्रियजनों के विनाश होने पर पैरों को बहुत ऊँचे उठाकर नहीं चलना चाहिये। गाढ़ प्रहार के समय अङ्गों को शिथिल कर भुजाओं के आश्रित, शरीर को घुमाते हुए चूर्णपदों से गति का अभिनय करे॥ ८६-८७ (१) ॥

अनुवाद—कञ्चुकी को गति वय और अवस्था (स्थिति) के अनुसार कही गई है। वृद्ध अथवा युवा अथवा कम अवस्था का कञ्चुकी अर्धताल पर उठाये हुए पैरों से, लाठी के सहारे कोमल गति शरीर को कीचड़ में सने हुए के समान धारण किये हुए के समान गति प्रदर्शित करे॥ ८७-८९ (१) ॥

अनुवाद—वृद्ध कञ्चुकी की गति का अभिनय शरीर को कँपाते हुए, लाठी के सहारे धीरे-धीरे पैरों को उठाते हुए करना चाहिये॥ ८९-९० (१)

नेत्रसंकोचनस्वेदगात्रसंहरणान्विता ।
अतिक्रान्तैरपक्रान्तैरेलकाक्रीडितैस्तथा ॥ ९४ ॥

क्रमैरभिनयैर्युता तथा चूर्णपदैरपि ।
एतानन्यांश्च युञ्जीत नाट्यज्ञैः करुणे रसे ॥ ९५ ॥

रौद्रे रसे प्रवक्ष्यामि दैत्यरक्षोगणान् प्रति ।
एक एव रसस्तेषां स्थायी रौद्रौ द्विजोत्तमाः ॥ ९६ ॥

नेपथ्यरौद्रौ विज्ञेयः स्वाङ्गरौद्रस्तथैव च ।
अथ स्वभावजश्चैव त्रिधा रौद्रः प्रकीर्तितः ॥ ९७ ॥

रुधिरक्लिन्नदेहो यो रौद्राभिविकृताननैः ।
तथा पिशितहस्तश्च रौद्रो नेपथ्यजस्तु सः ॥ ९८ ॥

---

अनुवाद—नाट्य-प्रयोक्ताओं को शीत ( ठण्ड ) से अभिभूत तथा वर्षा से पीड़ित स्त्री और अधम पात्रों की गति का अभिनय शरीर को सिकोड़कर अङ्गों को कँपाते हुए, दोनों हाथों को वक्षःस्थल पर रखकर, कुबड़े की तरह टेढ़ा होकर, दांत और ओठों को फड़काते हुए, चिबुक ( ठुड्डी ) के कम्पन के द्वारा धीरे-धीरे करना चाहिये और गर्मी के पीड़ित होने पर दाह ( जलन ) से व्याकुल गति का प्रयोग करना चाहिये ॥ ९०-९३ ॥

अनुवाद—नेत्र का संकोचन, पसीना आना, शरीर का संहरण, अतिक्रान्त, अनाक्रान्त और एलकाक्रीड़ित चारियों के द्वारा चूर्ण पदों से गर्मी से पीड़न का अभिनय करना चाहिये। नाट्यवेत्ताओं को इसी प्रकार का अभिनय करुण रस में भी करना चाहिये ॥ ९४-९५ ॥

अनुवाद—अब मैं रौद्र रस के विषय में दैत्य, दानव, राक्षसों की गति को कहता हूं। हे ब्राह्मणों? उनके यहाँ रौद्र ही एक मात्र स्थायी रस होता है ॥ ९६ ॥

अनुवाद—रौद्र रस नेपथ्य रौद्र, अङ्ग रौद्र और स्वभाव रौद्र भेद से तीन प्रकार का होता है ॥ ९७ ॥

अनुवाद - रुधिर ( खून ) से सना हुआ शरीर और रक्त से विकृत मुख तथा हाथ में मांस के टुकड़े लिये रहना 'नेपथ्य रौद्र' कहलाता है ॥ ९८ ॥

बहुबाहुर्बहुमुखो नानाप्रहरणाकुलः ।
स्थूलकायस्त्वतिप्रांशुरङ्गरौद्रस्तु स स्मृतः ॥ ९९ ॥

रक्ताक्षः पिङ्गकेशश्च कृष्णाङ्गो विकृतस्वरः ।
रौद्रनिर्भर्त्सनकथो रौद्रोऽयं स्यात्स्वभावजः ॥ १०० ॥

चतुस्तालान्तरोत्क्षिप्तैः पादैस्त्वन्तरपातितैः ।
गतिरेवं प्रकर्तव्या शेषा ये चापि तद्विधाः ॥ १०१ ॥

एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमाः ।
विग्रहः प्रहसश्चैव तथा शृङ्गार इष्यते ॥ १०२ ॥

तथा भयानके चापि गतिः कार्याः विचक्षणैः ।
स्त्रीणां कापुरुषाणां च ये चान्ये सत्त्ववर्जिताः ॥ १०३ ॥

---

अनुवाद—अनेक भुजाओं एवं अनेक हाथों वाला तथा अनेक प्रकार के आयुधों से युक्त, अत्यन्त लम्बा और स्थूल शरीर वाला होना 'अङ्ग रौद्र' कहलाता है ॥ ९९ ॥

अनुवाद—लाल आँखे, पीले केश, काले रङ्ग, विकृत स्वर, रूखा स्वभाव होना और फटकारने में तत्पर रहना 'स्वभावज रौद्र' कहलाता है ॥ १०० ॥

अनुवाद—रौद्र रस में चार ताल के अन्तर पर पैरों को उठाकर फिर तीन ताल के अन्तर पर गिराया जाता है और जो उनके समान प्रकृति के अन्य पात्र है, उन्हें भी ऐसीं ही गति करनी चाहिए ॥ १०१ ॥

अनुवाद—हे द्विजोत्तमो ! उनमें रौद्र ही एकमात्र स्थायी रस है। विग्रह, प्रहास और शृङ्गार में इष्ट है ॥ १०२ ॥

अनुवाद—भयानक रस के अभिनय में विद्वानों को स्त्री, कापुरुष ( नीच ) और अन्य स्त्री सत्त्व से वर्जित ( बलहीन, कमजोर ) व्यक्तियों की गति उसी प्रकार की सहज गति होनी चाहिए ॥ १०३ ॥

विष्फारितचलन्नेत्रो विधुन्वन् स्वशिरस्तथा ।
भयाकुलितचित्तत्वात्पार्श्वानि च विलोकयन् ॥ १०४ ॥

द्रुतैश्चूर्णपदैश्चैव कृत्वा हस्तं कपोतकम् ।
प्रलेपितशरीरस्तु शुष्कोष्ठश्च स्खलन् व्रजेत् ॥ १०५ ॥

एषानुकरणे कार्या तर्जने कलहे तथा ।
सत्त्वं च विकृतं दृष्ट्वा श्रुत्वा च विकृतस्वरम् ॥ १०६ ॥

एषा स्त्रीणां प्रयोक्तव्या नृणां चाक्षिप्तविक्रमा ।
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ॥ १०७ ॥

एलकाक्रीडितैः पादैरुपर्युपरिपातितैः ।
एषामेवानुगैर्हस्तैर्गतिर्भीतेषु योजयेत् ॥ १०८ ॥

अहृद्या तु मही यत्र श्मशानरणकश्मला ।
गतिस्तत्र प्रकुर्वीत बीभत्साभिनयं प्रति ॥ १०९ ॥

क्वचिदासन्नपतितैः विकृष्टपतितैः क्वचित् ।
अतिक्रान्तैः पदैर्गच्छेज्जुगुप्सितगतिं प्रति ॥ ११० ॥

---

अनुवाद—भयानक रस के अभिनय में नेत्र खुले हुए एवं चञ्चल, शिर कम्पित, भय से व्याकुल चित्त होने से बगल ( पार्श्व ) में झाँकते हुए, द्रुत तथा चूर्णपद गति से युक्त हाथ को कपोतक मुद्रा में रखकर, कम्पित शरीर और शुष्क ( सूखा हुआ ) रखते हुए स्खलित गति से चलना चाहिए ॥ १०४-१०५ ॥

अनुवाद—शत्रु के द्वारा पीछा किये जाने पर, फटकारने तथा डराने में इस गति का प्रयोग करना चाहिए। विकृत सत्त्व ( प्राणी ) को देखकर और विकृत आवाज को सुनकर आक्षिप्त ( दबे हुए ) पराक्रम वाले स्त्री और पुरुष के सम्बन्ध में इस गति का अभिनय करना चाहिए ॥ १०६-११० ॥

तथा वीरे च कर्तव्या पादविक्षेपसंयुता ।
द्रुतप्रचारणाविद्धा नानाचारीसमाकुला ॥ १११ ॥
पार्श्वाक्रान्तैर्द्रुताविद्धैः सूचीविद्धैस्तथैव च ।
कलातालगतैः पादैरावेगे योजयेद्गतिम् ॥ ११२ ॥
विटस्यापि तु कर्तव्या गतिर्ललितविक्रमा ।
किंचिदाकुञ्चितैः पादैस्तालाभ्यन्तरपातितैः ॥ ११३ ॥
अङ्गसौष्ठवसंयुक्तं तथा हस्तौ कटिस्थितौ ।
खटकावर्धमानौ च कृत्वा कार्या विटे गतिः ॥ ११४ ॥
कृशाङ्गानां तु कर्तव्या गतिर्मन्दपरिक्रमा ।
व्याधिग्रस्तो ज्वरार्तश्च तपश्श्रान्तः क्षुधान्वितः ॥ ११५ ॥
विष्टम्भनगतप्राणस्तथा क्षामोदरः सदा ।
क्षामस्वरकपोलश्च सन्नगात्रस्तथैव च ॥ ११६ ॥
हस्तपादसमुत्क्षेपं शनैस्तत्र प्रयोजयेत् ।
कम्पनं चैव गात्राणां श्लथनं चैव योजयेत् ॥ ११७ ॥

---

अनुवाद वीर रस में पाद-विक्षेप से युक्त, द्रुत प्रचार ( गति ) से आविद्ध तथा नाना प्रकार की चारियों से समाकुल पार्श्वक्रान्ता, द्रुताविद्धा और सूची-विद्धाचारियों से उपलक्षित, कला और ताल के अनुसार आवेश को दशा में गति का प्रयोग करे ॥ १११-११२ ॥

अनुवाद—विट पात्र की ललित एवं विलास युक्त गति का अभिनय करना चाहिए। अभिनेता थोड़ा-थोड़ा आकुञ्चित पावों को एक ताल के अन्तर पर रखते हुए सौष्ठव युक्त अङ्गों से युक्त और कटि भाग पर स्थित हाथों को खटकावर्धमानक स्थिति में रखकर करके विट की गति का अभिनय करे ॥ ११३-११४ ॥

अनुवाद—कृश अर्थात् दुबले-पतले शरीर वाले पात्र की गति धीरे-धीरे पैर के प्रक्षेप के द्वारा प्रदर्शित करे। व्याधि-ग्रस्त, ज्वर से पीड़ित, तप से श्रान्त, भूख से व्याकुल, दण्डे के सहारे चलने वाला, क्षीण उदर वाला, क्षीण स्वर और क्षीण कपोलों वाला, सुन्न शरीर वाला, कृशकाय पात्र धीरे-धीरे हाथ और पैरों का उत्क्षेपण करे तथा शरीर का कम्पन और शिथिलता प्रदर्शित करे ॥ ११५-११७ ॥

प्रकर्तव्याध्वगस्यापि गतिर्मन्दपरिक्रमा ।
विकूणनेन वक्त्रस्य जानुनोश्च विमर्शनात् ॥ ११८ ॥

नीचानां मध्यमानां च गतिः कार्या सदा बुधैः ।
तालमात्रोत्थितैः पादैस्तथा व्याकुञ्चिताञ्चितैः ॥ ११९ ॥

व्रतिनश्चाश्रमस्था ये ये चान्ये तपसि स्थिताः ।
ऋषयस्तापसाश्चैव नैष्ठिकं व्रतमास्थिताः ॥ १२० ॥

अलोलचक्षुः स्याच्चैव युगमात्रनिरीक्षणे ।
उपस्थितस्मृतिश्चैव गात्रं सर्वं नियम्य च ॥ १२१ ॥

अचञ्चलमनाश्चैव गच्छेल्लिङ्गसमाश्रितः ।
विनीतवेषश्च तथा काषायवसनोऽपि च ॥ १२२ ॥

प्रथमं समपादेन स्थित्वा स्थानेन नाट्यवित् ।
हस्तं चतुरकं कृत्वा तथा चैतत्प्रसारयेत् ॥ १२३ ॥

प्रसन्नं वदनं कृत्वा प्रयोगस्य वशानुगम् ।
सुनिषण्णेन गात्रेण गतिं कुर्याद्यतेस्तथा ॥ १२४ ॥

---

अनुवाद—पथिक ( राहगीर ) की गति मन्द-चाल मुख के सङ्कोचन तथा जङ्घाओं के विमर्शन के द्वारा प्रदर्शित करनी चाहिए ॥ ११८ ॥

अनुवाद—विद्वानों को नीच और मध्यम पात्रों की गति आकुञ्चित एवं अञ्चित तथा एक ताल पर उठाये हुए पैरों से प्रदर्शित करना चाहिए ॥ ११९ ॥

अनुवाद—व्रती, आश्रमी, तपस्वी, ऋषि, तापस, नैष्ठिक ब्रह्मचारी, अचञ्चल ( स्थिर ) नेत्र, चार हाथ तक सामने दृष्टि डालते हुए, स्मृतिमान् अर्थात् सभी अभिनेय वस्तुओं को स्मृति में रखते हुए, समस्त शरीर को नियन्त्रित करके, स्थिर-चित्त होकर, भस्म, कौपीन आदि को धारण करने वाले लिङ्गी, सन्यासी, विनीत वेष और गेरुआ वस्त्र धारण करने वाले सन्यासी पहले समपाद स्थान में स्थित होकर, हाथ को 'चतुर' हस्तमुद्रा में रखकर एक हाथ को फैला दे । फिर प्रसन्नमुख होकर तथा प्रयोग के अनुसार अस्थिर शरीर से गति को प्रदर्शित करे ॥१२०-१२४॥

उत्तमानां भवेदेषा लिङ्गिनां ये महाव्रताः ।
एभिरेव विपर्यस्तैर्गुणैरन्येषु लिङ्गिषु ॥ १२५ ॥
तथा व्रतानुगा च स्यादन्येषां लिङ्गिनां गतिः ।
हस्तौ तदनुगौ चापि यथायोगं प्रयोजयेत् ॥ १२६ ॥
विभ्रान्ता वा ह्युदात्ता च विक्रान्ता विहृता तथा ।
शकटास्यस्थितैः पादैरतिक्रान्तैस्तथैव च ॥ १२७ ॥
कार्या पाशुपतानां च गतिरुद्भ्रान्तगामिनी ।
एवं लिङ्गस्थितानां हि प्रयोज्यैव गतिर्बुधैः ॥ १२८ ॥
अन्धस्येव गतिं कुर्यादन्धकारेषु योगवित् ।
भूमौ विसर्पितैः पादैर्हस्तदर्शितमार्गकैः ॥ १२९ ॥
रथस्थस्यापि कर्तव्या गतिश्चूर्णपदक्रमा ।
समपादन्तथा स्थानं कृत्वा रथगतिं व्रजेत् ॥ १३० ॥
धनुरेकेन हस्तेन गृहीत्वान्ये सायकम् ।
सूतश्चास्य भवेदेवं प्रतोदप्रग्रहाकुलः ॥ १३१ ॥

---

अनुवाद—यह गति उत्तम लिङ्गियों और महाव्रतधारियों तपस्वियों के लिए है और उन्ही गुणों से विपरीत गुणों से अन्य यतियों के गति को योजना करनी चाहिए ।

अनुवाद—अन्य लिङ्गी सन्यासियों की गति व्रत के अनुसार होनी चाहिए । और जो विभ्रान्त ( उन्मत्त ), उदात्त, विक्रान्त एवं विहृत तथा पाशुपतव्रतधारो सन्यासी हैं, उनको उद्भ्रान्त गामिनी गति का अभिनय शकटास्या चारी तथा अतिक्रान्ताचारी में करनी चाहिए। इस प्रकार विद्वानों को सन्यासियों की गति प्रदर्शित करनी चाहिए ॥ १२६-१२८ ॥

अनुवाद—नाट्य प्रयोक्ताओं को अन्धकार में अन्धे के गति के समान पैरों को भूमि पर सरकाते हुए और हाथों से मार्ग को टटोलते हुए चलना चाहिए ॥ १२९ ॥

अनुवाद—रथ पर बैठे हुए पात्र की गति की चूर्णपदों द्वारा प्रदर्शित करनी चाहिए और रथारूढ पात्र समपाद स्थानक को करके एक हाथ में धनुष लेकर और दूसरे हाथ में बाण लेकर रथ की गति का अभिनय करे ।

करणानि विचित्राणि कर्तव्यानि विभागतः ।
द्रुतैश्चूर्णपदैश्चैव गन्तव्यं रङ्गमण्डलम् ॥ १३२ ॥

विमानस्थस्य कर्तव्या गती रथगतोपमा ।
आरोढुमुद्वहेद्गात्रं किंचित्स्यादुन्मुखस्तथा ॥ १३३ ॥

अस्यैव वैपरीत्येन कुर्याच्चाप्यवरोहणम् ।
अधोऽवलोकनेनैव मण्डलावर्तनेन च ॥ १३४ ॥

आकाशगमने चैव कर्तव्यं गतिचेष्टितम् ।
स्थानेन समपादेन तथा चूर्णपदैरथ ॥ १३५ ॥

व्योम्नस्त्ववतरेद्यस्तु तस्येमां कारयेद्गतिम् ।
ऋज्वायतोन्नतनतैः कुटिलावर्तितैस्तथा ॥ १३६ ॥

भ्रममाणस्य चाकाशादपरुद्धभुजागतिः ।
विकीर्णवसना चैव तथा भूगतलोचना ॥ १३७ ॥

---

अनुवाद—और उसका सारथि चाबुक और लगाम को संभालते हुए विचित्र वाहनों का अभिनय करते हुए द्रुत लय के साथ चूर्णपदों से रङ्गमञ्च पर प्रवेश करे ॥ १३०-१३२ ॥

अनुवाद—विमान पर बैठे हुए व्यक्ति को भी रथ की गति की भांति गति करनो चाहिए। विमान की ओर उन्मुख होकर चढ़ने के लिए शरीर को ऊपर उठाये और इसके विपरीत अवस्था में नीचे की ओर देखते हुए मण्डलावर्त्तन के द्वारा विमान से अवतरण करे ॥ १३३-१३४ ॥

नाट्य के हाथों को आकाश-गमन में भी समपाद स्थान और चूर्णपदों के द्वारा इसी प्रकार की चेष्टा करनी चाहिए ॥ १३५ ॥

अनुवाद—और आकाश से अवतरण में इसी प्रकार ऋजु, ( सरल, सीधे ) आयत ( लम्बे ) उन्नत ( ऊँचे ) नत ( नीचे ) जटिल ( तिरछे ) और आर्वतित गति को प्रदर्शित करे ॥ १३६ ॥

अनुवाद—आकाश से गिरते समय पात्र को गति दोला के समान हाथों झुलाते हुए, वस्त्रों को बिखराते हुए तथा नेत्रों से पृथ्वी की ओर देखते हुए होनी चाहिए ॥ १३७ ॥

द्रुमप्रासादशैलेषु नदीनिम्नोन्नतेषु च ।
आरोहणावतरणं कार्यमर्थवशाद्बुधैः ॥ १३८ ॥

प्रासादारोहणं कार्यमतिक्रान्तैः पदैरथ ।
उद्वाह्य गात्रं पादं च सोपानं निक्षिपेद् बुधः ॥ १३९ ॥

तथावतरणे चैव गात्रमानम्य रेचयेत् ।
अतिक्रान्तेन पादेन द्वितीयेनाञ्चितेन च ॥ १४० ॥

प्रासादारोहणं यत्तु तदेवाद्रिषु कारयेत् ।
केवलं तूर्ध्वविक्षेपमद्रिष्वङ्गं भवेदथ ॥ १४१ ॥

द्रुमे चारोहणं कार्यमतिक्रान्तोत्थितैः पदैः ।
सूचीविद्धैरपक्रान्तैः पार्श्वक्रान्तैस्तथैव च ॥ १४२ ॥

एवं देवावतरणं प्रयोज्यं सरिदादिषु ।
प्रसादेषु तथा प्रोक्तं तथैवोत्तरणं भवेत् ॥ १४३ ॥

---

अनुवाद—विद्वानों को प्रासाद ( महल ), वृक्ष और पर्वतों पर तथा नदी एवं ऊँचे-नीचे स्थानों पर प्रयोजन के अनुसार आरोहण तथा अवतरण करना चाहिए ॥ १३८ ॥

अनुवाद—अतिक्रान्त चारी पैरों से प्रासाद ( महल ) पर चढ़ना चाहिए। विद्वान् पुरुष शरीर को ऊपर उठाकर पैर को सोपान ( सीढ़ी ) पर रखे ॥ १३९ ॥

अनुवाद—तथा प्रासाद से अवतरण में शरीर को थोड़ा झुका कर एक पैर को अतिक्रान्त चारी में और दूसरे पैर को अञ्चित करके रेचित करे ॥ १४० ॥

अनुवाद—प्रासाद के आरोहण में जो गति बतलाई गई है, वही पर्वतारोहण में भी करनी चाहिए। केवल पर्वतारोहण में शरीर को ऊपर विक्षेप करे ॥ १४१ ॥

अनुवाद—अतिक्रान्त चारी में पैरों को उछाल कर क्रमशः सूचीविद्ध, अपक्रान्त तथा पार्श्वक्रान्त चारियों द्वारा वृक्षों पर आरोहण करना चाहिए ॥१४२॥

अनुवाद—इसी प्रकार नदी में उतरने के समय भी इसी प्रकार की गति का प्रयोग करे। प्रासाद से उतरने में जो गति बतलायी गई है, उसी गति से नदी आदि में उत्तरण करे ॥ १४३ ॥

द्रुमप्रासादशैलांश्च संज्ञामात्रेण दर्शयेत् ।
जलप्रमाणापेक्षा तु जलमध्ये गतिर्भवेत् ॥ १४४ ॥

तोयेऽल्पे वसनोत्कर्षैः प्राज्ये पाणिविकर्षणैः ।
किंचिन्नताग्रकाया तु प्रतारे गतिरिष्यते ॥ १४५ ॥

प्रसार्य बाहुमेकैकं मुहुर्वारिविकर्षणैः ।
तिर्यक्प्रसारिता चैव ह्रियमाणा स्ववारिणा ॥ १४६ ॥

अशेषाङ्गाकुलाधूतवदना गतिरिष्यते ।
नौस्थस्यापि प्रयोक्तव्या द्रुतैश्चूर्णपदैर्गतिः ॥ १४७ ॥

अनेनैव विधानेन कर्तव्यं गतिचेष्टितम् ।
संज्ञामात्रेण कर्तव्यान्येतानि विधिपूर्वकम् ॥ १४८ ॥

अङ्कुशग्रहणान्नागं प्रग्रहग्रहणाद्रथम् ।
खलीनग्रहणादश्वं नावं चैवावरोहणात् ॥ १४९ ॥

---

अनुवाद—प्रासाद, वृक्ष और पर्वत आदि का प्रदर्शन सङ्केतों द्वारा करना चाहिए । जल के मध्य में जल के प्रमाण के अनुसार गति होनी चाहिए ॥ १४४ ॥

अनुवाद—कम जल होने पर कपड़े के ऊपर उठाये हुए और अधिक जल होने पर हाथों से जल का विकर्षण करते हुए शरीर को थोड़ा आगे की ओर झुका कर तैरने की गति का अभिनय करे ॥ १४५ ॥

अनुवाद—एक-एक भुजा को फैलाकर बार-बार जल का विकर्षण करते हुए, तिरछा फैलाये हुए हाथों से जल को हटाते हुए सम्पूर्ण शरीर से आकुल एवं कम्पित मुख वाली गति का अभिनय करे । ।१४६-१४७ ॥

अनुवाद—नौका में स्थित पात्र की गति का अभिनय द्रुत लय में चूर्णपदों द्वारा करना चाहिए । इसी विधि के अनुसार विभिन्न गतियों की चेष्टाएँ प्रदर्शित करनी चाहिए । इन सब को विधि पूर्वक इङ्गित ( सङ्केत ) मात्र से प्रदर्शित करना चाहिए ॥ १४७-१४८ ॥

अनुवाद—जैसे अङ्कुश के ग्रहण से हाथी की, लगाम लगाने से घोड़े को रास खींचने से रथ की और अधिरोहण से नौका की अभिव्यक्ति होती है ॥ १३९ ॥

अश्वयाने गतिः कार्या वैशाखस्थानकेन तु ।
तथा चूर्णपदैश्चैव ह्य‌ुपर्यपरिपातितैः ॥ १५० ॥
पन्नगानां गतिः कार्या पादैः स्वस्तिकसंस्थितैः ।
पार्श्वाक्रान्तक्रमं कृत्वा स्वस्तिकं योजयेत्तथा ॥ १५१ ॥
मत्तानां तु गतिः कार्या तरुणे मध्यमे मदे ।
वामदक्षिणपादाभ्यां घूर्णनादपसर्पणात् ॥ १५२ ॥
आकाशस्खलितैः प्रायः पादैश्चाप्यनवस्थितैः ।
विघूर्णितशरीरा च करैः प्रचलितैस्तथा ॥ १५३ ॥
उन्मत्तस्यापि कर्तव्या गतिस्त्वनियतक्रमा ।
बहुचारीसमायुक्ता लोकानुकरणाश्रया ॥ १५४ ॥
रुक्षस्फुटितकेशस्तु रेणुध्वस्ततनुस्तथा ।
अनिमित्तप्रकथनो बहुभाषी विकारवाक् ॥ १५५ ॥
प्रगीतहसितश्चापि नानाविकृतभूषणः ।
नृत्ते गीते च वाद्ये च भाषणे च सदा रतः ॥ १५६ ॥

---

अनुवाद—घोड़े पर चढ़ने में वैशाखस्थानक के द्वारा तथा ऊपर-ऊपर उठाये हुए चूर्णपदों से गति का अभिनय करना चाहिए ॥ १५० ॥

अनुवाद—स्वस्तिक पदों द्वारा सर्पों की गति का अभिनय करना चाहिए । इसमें प्रथम पार्श्वक्रान्ता चारी में पद को रखकर फिर स्वस्तिक की योजना करे ॥ १५१ ॥

अनुवाद—तरुण और मध्यम मद को बाये और दाहिने पैरों को घुमाए हुए अपसर्पण ( लड़खड़ाने ) के द्वारा मत्तों की गति का अभिनय करना चाहिए ॥१५२॥

अनुवाद—अधम मद में ऊपर से लड़खड़ाते हुए अव्यवस्थित पैरों से, तथा शरीर को घुमाते हुए और हाथों को चलाते हुए अभिनय प्रदर्शित करे ॥ १५३ ॥

अनुवाद—उन्मत्तों की गति का अभिनय अनियन्त्रित पदक्रम के द्वारा लोक के अनुकरण के आश्रित बहुत सी चारियों के संयोग से करना चाहिए । इसमें पात्र के बाल रूखे और बिखरे हुए होते हैं, शरीर धूलि से धूसरित रहता है, बिना कारण के कुछ बोलता रहता है, बड़बड़ाता है, वह कभी गाता है कभी हँसता है और विकृत आभूषणों को धारण किये रहता है । वह सदा नाचने, गाने, बजाने

कदाचिद्धावति जवात्कदाचिदवतिष्ठते ।
कदाचिदुपविष्टस्तु शयानश्च कदाचन ॥ १५७ ॥

नानाचीरधरश्चैव रथ्यास्वनियतालयः ।
उन्मत्ताभिनयस्त्वेवं तस्येमां कारयेद्गतिम् ॥ १५८ ॥

स्थित्वा नूपुरपादेन दण्डपादं प्रसारयेत् ।
कृत्वा चारीं तथोद्बद्धामथ स्वस्तिकमेव च ॥ १५९ ॥

अनेन चारीयोगेन परिभ्राम्य तु मण्डलम् ।
वक्रं तु भ्रमणं चैव रङ्गकोणेषु योजयेत् ॥ १६० ॥

त्रिकं सललितं कृत्वा लताख्यं हस्तमेव च ।
विपर्ययगतैर्हस्तैः पादैर्हंसगतिं व्रजेत् ॥ १६१ ॥

सिंहर्क्षवानराणां च गतिः कार्या प्रयोक्तृभिः ।
या कृता नरसिंहेन विष्णुना प्रभविष्णुना ॥ १६२ ॥

---

तथा बोलने में तत्पर रहता है। कभी वेग से दौड़ता है, कभी कभी खड़ा हो जाता है। कभी बैठ जाता है और कभी लेट जाता है। वह अनेक प्रकार के चिथड़े लपेटे रहता है और गलियों में पड़ा रहता है। उन्मत्तों का यही अभिनय है। इस प्रकार उसकी गति का अभिनय करे ॥ १५४-१५८ ॥

अनुवाद—उन्मत्त की गति के अभिनय में नूपुर पादचारी में खड़ा होकर दण्डपाद चारी में पैर को फैला दे, फिर बद्धा चारी को प्रदर्शित कर पैरों को स्वस्तिक मुद्रा में रखे। इस प्रकार चारियों के संयोग से पैरों को मण्डलाकार घुमा कर रङ्गकोण में वक्र भ्रमण करे ॥ १५९-१६० ॥

अनुवाद—त्रिक अर्थात् कमर को सुललित स्थिति में रखकर और हाथ को लता हस्तमुद्रा में करके विपर्यय गत हाथों का संचालन करते हुए पैरों से हंस की चाल चले ॥ १६१ ॥

अनुवाद—नाट्य-प्रयोक्ताओं को सिंह, भालू और वानरों की गति का अभिनय उस प्रकार करना चाहिए जिस प्रकार भगवान् विष्णु ने नरसिंह अवतार धारण करके किया था ॥ १६२ ॥

आलीढ़स्थानकं कृत्वा गात्रं तस्यैव चानुगम् ।
ऊर्ध्वजानु च विक्षिप्य करमेकं च संस्थितम् ॥ १६३ ॥

विलोलितं शिरः कृत्वा चिबुकं बाहुमस्तके ।
गन्तव्यं विक्रमैश्चैव पञ्चतालान्तरस्थितैः ॥ १६४ ॥

नियुद्धे संशये चैव रङ्गावतरणे तथा ।
सिंहादीनां च योक्तव्या गतिरेषा प्रयोक्तृभिः ॥ १६५ ॥

शेषाणामर्थयोगेन स्थानान्यपि तु कारयेत् ।
गजवाजिरथादींस्तु चिह्नमात्रेण कारयेत् ॥ १६६ ॥

वाहनार्थंप्रयोगेषु रङ्गावतरणेषु च ।
एवमेताः प्रयोक्तव्या नृणां तु गतयो बुधैः ॥ १६७ ॥

अत्र नाभिहिता यास्तु विज्ञेयाः शास्त्रलोकतः ।
अतः परं प्रवक्ष्यामि स्त्रीणां गतिविचेष्टितम् ॥ १६८ ॥

---

अनुवाद—आलीढ़ स्थानक को करके शरीर को उसी के अनुसार रखे। फिर जानु को ऊपर उठाकर एक हाथ को उस पर स्थित करे। फिर शिर को विलोलित करके चिबुक को भुजाओं के अग्रभाग पर रखकर पैरों को पांच ताल के अन्तर पर रखते हुए चलना चाहिए ॥ १६३-१६४ ॥

अनुवाद—नियुद्ध और संशय में तथा रङ्गमञ्च पर नाट्य-प्रयोक्ताओं को सिंह आदि की गति का प्रयोग करना चाहिए ॥ १६५ ॥

अनुवाद—शेष प्राणियों की गति या स्थान का प्रयोग प्रयोजन के अनुसार करना चाहिए। हाथी, घोड़े, रथ आदि का चिह्न मात्र से प्रदर्शन करना चाहिए ॥ १६६ ॥

अनुवाद—रङ्गमञ्च पर वाहनों पर चढ़ने-उतरने के अभिनय में विद्वानों को इस प्रकार मनुष्यों की गति का प्रयोग करना चाहिए ॥ १६७ ॥

अनुवाद—जिनकी गतियों का वर्णन मैंने नहीं किया है उन्हें लोक शास्त्र से समझ लेने चाहिए। इसके बाद में नारियों की गति एवं चेष्टाओं का वर्णन करूँगा ॥ १६८ ॥

स्त्रीणां स्थानानि कार्याणि गतिष्वाभाषणेषु च ।
आयतं चावहित्थं च तथाऽश्वक्रान्तमेव च ॥ १६९ ॥
दक्षिणस्तु समः पादस्त्र्यश्रः पक्षस्थितोऽपरः ।
वामो नतः कटीपार्श्वमायतस्थानके भवेत् ॥ १७० ॥
वामः स्वाभाविको यत्र पादो विरचितस्ततः ।
तालमात्रान्तरे न्यस्तस्त्र्यश्रः पक्षस्थितोऽपरः ॥ १७१ ॥
प्रसन्नमाननमुरस्समं यत्र समुन्नतम् ।
लतानितम्बगौ हस्तौ ज्ञेयं स्थानं तदायतम् ॥ १७२ ॥
रङ्गावतरणां पुष्पाञ्जलिविसर्जनम् ।
मन्मथेर्ष्योद्भवः कोपस्तर्जनाङ्गुलिमोटनम् ॥ १७३ ॥
निषेधगर्वगाम्भीर्यमौनमायावलम्बनम् ।
स्थानेऽस्मिन् सन्निधीयीत दिगन्तरनिरूपणम् ॥ १७४ ॥
आवाहने विसर्गे च तथा निर्वर्णनेषु च ।
चिन्तायामवहित्थे च स्थानमेतत्प्रयोजयेत् ॥ १७५ ॥

---

अनुवाद—स्त्रियों की गति और भाषण में तीन स्थान होते हैं—आयत, अवहित्थ और अश्वक्रान्त ॥ १६९ ॥

अनुवाद—आयत स्थानक दाहिना पैर सम और दूसरा पैर त्र्यस्र और पक्ष में स्थित होता है और बायीं ओर कटि नत ( झुकी हुई ) होती है ॥ १७० ॥

अनुवाद—जहाँ पर बायाँ पैर स्वाभाविक रूप में हो और ताल मात्र के अन्तर पर न्यस्त दूसरा पैर त्र्यस्र और पक्ष में स्थित हो, मुख प्रसन्न हो, वक्षःस्थल सम और समुन्नत हो और दोनों हाथ लता मुद्रा में नितम्ब पर हो, वहाँ 'आयत' स्थानक समझना चाहिए ॥ १७१-१७२ ॥

अनुवाद—रङ्गमञ्च पर अवतरण ( आने का ) आरम्भ, पुष्पाञ्जलि का विसर्जन, ईर्ष्या से उत्पन्न प्रणय-कोप, तर्जनी उँगुली का मोटन, निषेध, गर्व, गाम्भीर्य, मौन एवं माया ( अथवा ) मान के अवलम्बन तथा दिगन्तर के निरूपण में ( अथवा अवलोकन में ) इस स्थान का संयोजन करना चाहिए ॥ १७३-१७४ ॥

अनुवाद—आवाहन में, विसर्जन में, निर्वर्णन में, चिन्ता और अवहित्थ में इस स्थान का प्रयोग करना चाहिए ॥ १७५ ॥

समो यत्र स्थितो वामस्त्र्यश्रः पक्षस्थितोऽपरः ।
वामोन्नतं त्रिकं यस्मिन्नवहित्थं तदुच्यते ॥ १७६ ॥
स्थानमेतत्तु नारीणां संल्लापे तु स्वभावजे ।
निश्चये परितोषे च वितर्के लज्जिते तथा ॥ १७७ ॥
एकः समस्थितः पाद एकस्त्वग्रतलाञ्चितः ।
सूचीविद्धमविद्धं वा तदश्वक्रान्तमुच्यते ॥ १७८ ॥
स्खलिते घूर्णिते चैव स्खलिताम्बरधारणे ।
चित्रासने सललिते स्थानमेतत्तु रक्षणे ॥ १७९ ॥
शाखावलम्बने कार्या स्तबकग्रहणे तथा ।
विश्रान्तिषु तथैव स्यात्पादताडन एव च ॥ १८० ॥
स्थानकं तावदेव स्याद्यावच्चेष्टा प्रवर्तते ।
भग्नं च स्थानकं नृत्ते चारी चेत्समुपस्थिता ॥ १८१ ॥

---

अनुवाद—जहाँ पर बायाँ पैर 'सम' स्थित हो और दाहिना पैर त्र्यस्र (तिरछा होकर) पक्ष में स्थित हो और कटि बायी ओर समुन्नत हो, वहाँ 'अवहित्थ' स्थानक होता है ।। १७६ ॥

अनुवाद—स्त्रियों के स्वाभाविक संलाप ( बात-चीत ), निश्चय, परितोष, वितर्क एवं लज्जा में इस स्थान का प्रयोग करना चाहिए ॥ १७७ ॥

अनुवाद—जहाँ पर एक पाद सम स्थित हो और दूसरा पाद अग्रतल स्थिति में हो तथा सूचीविद्ध हो अथवा अविद्ध हो वहाँ 'अश्वक्रान्त' स्थानक होता है ॥ १७८ ॥

अनुवाद—स्त्रियों के स्खलन में ( फिसलने में ), घूर्णन में ( घूरने में ) फटे-पुराने वस्त्रों के धारण में, ललित ( सुन्दरता पूर्ण ) चित्रासन में और रक्षण में इस स्थान का प्रयोग करना चाहिए ॥ १७९ ॥

अनुवाद—वृक्ष की शाखा के अवलम्बन में, फूल के गुच्छों के ग्रहण में, विश्रान्ति में और पादताडन में इस स्थान का प्रयोग करना चाहिए ॥ १८० ॥

अनुवाद—नृत्त में स्थानक तभी तक रहता है जब तक कोई चेष्टा की जाती है। यदि नृत्त में चारी का प्रदर्शन उपस्थित हो जाय तो स्थानभग्न हो जाता है ॥ १८१ ॥

एवं स्थानविधिः कार्यः स्त्रीणां सम्यग्द्विजोत्तमाः ।
पुनरासां प्रवक्ष्यामि गतीस्तु प्रकृतिस्थिताः ॥ १८२ ॥

कृत्वावहित्थं स्थानं वामं चाधोमुखं भुजम् ।
नाभिप्रदेशे विन्यस्य सव्यं च खटकामुखम् ॥ १८३ ॥

ततः सललितं पादं तालमात्रं समुत्थितम् ।
दक्षिणं वामापादस्य बाह्ये पार्श्वे विनिक्षिपेत् ॥ १८४ ॥

तेनैव समकालं च लताख्यं वामकं भुजम् ।
दक्षिणं च नयेत्पार्श्वं न्यसेन्नाभितटे ततः ॥ १८५ ॥

नितम्बे दक्षिणं कृत्वा हस्तं चोद्वेष्ट्य वामकम् ।
ततो वामपदं दद्याल्लताहस्ते च दक्षिणम् ॥ १८६ ॥

लोलयोद्वाहितेनाथ शिरसानुगतेन च ।
किंचिन्नतेन चाङ्गेन गच्छेत्पञ्चपदीं ततः ॥ १८७ ॥

यो विधिः पुरुषाणां तु रङ्गपीठपरिक्रमे ।
स एव प्रमदानां तु कर्तव्यो नाट्ययोक्तृभिः ॥ १८८ ॥

---

अनुवाद—हे द्विजोत्तमों ! इस प्रकार स्त्रियों की स्थान-विधि करनी चाहिए । अब उनको प्रकृति के अनुसार गतियों को बतलाता हूँ ॥ १८२ ॥

अनुवाद—पहिले अवहित्थ स्थान को करके बायीं भुजा में अधोमुख करे । फिर उसी बाये हाथ को खटकामुख मुद्रा में नाभिप्रदेश पर रखे । उसके बाद ललित संचार पाद एक ताल प्रमाण ऊपर उठाकर बायें पैर के बगल में रखे, फिर उसी समय बाये हाथ को लता हस्तमुद्रा में नाभितट पर रख कर दक्षिण पार्श्व को झुका दे । फिर दाहिने हाथ को नितम्ब पर रखकर बायें हाथ को उद्वेष्टित कर, फिर बायें पैर को और दाहिने हाथ को लता हस्तमुद्रा में रखे । फिर लीला से उद्वाहित सिर के अनुगत शरीर को कुछ झुकाकर पाँच पग चले ॥ १८३-१८७ ॥

अनुवाद—रङ्गमञ्च पर परिक्रमण पुरुषों के लिए जो विधान है, नाट्य-प्रयोक्ताओं को वही विधान स्त्रियों के लिए भी करना चाहिए ॥ १८८ ॥

षट्कलं न प्रयोक्तव्यं तथाष्टकलमेव च।
पादस्य पतनं तज्ज्ञैः खेदजं तद्भवेत् स्त्रियाः ॥ १८९ ॥

सयौवनानां नारोणां कार्या त्वेवं गतिर्बुधैः।
स्थानीया या स्त्रियस्तासां संप्रवक्ष्याम्यहं गतीः ॥ १९० ॥

कृत्वाऽवहित्थं स्थानं तु वामं न्यस्त कटीतटे।
आद्यं चारालमुत्तानं कुर्यान्नाभिस्तनान्तरे ॥ १९१ ॥

न निषण्णं न च स्तब्धं न चैव परिवाहितम्।
कृत्वा गात्रं ततो गच्छेत्तेनैवाद्यक्रमेण तु ॥ १९२ ॥

प्रेष्याणामपि कर्तव्या गतिर्विभ्रान्तिगामिनी।
किंचिदुन्नमितैर्गात्रैराविद्धपदविक्रमा ॥ १९३ ॥

स्थानं कृत्वावहित्थं तु वामं चाधोमुखं भुजम्।
नाभिप्रदेशे विन्यस्य सव्यं च खटकामुखम् ॥ १९४ ॥

---

अनुवाद—स्त्रियों को छः कला और आठ कला प्रमाण का पादपात नहीं करना चाहिए, क्योंकि इतने समय तक पाद का पतन स्त्रियों के लिए खेदजनक होता है ॥ १८९ ॥

अनुवाद—युवती नारियों की गति इसी प्रकार की होनी चाहिए। अब मैं प्रौढ़ा नारियों की गति को बतलाऊँगा ॥ १९० ॥

अनवाद—अवहित्थ स्थानक को करके बायें हाथ को कटितट पर रखकर दाहिने हाथ को 'अराल' मुद्रा में ऊपर की ओर मुख करके ( उत्तान ) नाभि और स्तनों के मध्य में रखे। फिर शरीर को न निषण्ण करे, न स्थिर करे और न परिवाहित करे, बल्कि उसी क्रम से चले ॥ १९१-१९२ ॥

अनुवाद—दासी नारियों की गति उद्भ्रान्तगामिनी करनी चाहिए। इस स्थिति के अभिनय में शरीर को थोड़ा उन्नमित कर भुजाओं को आविद्ध मुद्रा में रखे और अवहित्थ स्थान को करके बांयी भुजा को अधोमुख करके और दाहिनी भुजा को कटकामुख मुद्रा में नाभिप्रदेश पर रखे ॥ १९३-१९४ ॥

अर्धनारीगतिः कार्या स्त्रीपुंसाभ्यां विमिश्रिता ।
उदात्तललितैर्गात्रैः पादैर्लीलासमन्वितैः ॥ १९५ ॥

या मयाभिहिता पूर्वमुत्तमानां गतिर्बुधाः ।
स्त्रीणां कापुरुषाणां च ततोऽर्धार्धं च कारयेत् ॥ १९६ ॥

उत्तमाधममध्यानां नृणां यद्गतिचेष्टितम् ।
स्त्रीणां तदेवं कर्तव्यं ललितैः पदविक्रमैः ॥ १९७ ॥

बालानामपि कर्तव्या स्वच्छन्दपदविक्रमा ।
न तस्यां सौष्ठवं कार्यं न प्रमाणं तथाविधम् ॥ १९८ ॥

तृतीया प्रकृतिः कार्या नाम्ना चैव नपुंसका ।
नरस्वभावमुत्सृज्य स्त्रीगतिं तत्र योजयेत् ॥ १९९ ॥

विपर्यस्तप्रयोगस्तु पुरुषस्त्रीनपुंसके ।
स्वभावमात्मनस्त्यक्त्वा परभावेन योजयेत् ॥ २०० ॥

---

अनुवाद—नपुंसक पात्रों की गति का अभिनय स्त्री और पुरुषों की मिश्रित गति उदात्त और ललित गात्रों एवं लीलायुक्त पैरों से करना चाहिए ॥ १९५ ॥

अनुवाद—पहिले जो मैंने उत्तम पुरुषों की गति बतलाई है, उसका आधा स्त्रियों को तथा उसका भी आधा नीच पुरुषों की गति की योजना करनी चाहिए ॥ १९६ ॥

अनुवाद—उत्तम, मध्यम और अधम मनुष्यों की जो गति और चेष्टाएँ कही गई हैं वही ललित पद-विक्रमों द्वारा स्त्रियों को भी करनी चाहिए ॥ १९७ ॥

अनुवाद—बालकों की गति में स्वच्छन्द पद-विक्रम होने चाहिए। नाट्यप्रयोक्ताओं को उसमें न सौष्ठव की योजना करनी चाहिए और न प्रमाण की ॥ १९८ ॥

अनुवाद—तृतीया प्रकृति अर्थात् नाम से जो नपुंसक है, उनमें पुरुष के स्वभाव को छोड़कर स्त्री को गति की योजना करनी चाहिए ॥ १९९ ॥

अनुवाद—विपर्यय प्रयोग में पुरुष, स्त्री और नपुंसकों को अपना स्वभाव छोड़कर दूसरे के स्वभाव के अनुसार गति का अभिनय करना चाहिए ॥ २०० ॥

निजां प्रकृतिमुत्सृज्य क्रीडया वञ्चनेन वा ।
स्त्री पुंसः प्रकृतिं कुर्यात्स्त्रीभावं पुरुषोऽपि वा ॥ २०१ ॥

सौष्ठवेनाथ सत्त्वेन बुद्धया तद्वच्च कर्मणा ।
स्त्री पुमांसं ह्यभिनयेद्वेषवाक्यविचेष्टितैः ॥ २०२ ॥

स्त्रीवेषभाषितैर्युक्तं प्रेक्षिताप्रेक्षितस्मितैः ।
मृदुसन्नगतिश्चैव पुमान् स्त्रीभावमाचरेत् ॥ २०३ ॥

जातिहीनास्तु या नार्यः पुलिन्दशबराङ्गनाः ।
याश्चापि तासां कर्तव्या तज्जातिसदृशो गतिः ॥ २०४ ॥

व्रतस्थानां तपःस्थानां लिङ्गस्थानां तथा पुनः ।
खस्थानां चैव नारीणां समपादं प्रयोजयेत् ॥ २०५ ॥

उद्धता येऽङ्गहाराः स्युर्याश्चार्यो मण्डलानि वा ।
तानि नाट्यप्रयोगज्ञैर्न कर्तव्यानि योषिताम् ॥ २०६ ॥

---

अनुवाद—अपने स्वभाव को छोड़कर क्रीड़ा अथवा वञ्चना के द्वारा स्त्री पुरुष की प्रकृति का और पुरुष स्त्री की प्रकृति का अनुसरण करे ॥ २०१ ॥

अनुवाद—स्त्री पुरुष का अभिनय करते समय सौष्ठव, सत्त्व, बुद्धि और उसी के समान कर्म, वेष, भाषा और चेष्टाओं का अभिनय करे ॥ २०२ ॥

अनुवाद—इसी प्रकार स्त्री की वेष एवं भाषा से युक्त तथा उसी के समान देखने, न देखने एवं मुस्कराहट के द्वारा कोमल एवं मन्द गति वाला पुरुष भी स्त्री के स्वभाव का आचरण करे ॥ २०३ ॥

अनुवाद—हीन जाति की पुलिन्द, शबर आदि की जो स्त्रियाँ हैं और उनके जो कर्त्तव्य है, अपनी जाति के समान उनकी गति करनी चाहिए ॥ २०४ ॥

अनुवाद—व्रत में संलग्न, तपस्विनी तथा सन्यासिनी और आकाश में विचरण करने वाली स्त्रियों की गति में 'समपाद' चारी की योजना होनी चाहिए ॥ २०५ ॥

अनुवाद—जो अहङ्कार, चारियाँ और मण्डल उद्धत है, नाटचवेत्ताओं को स्त्री-पात्रों में उनकी योजना नहीं करनी चाहिए ॥ २०६ ॥

अथासनविधिः कार्यः स्त्रीणां नृणां तथैव च ।
नानाभावसमायुक्तं तथैव शयनाश्रयः ॥ २०७ ॥

स्वस्थं मन्दालसं क्लान्तं स्रस्तालसमथापि च ।
विष्कम्भकमुत्कटिकं मुक्तजानु तथासनम् ॥ २०८ ॥

जानुगतं विमुक्तं च स्थानकान्युपवेशने ।
लक्षणं पुनरेतेषां विनियोगं च वक्ष्यते ॥ २०९ ॥

विष्कम्भेनाञ्चितौ पादौ किञ्चिद्वक्षः समुन्नतम् ।
हस्तौ कट्यूरुविन्यस्तौ स्वस्थे स्यादुपवेशने ॥ २१० ॥

स्वभावाभिनये चैव तथा स्वस्थोपवेशने ।
आविष्कृतेषु सर्वेषु भावेष्वेतत्प्रयोजयेत् ॥ २११ ॥

एकः प्रसारितः किंचित्पादोऽन्यस्त्वासनाश्रितः ।
शिरः पार्श्वगतं चैव स्थानं मन्दालसं तु तत् ॥ २१२ ॥

---

अनुवाद—स्त्री और पुरुषों की आसन विधि में ( बैठने का विधान ) नाना प्रकार के भावों से युक्त करनी चाहिए और शयन-विधि भी इसी प्रकार करनी चाहिए ॥ २०७ ॥

अनुवाद—स्वस्थ, मन्दालस, क्लान्त, स्रस्तालस, विष्कम्भित, उत्कटिक, मुक्तजानु, जानुगत और विमुक्त ये उपवेशन में स्थानक है। अब इनके लक्षण तथा विनियोग को कहता हूँ ॥ २०८-२०९ ॥

अनुवाद—स्वस्थ उपवेशन में पैरों को वैशाख स्थानक में अञ्चित कर और वक्ष को थोड़ा ऊँचा करके दोनों हाथों को कटि और ऊरु पर रखना चाहिए ॥ २१० ॥

अनुवाद—स्वाभाविक अभिनय में और स्वस्थ उपवेशन में तथा आविष्कृत सभी भावों में इसका प्रयोग करना चाहिए ॥ २११ ॥

अनुवाद—जहाँ एक पैर थोड़ा फैलाकर और दूसरा पैर आसन पर टिका कर शिर को पार्श्व में किया जाता है वहाँ 'मन्दालस' नामक स्थानक होता है ॥ २१२ ॥

चिन्तायां च तदौत्सुक्ये निर्वेदे विरहे तथा ।
विवादादिषु चाधेयं स्थानमेतत्प्रयोक्तृभिः ॥ २१३ ॥

चिबुकापाश्रयौ हस्तौ बाहुशीर्षाश्रयं शिरः ।
संप्रणष्टेन्द्रियमना विज्ञेयं क्लान्तमासनम् ॥ २१४ ॥

चिबुकोपाश्रितौ हस्तौ बाहुशीर्षानतं शिरः ।
सम्प्रणेष्टन्द्रियमना भवेच्छोकोपवेशने ॥ २१५ ॥

बलेन विगृहीतस्य रिपुणा खण्डितस्य च ।
शोकग्लानस्य चौत्सुक्ये स्थानमेतद्विनिर्दिशेत् ॥ २१६ ॥

स्रस्तौ हस्तौ विमुक्तौ च शरीरमलसं तथा ।
खेदालसं तथा चक्षुर्यत्र स्रस्तालसं तु तत् । २१७ ॥

श्रमग्लानौ मदे चैव मूर्छायां व्याधितेषु च ।
मोहे प्राणमये चैव विषादे चैव तद्भवेत् ॥ २१८ ॥

---

अनुवाद—चिन्ता में, औत्सुक्य में, निर्वेद में, विरह में और विवाद आदि में नाट्य प्रयोक्ताओं को इस आसन का प्रयोग करना चाहिए ॥ २१३ ॥

अनुवाद—जब दोनों हाथों को चिबुक के सहारे रखे और शिर को बाहुशीर्ष अर्थात् भुजाओं के सहारे रखे तथा मन और इन्द्रियाँ संज्ञा शून्य हो जाँय तो वहां 'क्रान्त' आसन समझना चाहिए ॥ २१४ ॥

अनुवाद—पाठ भेद से शोक के उपवेशन में दोनों हाथों को चिबुक के सहारे तथा शिर को भुजाओं के सहारे रखे तथा मन और इन्द्रियाँ क्रिया शून्य की स्थिति में होनो चाहिए ॥ २१५ ॥

अनुवाद--बलपूर्वक निगृहीत और शत्रु के द्वारा खण्डित तथा शोक और ग्लानि में इस स्थानक का प्रयोग करना चाहिए ॥ २१६ ॥

अनुवाद—जहाँ पर दोनों हाथ शिथिल और विमुक्त हो, शरीर अलसाया हुआ हो और आँखें खेद से अलसाई हुई हों, वहाँ 'स्रस्तालस' कहलाता है ॥ २१७ ॥

अनुवाद—श्रम, ग्लानि, मद, मूर्च्छा, व्याधि, मोह और विषाद में इस आसन का प्रयोग करना चाहिए ॥ २१८ ॥

प्रसार्यं बाहू शिथिलौ तथा चोपाश्रयाश्रितः ।
मूर्च्छामदश्रमग्लानिविषादेषूपवेशयेत् ॥ २१९ ॥

पाठान्तरम्—

विष्कम्भावञ्चितौ पादावूरू विष्कम्भितौ भुजौ ।
निमीलितं तथा चक्षुः स्थानं विष्कम्भनामनि ॥ २२० ॥

स्ववक्षोगतया दृष्ट्या योगध्याने विलीयते ।
स्वभावसंस्थया चैव नटानामुपगम्यते ॥ २२१ ॥

पाठान्तरम्—

सर्वंपिण्डीकृताङ्गस्तु संयुक्तः पादजानुभिः ।
व्याधिपीडितनिद्रासु ध्याने चोपधिरोन्नरः ॥ २२२ ॥

---

अनुवाद—मूर्च्छा, मद, श्रम, ग्लानि तथा विषाद की दशा में पात्र दोनों भुजाओं को शिथिलता से फैलाकर किसी वस्तु के दुराश्रित होकर आसन पर बैठे ॥ २१९ ॥

### पाठभेद से अर्थ

अनुवाद—जहाँ पर दोनों पैर वैशाखस्थानक में अञ्चित हों, और ऊरु तथा दोनों भुजाएँ विष्कम्भित हों और नेत्र निमीलित हो, वहाँ 'विष्कभ' नामक स्थानक होता है ॥ २२१ ॥

अनुवाद—इस आसन में पुरुष अपने वक्षःस्थल पर दृष्टि गड़ाकर योग और ध्यान में विलीन हो जाता है और नटों के उपवेशन में स्वाभाविक स्थिति में रखा जाता है ॥ २२२ ॥

### पाठभेद का अर्थ

अनुवाद—व्याधि, व्रीड़ा, निद्रा और ध्यान की स्थिति में पुरुष सम्पूर्ण अङ्गों को सिकोड़कर पैर और जानुओं को मिलाकर उपवेशन करे ।

समौ पादौ समाधाय समं यदुपविश्यते ।
अपृष्ठभूतलं चैव ज्ञेयमुत्कटिकासनम् ॥ २२४ ॥

पित्र्ये समाधिजप्ये च होमादिकरणेषु च ।
एतत्स्थानं विधातव्यं तथाचमनकर्मणि ॥ २२५ ॥

पाठान्तरम्—

तथा चोत्कटिकं स्थानं स्फिक्पार्ष्णीनां समागमः ।
पित्र्ये निवापे जप्यं च सन्ध्यास्वाचमनेषु च ॥ २२६ ॥

एकं जानु यदास्यैव महीपृष्ठे निधीयते ।
मुक्तजानुकमेतद्धि विज्ञेयं ह्यासनं बुधैः ॥ २२७ ॥

एतत्कृतव्यलीकानां प्रियाणां संप्रसादने ।
मार्जने कुट्टिमानां च तथाभूम्यनुलेपने ॥ २२८ ॥

---

अनुवाद—दोनों पैरों को सम रखकर भूतल को स्पर्श किये बिना जो बैठा जाता है, उसे 'उत्कटिका' आसन समझना चाहिए। पितरों के तर्पण में, समाधि में जप करने में, होमादि कार्यों में और आचमन करने में इस आसन का विधान करना चाहिए ॥ २२४-२२५ ॥

### पाठभेद से अर्थ

अनुवाद—स्फिक् ( कूल्हा ) और पार्ष्णि ( एड़ी ) को मिलाकर बैठना 'उत्कटिक' स्थानक कहलाता है। श्राद्ध तथा पितरों के तर्पण, आदि में, जप करने में, सन्ध्या करने में तथा आचमन करने में इस आसन का प्रयोग करना चाहिए ॥ २२६ ॥

अनुवाद—जब इसी के एक जानु ( घुटने ) को पृथ्वी तल पर रख दिया जाय तो विद्वानों को उसे 'मुक्त जानु' आसन समझना चाहिए। प्रिया के प्रसादन में, फर्श साफ करने में भूमि के लीपने में इस आसन का विधान करना चाहिए ॥ १२७-२२८ ॥

पाठान्तरम्—

विष्कम्भिनं पुनश्चैव जानुं भूमौ निपातयेत् ।
प्रियाप्रसादने कार्यं होमादिकारणेषु च ॥ २२९ ॥

महीगताभ्यां जानुभ्यां स्थानं जानुगतं भवेत् ।
देवाभिवन्दने कार्यं रुष्टानां च प्रसादने ॥ २३० ॥

शोके चाक्रन्दने तीव्रे मृतानां चैव दर्शने ।
संत्रासने कुसत्त्वानां नीचानां चैव याचने ॥ २३१ ॥

भूमौ यदूर्ध्वपतनं तद्विमुक्तमिति स्मृतम् ।
प्रहारे तत्प्रयोक्तव्यमावेगे क्रन्दिते तथा ॥ २३२ ॥

तथासनविधि कार्यो विधिवन्नाटकाश्रयः ।
स्त्रीणां च पुरुषाणां च बाह्योऽथाभ्यन्तरस्तथा ॥ २३३ ॥

---

## पाठान्तर से अर्थ

अनुवाद—प्रियतमा को प्रसन्न करने तथा होम आदि क्रियाओं में पुरुष अपने फैले हुए घुटनों को भूमि पर गिरा दे अथवा रख दे ॥ २२९ ॥

अनुवाद—यदि दोनों जानुओं ( घुटनों ) को पृथ्वी पर रख दिया जाय तो 'जानुगत' आसन कहलाता है। देवताओं के अभिवादन में, रूठे हुए को प्रसन्न करने में, शोक में, चिल्लाने में, या आक्रन्दन में, मृतकों के देखने में, कुत्सित प्राणियों को डराने में, तथा नीचों के माँगने में इस आसन का विधान बताया गया है ॥ २३०-२३१ ॥

अनुवाद—पैरों का पृथ्वी पर ऊर्ध्वपतन 'विमुक्त' स्थानक कहा गया है। प्रहार में, आवेग में और क्रन्दन में इस आसन का प्रयोग करना चाहिए ॥ २३२ ॥

अनुवाद—स्त्री एवं पुरुष पात्रों के लिए नाटिकाश्रित विधिपूर्वक आसनों का विधान करना चाहिए। यह आसन-विधान दो प्रकार का होता है—आभ्यन्तर और बाह्य ॥ २३३ ॥

देवानां नृपतीनां च योज्यं सिंहासनं तथा ।
पुरोधः श्रेष्ठ्यमात्यानां भवेद्वेत्रासनं तथा ॥ २३४ ॥

मुण्डासनं तु कर्तव्यं सेनानीयुवराजयोः ।
काष्ठासनं ब्राह्मणानां कुमाराणां कुथासनम् ॥ २३५ ॥

स्थानीया ये तु पुरुषाः कुलविद्याप्रकाशिताः ।
तेषामासनसत्कारः कर्तव्य इह पार्थिवैः ॥ २३६ ॥

समे समासनं चैव मध्ये मध्यं तथासनम् ।
अतिरिक्तेऽतिरिक्तं च हीने भूम्यासनं तथा ॥ २३७ ॥

उपाध्यायस्य नृपतेर्गुरूणां चाग्रतो बुधैः ।
भूम्यासनं तथा कार्यं काष्ठासनमथापि वा ॥ २३८ ॥

नौनागरथयानेषु तथा काष्ठासनेषु च ।
सहासनं न दुष्येत गुरूपाध्यायपार्थिवैः ॥ २३९ ॥

---

अनुवाद—देवता एवं राजाओं के बैठने के सिंहासन की योजना करनी चाहिए । पुरोहित, श्रेष्ठी और अमात्यों के लिए वेत्रासन देना चाहिए ॥ २३४ ॥

अनुवाद—सेनापति और युवराज के लिए मुण्डासन, ब्राह्मणों के लिए काष्ठासन और राजकुमारों के लिए कुथासन (दरी या गलीचा) देना चाहिए ॥ २३५ ॥

अनुवाद—कुल और विद्या से सम्पन्न (कुलीन और विद्वान्) जो स्थानीय लोग हैं । राजाओं को उनका आसन-सत्कार करना चाहिए ॥ २३६ ॥

अनुवाद—बराबर वालों के लिए बराबर का आसन, मध्यम लोगों के लिए मध्यम आसन, साधारण लोगों के लिए अतिरिक्त आसन और हीन पुरुषों के लिए भूमि ही आसन देना चाहिए ॥ २३७ ॥

अनुवाद—उपाध्याय, राजा और गुरुओं के सामने (सम्मुख) काष्ठासन (चौकी) या भूमि पर बैठना चाहिए ॥ २३८ ॥

अनुवाद—नौका, हाथी, रथ और यान (गाड़ी) में तथा काष्ठासन पर गुरु, उपाध्याय और राजा के साथ बैठने में कोई दोष नहीं होता ॥ २३९ ॥

एवं राजसभां प्राप्य कार्यस्त्वासनजो विधिः।
प्रकृतीनां तु सर्वासां तथा ज्ञानसमुत्थितम् ॥ २४० ॥
पुरुषाणां भवेदेषु विधिरासनसंश्रयः।
स्त्रीणां चैवासनविधिं संप्रवक्ष्याम्यतः परम् ॥ २४१ ॥
सिंहासनं महादेव्या राज्ञीनां मुण्डमासनम्।
पुरोधोऽमात्यपत्नीनां भवेद्वेत्रासनं तथा ॥ २४२ ॥
भगिनीनां तु कर्तव्यं वस्त्रं चर्म कुथासनम्।
ब्राह्मणीनां तापसीनां पट्टासनमथापि च ॥ २४३ ॥
वेश्यानामपि कर्तव्यमासनं हि मसूरकम्।
शेषाणां प्रमदानां तु भवेद्भूम्यासनं बुधाः ॥ २४४ ॥
एवमन्तःपुरे ज्ञेयो बाह्यश्चासनजो विधिः।
तथा स्वगृहवार्तासु छन्देनासनमिष्यते ॥ २४५ ॥

---

अनुवाद—राजसभा में इसी प्रकार का आसन विधान करना चाहिए। समस्त प्रकृतियों और ज्ञानवान् पुरुषों के लिए इसी प्रकार का आसन-विधान विहित है। अब मैं स्त्रियों के लिए आसन-विधि को कहूँगा ॥ २४०-२४१ ॥

अनुवाद—महादेवी के लिए सिंहासन, ज्ञानियों के लिए मुण्डासन ( मूढ़ा ), पुरोहित और मन्त्रियों की पत्नियों के लिए वेत्रासन ( बेंत का आसन ) देना चाहिए ॥ २४२ ॥

अनुवाद—भोगिनी नारियों के लिए ( पाठ भेद से भगिनी के लिए ) वस्त्रासन, चर्म का आसन ( मृगछाला आदि ) तथा कुथासन ( गलीचा ) होना चाहिए। ब्राह्मणी और तपस्विनी स्त्रियों को पट्टासन देना चाहिए ॥ २४३ ॥

अनुवाद—वेश्याओं के लिए मसूरक आसन ( आराम कुर्सी अथवा मसनद वाला आसन ) होना चाहिए और शेष सभी प्रमदाओं के लिए भूमि रूप ही आसन होना चाहिए ॥ २४४ ॥

अनुवाद—इस प्रकार आभ्यन्तर और बाह्य आसन-विधि को जानना चाहिए और अपने घर में बात-चीत के समय अपनी इच्छा के अनुसार आसन-विधान करना चाहिए ॥ २४५ ॥

नियमस्थो मुनीनां तु भवेदासनजो विधिः ।
लिङ्गिनां चासनविधिः कार्यो व्रतसमाश्रयः । २४६ ॥
बृसीमुण्डासनप्रायं वेत्रासनमथापि च ।
होमयज्ञक्रियायां च पित्र्येऽर्थे च प्रयोजयेत् ॥ २४७ ॥
आकुञ्चितं समं चैव प्रसारितविवर्तिते ।
उद्वाहितं नतं षोढा शय्यास्थानानि निर्दिशेत् ॥ २४८ ॥
सर्वैराकुञ्चितैरङ्गैः शय्याविद्धे तु जानुनी ।
स्थानमाकुञ्चितं नाम शीतार्तानां प्रयोजयेत् ॥ २४९ ॥
उत्तानितमुखं चैव प्रत्यङ्मुक्तकरं तथा ।
समं नाम प्रसुप्तस्य स्थानकं संविधीयते ॥ २५० ॥
एकं भुजमुपाधाय संप्रसारितजानुकम् ।
स्थानं प्रसारितं नाम सुखसुप्तस्य कारयेत् ॥ २५१ ॥

---

अनुवाद—मुनियों का आसन-विधान नियमों के अनुसार होना चाहिए और सन्यासियों का आसन-विधान उनके व्रतानुसार होना चाहिए ॥ २४६ ॥

अनुवाद—बृशी ( कुशासन ), मुण्डासन और वेत्रासन का प्रयोग होम, यज्ञ क्रिया एवं पितरों में श्राद्ध-तर्पण आदि में करना चाहिए ॥ २४७ ॥

अनुवाद—आकुञ्चित, सम, प्रसारित विवर्त्तित, उद्वाहित और नत ये छः शयन के स्थान कहे गये हैं ॥ २४८ ॥

अनुवाद—सभी अङ्गों को सङ्कुचित करके दोनों घुटनों को शय्या पर आविद्ध कर लेटना 'अकुञ्चित' स्थानक कहलाता है। शीत से पीड़ित होने पर इस स्थान की योजना करनी चाहिए ॥ २४९ ॥

अनुवाद—मुख को ऊपर की ओर उत्तानित करके और हाथ को नीचे की ओर मुक्त रखकर शयन करना 'सम' स्थानक होता है, सोये हुए व्यक्ति के लिए इसकी योजना करनी चाहिए ॥ २५० ॥

अनुवाद—एक भुजा को तकिया बनाकर जानुओं ( घुटनों ) को फैलाकर-शयन करना 'प्रसारित' स्थान कहलाता है। सुख से सोये हुए के लिए इसकी योजना करनी चाहिए ॥ २५१ ॥

अधोमुखस्थितं चैव विर्वाततमिति स्मृतम् ।
शस्त्रक्षतमृतोत्क्षिप्तमत्तोन्मत्तेषु कारयेत् ॥ २५२ ॥

हस्तोपरि शिरः कृत्वा कूर्परक्षोभमेव च ।
उद्वाहितं तु विज्ञेयं लीलया वेशने विभोः ॥ २५३ ॥

ईषत्प्रसारिते जङ्घे यत्र स्रस्तौ करावुभौ ।
आलस्यश्रमखेदेषु नतं स्थानं विधीयते ॥ २५४ ॥

रङ्गे विकृष्टे भरतेन कार्यो गतागतैः पादगतिप्रचारः ।
त्र्यश्रेस्त्रिकोणेश्चतुरश्रके वा समेर्गतैरर्थवशेन नित्यम् ॥ २५५ ॥

वयोऽनुरूपः प्रथमस्तु वेषो वेषानुरूपेण गतिप्रचारः ।
गतिप्रचारानुगतं च पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः ॥ २५६ ॥

---

अनुवाद—नीचे मुख करके सोना 'विर्वात्तत' कहलाता है। शस्त्र से घाव होने पर, मृत्यु, ऊपर से गिरने पर, मत्त एवं प्रमत्त होने की दशा में इसका उपयोग करना चाहिए ॥ २५२ ॥

अनुवाद—शिर को हाथ पर रखकर और कोहनी को मोड़कर शयन करना 'उद्वाहित' स्थान समझना चाहिए। लीला के साथ स्वामी के बैठने में इस स्थान की योजना करनी चाहिए ॥ २५३ ॥

अनुवाद—जङ्घाओं को थोड़ा फैलाकर जहाँ पर दोनों हाथों को शिथिल कर दिया जाता है, वहां 'सम' नामक स्थानक होता है। आलस्य, श्रम और खेद की अवस्था में इस स्थान का प्रयोग किया जाता है ॥ ५४ ॥

अनुवाद—विकृष्ट रङ्गमञ्च पर नटों (अभिनेताओं) को आने-जाने के प्रकार से पाद-गति में प्रचरण करना चाहिए। त्रिकोण रङ्गमञ्च पर त्र्यस्त्र और चतुरस्त्र मञ्च रङ्गमञ्च पर चतुरस्त्र प्रकार वाली गति से प्रचरण करना चाहिए ॥ ५५ ॥

अनुवाद—नाट्य-प्रदर्शन में वय (अवस्था) के अनुरूप वेष-भषा और वेष-भूषा के अनुरूप गति-प्रचार होना चाहिए। गति प्रचार के अनुगत पाठ्य तथा पाठ्य के अनुरूप अभिनय करना चाहिए ॥ ५६ ॥

गतिप्रचारस्तु मयोदितोऽयं नोक्तस्तु यः सोऽर्थवशेन साध्यः ।
अतः परं रङ्गपरिक्रमस्य वक्ष्यामि कक्ष्यानुगतं विभागम् ॥ २५७ ॥

इति श्रीभरतीये नाट्यशास्त्रे गतिप्रचारो नाम द्वादशोऽध्यायः ॥

---

अनुवाद—इस प्रकार मैंने गति प्रचार का वर्णन किया है, जिसे मैंने नहीं कहा है उसे लोक-व्यवहार से सिद्ध कर लेना चाहिए। अब इसके बाद रङ्गमञ्च पर परिक्रमण ( सञ्चरण ) के कक्ष्यानुगत विभाग को कहूँगा ॥ ५७ ॥

॥ इस प्रकार भरतमुनि प्रणोत नाट्यशास्त्र में प्रतिप्रचार
नामक बारहवाँ अध्याय समाप्त हुआ ॥ १२ ॥

# [1]त्रयोदशोऽध्यायः

## अभिनवभारती

देशस्य[2] बाह्यान्तरभेदिकक्ष्या
विभागधर्मी विविधां प्रवृत्तिम् ।
आसूत्रयन्दोषविशुद्धिदक्ष-
क्रमोऽर्कदृष्टिर्जयतादृवृषाङ्कः ॥

## अभिनव-भारती

**अभिनव**—देश के बाह्य एवं आभ्यन्तर भेद से बनने वाली कक्ष्या, उसके विभाग, द्विविध धर्मी, चतुर्विध प्रवृत्तियों को सूत्र रूप में निबद्ध करता हुआ तथा दोषों से शुद्ध करने में दक्ष, सूर्य रूपी दृष्टि वाला वृषाङ्क शिव विजयी होवें।

**विशेष**—रङ्गपीठ पर देशादि की कल्पना करके बाह्य और आभ्यान्तर कक्ष्या की कल्पना करे। रङ्गमञ्च पर जो पहिले प्रवेश कर चुके हैं, वे आभ्यन्तर पात्र हैं और उनसे अधिष्ठित देश विशेष को आभ्यन्तर कक्ष्या कहते हैं। जो पात्र पीछे प्रवेश करते हैं वे बाह्य हैं और उनका स्थान बाह्य कक्ष्या है।

**धर्मी**—यहाँ धर्मी पद से द्विविध धर्मो का ग्रहण होता है—लोकधर्मी और नाट्यधर्मी।

**प्रवृत्ति**—यहाँ विविधा प्रवृत्ति से चतुर्विधा प्रवृत्ति का ग्रहण होता है। प्रवृत्तियाँ चार होती हैं—आवन्ती, दाक्षिणात्या, पाञ्चाली और ओडमागधी।

**क्रमः**—क्रम शब्द से पाद और स्थानक भेद सूचित होता है। 'पाद' १६ तत्त्वों में तेरहवाँ तत्त्व है। स्थानक गति प्रधान होने से कक्ष्या में विनियोजित है।

**अर्कदृष्टि**—अर्क ( सूर्य ) के समान दृष्टि वाला शिव।

**वृषाङ्क**—वृष चिह्न है जिसका उसे 'वृषाङ्क' कहते हैं। शिव का चिह्न 'वृष' है अतः शिव को वृषाङ्क कहा जाता है।

---

१. ब. ङ. चतुर्दशोऽध्यायः ; २. देहस्य;

इहाभिनयानन्तरं यद्यपि सर्वा वृत्तिप्रवृत्तस्य उद्दृष्टाः, सर्वान्ते च रङ्गे (३६) सूचिता कक्ष्या,[१] तच्चतुर्विधाभिनयाभिधानानन्तरमेतदध्यायार्थो वक्तव्यः। तथापि प्रत्यभिनयमितीतिकर्तव्यतोपयुज्यते। तदभिधानं विना न आङ्गिकमेवोक्तं [२]स्यादिति वक्तव्यम्। [३]तदुद्देशे तु सामान्यशब्दत्वान्नास्ति प्रत्येकमुद्देशने [४]हृतिः। तद्देशनेऽपि च गौरवं स्यात्। अत एव वादिना [५]कक्ष्यादेरपृथग्भावे यो[६] हेतुरुक्तः क्रमोल्लङ्घनादिति तस्यासिद्धत्वं विरुद्धता च, प्रत्युत प्रत्येकप्रसङ्गस्वलाभात्, क्रमस्यापदार्थत्वान्नार्थप्रमाणकत्वान्मुख्यश्रौतपदार्थबाधकत्वयुक्तं, श्रुत्या वाक्यप्रमाणस्य बाधनाविति तु भट्टलोल्लटोक्तं प्रकृते सिद्धयति विरोधाभावात्, क्रमस्य च मध्यत्वात् गतिरूपप्रयोगहेतुत्वात्, अतस्तदवसरे वाभिधानं युक्तम्। [७]तद्द्वारेणाभिनयेऽङ्गताम-गात्। [८]तद्देशत्रयं [९]वस्तुत्रयं वक्तव्यम्। तत्र प्रथमं कक्ष्याभिधानेऽयमभिप्रायः इह गतिर्गन्तव्यदेशाश्रयात्, देशश्च[१०] जलस्थलादि[११] बहुतरसमविषमादिस्वभेवसहितं काव्यार्थतामात्रेणैवेह संभवन्नपि प्रयोगस्थाने न संभवत्येवेति, तस्य परिहारार्थं [१२]कक्ष्यानिरूपणं कर्तव्यम्। अत एव पूर्वाध्यायान्त उक्तं परिक्रमे गतावुपयोगिनां स्थानविशेषाणां सम्यग्विभागं वक्ष्यामीति। सेयमध्यायसंगतिस्तां[१३] दर्शयितुमाह—ये तु पूर्वमिति।

---

१. ग कक्षा।
२. क. (टि०) उक्ता;
३. क. (टि०) तद्देशे।
४. क. ख. हृति।
५. क. (टि०) एवं वादिना। क-ख. एवोपादिना।
६. क-क. योगेत्युक्तः।
७. क-ख. तद्द्वारेऽभिनयाङ्गतामगात्।
८. क-क. तद्देहत्रयं।
९. क. वक्तृत्रयं।
१०. क-क. देशाश्रयात्मदेशश्च।
११. क-क. जलस्थलानि।
१२. क-क. कक्ष्याविरूपणं।
१३. क-क. सङ्गतिम्।

अभिनव—यहाँ पर यद्यपि अभिनय के बाद सभी वृत्तियों एवं प्रवृत्तियों को कह दिया गया है और सबके अन्त में नाट्य के ग्यारहवें अङ्ग रङ्ग ( रङ्गभूमि ) के प्रसङ्ग में कक्ष्या की सूचना दे दी गई है। इसलिए चतुर्विध अभिनयों के निरूपण के पश्चात् इस अध्याय के अर्थ कक्ष्या का निरूपण अवश्य करना चाहिए था; फिर भी प्रत्येक अभिनय में इसकी इतिकर्त्तव्यता का उपयोग है, उसके कहे बिना आङ्गिक अभिनय का भी कथन नहीं हो सकेगा, अतः इतिकर्त्तव्यता का कथन करना चाहिए। इतिकर्त्तव्यता का कथन होने पर अभिनयों का सामान्य रूप से कथन हो जायगा, तत्पश्चात् प्रत्येक के कहने में कोई क्षति नहीं है अर्थात् लक्ष्य एवं लक्षण के सामान्य कथन के बाद विशेष के कथन में कोई हानि नहीं है। दूसरे प्रत्येक के कहने में गौरव भी है। इसलिए वादी ने कक्ष्या आदि के इतिकर्त्तव्यता से पृथक् न होने में क्रमोल्लंघन रूप जो हेतु कहा है वह असिद्ध है और विरुद्ध भी।

यहाँ हेत्वाभास रूप दोष उपस्थित करते हुए कहते हैं कि 'कक्ष्या इति-कर्त्तव्यताऽपृथग्भाववती क्रमोल्लंघनात्' अर्थात् कक्ष्या इतिकर्त्तव्यता से पृथक् नहीं है, क्रमोल्लंघन होने से। इसका परिहार करते हुए कहते हैं कि यहाँ कक्ष्या में क्रमोल्लंघन रूप हेतु है ही नहीं। क्योंकि कक्षा में तो क्रम रहता ही है। अतः क्रमयुक्त कक्ष्या में क्रमोल्लंघन रूप हेतु स्वतः असिद्ध है।

दूसरे यहाँ विरुद्धत्व रूप हेत्वाभास भी है। क्योंकि क्रमोल्लंघन इतिकर्त्तव्यता अनेकत्व से व्याप्त है अर्थात् इतिकर्त्तव्यता में क्रम बना रहता है, उसका उल्लंघन नहीं होता, प्रत्युत प्रत्येक में प्रसङ्गत्व का लाभ है। इसके अतिरिक्त क्रम नामक कोई पदार्थ भी नहीं है अर्थात् क्रम के पदार्थ मानने में कोई प्रमाण नहीं है। अतः मुख्य रूप से शब्द से लाभ पदार्थ का बाधक होना भी अयुक्त है।

श्रुति से वाक्य प्रमाण का बाध होता है, यह भट्टलोल्लट का कथन प्रकृत में सिद्ध होता है, कोई विरोध न होने से और क्रम के मध्यवर्ती होने के कारण गति रूप प्रयोग का हेतु होने से। अतः गतिरूप प्रयोग के अवसर पर ही क्रम का कथन करना युक्त है। गति के द्वारा ही वह अभिनय का अङ्ग बन गया है। अतः देशत्रय और वस्तुत्रय का अवश्य विवेचन करना चाहिए।

ये तु पूर्वं मया प्रोक्तास्त्रयो वै नाट्यमण्डपाः ।
तेषां विभागं विज्ञाय ततः [1]कक्ष्यां प्रयोजयेत् ॥ १ ॥

तु शब्दाद् दूरत्वं पूर्वतायाः सूचयन् द्वितीयाध्यायार्थं स्मारयति । तेषामिति प्रत्येकमित्यभिप्रायः । मण्डपस्य यो विशिष्टो भागोऽन्तरङ्गपीठात्मकस्तं विज्ञाय विभागतो ज्ञात्वा कक्ष्यागत्युपयोगिनं स्थानविशेषं प्रयोजयेत्, विभागेन संबन्धं नयेत् । नाट्यदेशानुसारेण [2]प्रकोष्ठे त्यक्ते यो देशोऽवशिष्यते तत्रैव चातुरश्रीयम् । अत एव वामदक्षिणभागयोः कुतपविन्यासः शिष्टे[3] कक्ष्याविभागः ॥१॥

यहाँ कक्ष्या च कथन में यह अभिप्राय है कि यहाँ गन्तव्य देश के आश्रय से गति होती है और बहुत प्रकार के सम, विषम आदि स्वभेद सहित जो जल, स्थल आदि देश है, काव्य के अर्थ मात्र से यहाँ सम्भव होने पर भी प्रयोग-स्थान पर सम्भव नहीं है, अतः इनके परिहार के लिए कक्ष्या का निरूपण अवश्य करना चाहिए। अत एव पूर्व अध्याय अर्थात् बरहवें अध्याय के अन्त में कहा है कि परिक्रम अर्थात् रङ्गमञ्च पर परिक्रमण के प्रसङ्ग में गति में उपयोगी स्थल-विशेष के विभाग को सम्यग् रूप से कहूँगा। यहाँ अध्याय की संगति को दिखाने के लिए कहते हैं—ये तु इत्यादि।

**अनुवाद—जो कि पहिले मैंने तीन प्रकार के नाट्यमण्डपों का विवेचन किया है उनके विशिष्ट विभाग को समझकर तब कक्ष्या का प्रयोग करना चाहिए ॥ १ ॥**

**अभिनव**—यहाँ 'तु' शब्द से पूर्वता की दूरत्व की सूचना देते हुए द्वितीय अध्याय के अर्थ का स्मरण दिलाते हैं। यहाँ 'तेषाम् में' 'प्रत्येकम्' का अध्याहार है। मण्डप का रङ्गपीठात्मक जो विशिष्ट भाग है उसे अलग-अलग जानकर कक्ष्या और गति के उपयोगो स्थान-विशेष का उपयोग करना चाहिए और विभाग करके उनका सम्बन्ध स्थापित करे। नाट्य-प्रदेश के अनुसार प्रकोष्ठ के छोड़ देने पर जो स्थान शेष बचे, उसी में कक्ष्या का विभाग करे। इसलिए बायें और दायें भाग में कुतुप का विन्यास करे और शेष भाग में कक्ष्या का विभाग करे ॥ १ ॥

१. ग. कक्षां ।
२. क-क. च शेषे त्यक्तो वा विशिष्यते ।
३. क-क. क्लिष्टे ।

ये [1]नेपथ्यगृहद्वारे मया पूर्वं प्रकीर्तिते[2] ।
[3]तयोर्भाण्डस्य विन्यासो मध्ये कार्यः प्रयोक्तृभिः ॥ २ ॥
[4]कक्ष्याविभागो निर्देश्यो रङ्गपीठपरिक्रमात् ।
परिक्रमेण रङ्गस्य ह्यन्या[5] कक्ष्या भवेदिह ॥ ३ ॥

---

रङ्गस्य को [6]विभाग इत्याह—ये नेपथ्यगृहद्वार इत्यादिना । पूर्वमिति द्वितीयाध्याये प्रकीर्तिते भाण्डस्य ततातोद्यसहितस्य त्रिपुष्करस्य ॥ २ ॥

ततः किमित्याह—कक्ष्याविभाग इति । तेन [7]भाण्डेन यत्परित आक्रान्तं [8]तद्विवर्ज्यं शेषे रङ्गपीठदेशे निष्क्रमणप्रवेशगत्याद्युपयोगी स्थानविभागो निर्देश्यः प्रेक्षकावधिः संक्रमयितव्यः । ननु कः[9] स्थानविभाग इत्याह—परिक्रमेणेति ।

---

अनुवाद—जिन नेपथ्यगृह के दरवाजों को मैंने पहिले ( द्वितीय अध्याय में ) कहा है उनके बोच में नाटचप्रयोक्ताओं को भाण्ड-बाद्य का विन्यास करना चाहिए ॥ २ ॥

अभिनव—रङ्ग का कौन विभाग है ? इस पर कहते हैं कि जो नेपथ्यगृह के द्वार इत्यादि अर्थात् जो पहिले द्वितीय अध्याय में कहे गये हैं, वहाँ तत् और आतोद्य वाद्यों के साथ त्रिपुष्कर वाद्यों का विन्यास करना चाहिए ॥ २ ॥

विशेष—अभिनवगुप्त का कथन है कि पूर्व में अर्थात् द्वितीय अध्याय में नेपथ्यगृह में जिन दो द्वारों का उल्लेख है, जो दो दरवाजे कहे गये हैं, उन दोनों दरवाजों के मध्य में नाटचप्रयोक्ताओं को भाण्ड बाद्यों को रखना चाहिए । इस प्रकार नेपथ्यगृह में दो द्वार होने चाहिए और दोनों दरवाजों के बीच के भाग में भाण्ड-बाद्यों का विन्यास करना चाहिए ॥ २ ॥

अनुवाद—रङ्गपीठ पर परिक्रमण के अनुसार कक्ष्या-विभाग का निर्देश करना चाहिए, क्योंकि परिक्रमण के द्वारा रङ्गपीठ की अन्य कक्ष्या का विधान करना चाहिए ॥ ३ ॥

---

१. क-भ.म. नेपथ्यरङ्गभूमौ तु यौ विभागौ प्रकीर्तितौ ।
२. क-न. प्रकीर्तिताः । ३. क-न. तेषां ।
४. ग. विभागो । क-भ. म. कक्ष्याविभागौ निर्देश्यो रङ्गपीठपरिक्रमैः ।
५. ख. कक्ष्या ह्यन्या विधीयते । क-भ.म. कक्ष्यान्या ह्यभिधीयते । क-द. अन्यकक्ष्या भवेद्यतः ।
६. क. कोऽपि भागः । ७. क. दण्डेन ।
८. क. तद्विभज्य । ९. क. क्रमस्थानविभागः ।

[1]कक्ष्याविभागे ज्ञेयानि गृहाणि नगराणि च।
[2]उद्यानारामसरितस्त्वाश्रमा अटवी तथा ॥ ४ ॥
[3]पृथिवी सागराश्चैव त्रैलोक्यं सचराचरम्।
[4]वर्षाणि सप्तद्वीपाश्च पर्वता विविधास्तथा[5] ॥ ५ ॥
[6]अलोकश्चैव लोकश्च रसातलमथापि च।
[7]दैत्यनागालयाश्चैव गृहाणि[8] भवनानि च[9] ॥ ६ ॥

परिक्रामन्त्यनेनेति परिक्रामः चार्यादिसंनिवेशः तद्वशादेकस्यापि रङ्गदेशस्य स्थान-भेदेनापरित्यागः, यथा—'आरोढुमुद्वहेद्गात्रं', 'अतिक्रान्तेन पादेन' ( १२-१०२ ) इत्यादिना विशेष तु प्रासादपर्वतादिरूपत्वमस्यैव ॥ ३ ॥

अभिनव—यहाँ अभिनवगुप्त का कथन है कि इससे क्या हुआ ? इस पर कहते हैं कि कक्ष्या विभाग इत्यादि। उस भाण्ड-वाद्य के विन्यास से जो चारों तरफ से आक्रान्त है, उसे छोड़कर शेष बचे हुए रङ्गपीठ पर निष्क्रमण और प्रवेश के लिए गति के उपयोगी स्थान के विभाग का निर्देश करना चाहिए अर्थात् प्रेक्षकों के बैठने की अवधि तक स्थान-विभाग को सङ्क्रान्त कर देना चाहिए। वह स्थान-विभाग क्या है ? इस पर कहते हैं कि जिससे परिक्रमण करते हैं वह परिक्रम है, चारी आदि का सन्निवेश है उसके अनुसार रङ्ग के एक भाग का परित्याग स्थान-भेद से नहीं करना चाहिए। जैसे—'चढ़ने के लिए शरीर को ऊपर उठाये और 'प्रासाद के आरोहण में एक पैर अतिक्रान्त चारो और दूसरे पैर को 'अञ्चित' गति में रखनो चाहिए' इत्यादि के द्वारा विशेष स्थल में तो पर्वत, प्रासाद रूप तो है ही ॥ ३ ॥

अनुवाद—कक्ष्या के विभाग में गृह, नगर, उद्यान, आराम ( क्रीड़ा-स्थल ), नदी, आश्रम, अटवी ( वन ), पृथिवी, सागर, चराचर अर्थात् जड़ और चेतन पदार्थों सहित त्रैलोक्य, भारतवर्ष आदि सभी वर्ष, सातों द्वीप, विविध पर्वत, लोक और अलोक, दैत्यों और सर्पों के आलय, आराम-गृह एवं भवन आते हैं ॥ ४-६ ॥

१. ग कक्षाविभागे। २. ख. उद्यानारामसरित आश्रमा वलभीस्तथा।
३. क-भ. म. ससागरा च पृथिवी तथा त्रैलोक्यमेव च।
द्वीपा सप्ताथ वर्षाणि पर्वता विविधास्तथा ॥
४. क-प. द्वीपाश्च सप्तवर्षाणि। ५. क-द. सार्धं श्लोकद्वयं नास्ति।
६. क-इ दैत्यानामालयश्चैव। ७. क-इ. भुवनानि।
८. क-भ.म. परिक्रमेषरङ्गस्य तथैवार्थवशेन च।

[1]नगरे वा वने वापि वर्षे वा पर्वतेऽपि वा।
यत्र [2]वार्ता प्रवर्त्तेत तत्र कक्ष्यां प्रवर्तयेत् ॥ ७ ॥

---

ननु भाण्डवाद्यविनियुक्ते रङ्गपीठदेशे क्रमविशेषस्थानभेदक्लृप्ति । [3]तन्नेत्याह—कक्ष्याविभाग इत्यादि ।

विशिष्टे शिष्टे देशे स्थानान्तराणि कल्पनीयानि तानि कविजनस्मरणार्थमुपलक्षणत्वेन पठन्ति । [4]गृहादीनि पृथ्वीस्वर्गपातालभेदात्पुनरुदाहृतानि सर्वं संग्रहाय त्रैलोक्यमित्युक्तेऽपि स्मरणार्थं [5]वर्णनोद्देशः ४-५-६ ।

ननु सर्वत्र प्रयोगे सर्वे त्रैलोक्यवर्तिनः स्थानभेदाद् (भिन्नाः गृहाः) किं संभावितः। नेति दर्शयति नगरे वेत्यादि । निपातैरनुक्ता अटव्यादयः[6] साक्षात् ग्राह्या इति वा वीप्सया[7] द्योत्यते । यत्र-यत्र वार्ता वृत्तान्त इतिवृत्तबलायातः प्रकर्षण वर्तते तत्रमध्ये यो देशविभागस्तमेव प्रवर्तयेत् रङ्गपीठे दर्शयेत् न सर्वमित्यर्थः ॥७॥

---

अभिनव—यहाँ जा यह प्रश्न उपस्थित होता है कि भाण्डवाद्यों से 'विनिर्मुक्त रङ्गपीठ पर क्रम-विशेष एवं स्थान-भेद की कल्पना कर ली जातो है, वह बात नहीं है। इस पर कहते हैं कि कक्ष्याविभाग इत्यादि ।

अभिनव—कक्ष्या-विभाग के विशिष्ट देश में भिन्न-भिन्न स्थानों की कल्पना कर लेनी चाहिए, उन्हें कवि जनों के स्मरणार्थ उपलक्षण द्वारा कहा गया है। यद्यपि पृथ्वी आदि सभो स्थानों का एक साथ संग्रह के लिए एक शब्द 'त्रैलोक्यम्' से कह दिया गया है, फिर भी स्वर्ग, पृथ्वी, पाताल भेद से ग्रह, प्रासाद आदि का पुनः कथन कवियों के स्मरणार्थ वर्णनोद्देश के लिए पृथक्-पृथक् वर्णन किया है ॥ ४-६ ॥

अनुवाद—नगर में अथवा वन में अथवा वर्ष (भारतवर्षादि) में अथवा पर्वतों पर जहाँ-जहाँ वार्ता अर्थात् वृतान्त फैल सके वहाँ-वहाँ कक्ष्या का प्रयोग करना चाहिए ॥ ७ ॥

---

१. ख. ग. तथा सप्त समुद्राश्च वर्षा वै पर्वतास्तथा ।
२. क-द. यत्र वार्त्ता। प्रवर्त्तन्ते ।
३. क. तानेत्याह ।
४. क. गृह्यादीनि ।
५. क. कथनेनोद्देशः । ख. स्मरणोद्देशः ।
६. क. अटव्यानयसाक्षात् ।
७. क. तथा वीप्साद्योते ।

बाह्यं वा मध्यमं वापि तथैवाभ्यन्तरं पुनः ।
दूरं वा सन्निकृष्टं वा [1]देशं तु परिकल्पयेत्[2] ॥ ८ ॥
पूर्वप्रविष्टा ये रङ्गं ज्ञेयास्तेऽभ्यन्तरा[3] बुधैः ।
पश्चात्प्रविष्टा [4]विज्ञेयाः कक्ष्याभागे तु बाह्यतः[5] ॥ ९ ॥

---

विशिष्टे देश इत्युक्तं तं रङ्गपीठस्य विशेषं दर्शयति—बाह्यं वेत्यादि ।

भागत्रितये सति कस्मिंश्चिद्भागे देशादि कल्पयित्वा तत्रैव दूरादिभेदं परिकल्पेत, भूयस्त्वाल्पत्वादि भिन्नेन परिक्रमेण कल्पयेदित्यर्थः ॥८॥

बाह्यादिभेदं निरूपयति पूर्वप्रविष्टा इति ।

---

**अभिनव**—अभिनवगुप्त का कथन है कि सब जगह प्रयोग होने पर सभी त्रैलोक्यवर्त्ती का स्थान भेद से क्या वहाँ प्राप्त होना सम्भव है ? इस पर कहते हैं कि नहीं, इसलिए कहत हैं कि नगर में इत्यादि । यहाँ पर अटवो ( जंगल ), नदी, उद्यान, आश्रम, आराम आदि का साक्षात् बोध में पदों से कथन नहीं है अतः उनका निपातों से ग्रहण करना चाहिए, यह बात 'वा' शब्द की वोप्सा से घोषित होती है । जहाँ-जहाँ पर वार्त्ता अर्थात् इतिवृत्त के कथन से प्राप्त वृत्तान्त प्रकृष्ट रूप से हो, वहाँ उनके मध्य में स्थित जो देश विशेष हैं, उसी को प्रवर्तित करे अर्थात् रङ्गपीठ पर दिखाये, सभी देशों को नहीं ॥ ७ ॥

**अभिनव**—विशिष्ट देश, यह जो कहा गया है, अतः उस रङ्गपीठ के विशेष देश को 'बाह्यं वा' इत्यादि से दिखाते हैं—

**अनुवाद—बाहर या मध्य में, उसी प्रकार भीतर, अथवा दूर या पास में देश की कल्पना करनी चाहिए ॥ ८ ॥**

रङ्गपीठ के तीन भाग होने से किसी भाग में देशादि की कल्पना करके उसी में दूरादि भेदों की कल्पना करे । अभिनय के भूयस्त्व ( आधिक्य ) और अल्पत्व के कारण भिन्न हुए परिक्रम से ही कल्पना करे, यह इसका भाव है, अर्थ हैं ॥ ८ ॥

अब बाह्यादि भेद का निरूपण करते हैं—

**अनुवाद—जो पहिले रङ्गमञ्च पर प्रवेश कर चुके हैं, उन्हें विद्वानों को आभ्यन्तर पात्र समझना चाहिए और जो बाद में प्रविष्ट हुए हैं, उन्हें कक्ष्या भाग में बाह्य समझे ॥ ९ ॥**

---

१. ख. देशात् । २. क-द. समुपलक्षयेत् । भ. समुपपारयेत् ।
३. ख ग. अभ्यन्तरे । ४. ग. ते ज्ञेयः ।
५. ग. (टि०) कथाभागे तु मध्यतः ।

तेषान्तु दर्शनेच्छुर्यः[1] प्रविशेद्रङ्गमण्डलम् ।
[2]दक्षिणाभिमुखः [3]सोऽथ कुर्यादात्मनिवेदनम् ॥ १० ॥

---

पूर्वभूताः प्रधानभूता सन्तः पूर्वं ये प्रविष्टास्ते अभ्यन्तरा इति तदधिष्ठितो देशविशेषोऽभ्यन्तरकक्ष्या प्रधानभूतस्तु पूर्वप्रविष्टोऽपि प्रधाने प्रविशति स्वकक्ष्यान्त्य इत्येव । पश्चात्प्रविष्टानां तु स्थानं बाह्यकक्ष्या । ते तु येन स्थानविशेषेण प्राक् प्रविष्टमुपसर्पन्ति स देशो मध्यमा कक्ष्या ॥ ९ ॥

एतदुक्तं भवति पूर्वप्रविष्टस्य स्वस्थान एवेतिवृत्तोचितगृहोद्यानादिविभागः पश्चात्प्रविष्टस्यापि पूर्वप्रविष्टेन सह यावन्न संमिलनं, तावत्प्रेक्षायामेव । मध्यमकक्ष्यायां तु गतिपरिक्रमादिः तत्संमेलनार्थम् । संमिलितानां तु कक्ष्याविभागो विच्छिद्यत इति संमेलन इतिकर्तव्यतामाह—तेषां त्विति ।

---

अभिनव—यहाँ पूर्व शब्द का अर्थ दो प्रकार से होता है—एक पूर्वभूत अर्थात् प्रधानभूत । अतः प्रधान होने के कारण जो पहिले प्रविष्ट हैं, वे आभ्यन्तर हैं, इसलिए उनसे अधिष्ठित देशविशेष को आभ्यन्तर कक्ष्या कहते हैं । दूसरा पूर्व का अर्थ अप्रधानभूत । अप्रधानभूत पूर्व में प्रविष्ट हुआ भी प्रधान के प्रवेश करने बाद भी अपनी कक्ष्या के अन्त ही में रहेगा । पीछे से प्रवेश करने वालों का स्थान तो बाह्य कक्ष्या है । जो जिस स्थान-विशेष के द्वारा पूर्व प्रविष्ट का उपसर्पण करने वालो का स्थान विशेष मध्यम कक्ष्या है ॥ ९ ॥

अभिनव—यहाँ यह कहा गया है कि पूर्व प्रविष्ट का अपने स्थान में ही इतिवृत्त के योग्य गृह एवं उद्यानादि का विभाग है और पीछे प्रवेश करने वालों का भी जब तक पूर्व प्रविष्ट हुए के साथ सम्मिलन नहीं होता तब तक प्रेक्षागृह में ही वह विभाग है । मध्यम कक्ष्या में तो उनके साथ सम्मेलन के लिए गति, परिक्रम आदि करना चाहिए । सम्मिलित हो जाने पर तो उनका कक्ष्या-विभाग विच्छिन्न जाता है । अतः सम्मेलन के विषय में इतिकर्त्तव्यता को कहते हैं—तेषां तु इत्यादि—

अनुवाद—उनमें भी दर्शन के इच्छुक जो प्रेक्षक रङ्गमण्डप में प्रवेश करते हैं उन्हें दक्षिणाभिमुख होकर आत्म निवेदन करना चाहिए ॥ १० ॥

---

१. ग. दर्शनेच्छुः सन् ।
२. ब. दक्षिणाभिमुखं । ३. क-त. सो वै ।

[1]यतो मुखं भवेद्भाण्डं द्वारं नेपथ्यकस्य च ।
[2]सा मन्तव्या तु दिक् पूर्वा नाट्ययोगेन[3] नित्यशः ॥ ११ ॥

पूर्वप्रविष्टानां कर्मणि षष्ठी पूर्वं प्रविष्टस्य यो दक्षिणो भागस्तं वीक्षमाणः स्थितो यथा प्रेक्षकस्य यः पराङ्मुखो भवतीत्यर्थः । एषां प्रवृत्तये दाक्षिणत्यादिके क्रमः एतद्विपरीतमन्यत्र । प्रवृत्त्यवयवोद्भाविनं क्रममथशब्देन सूचयति तेनेदमाह प्राधान्येनोत्तराभिमुखं दक्षिणस्यामात्मनिवेदनं यथावदितिवृत्तवशात्तादृङ् निबध्यते । पूर्वप्रविष्टैः सह संमिलितस्य सर्वं बाह्यकक्ष्यायामेवेति तुशब्दस्यार्थः ॥ १० ॥

का खल्विह पूर्वा दिगित्याह—यतोमुखमिति समस्त पदम् । यदपेक्षं भाण्डस्य मुखं सा दिक् पूर्वा । ननु भाण्डस्य मुखं दुर्ज्ञानमित्याह द्वारमिति । नेपथ्यग्रहणेन गृहस्य पूर्वमुखं द्वारम् । भाण्डोपादानं तु तस्य प्रतियोजने पूर्वतां प्रकटयति प्राधान्यज्ञापनेन ॥ ११ ॥

अभिनव—यहाँ 'पूर्वं प्रविष्टानां' में कर्म में षष्ठी है । पूर्व प्रविष्ट पात्र का जो दक्षिण भाग है उसको देखता हुआ ऐसा खड़ा हो जिसमें प्रेक्षक से पराङ्मुख हो जाय । पूर्व प्रविष्टों इनकी प्रवृत्ति के लिए दाक्षिणादि में क्रम है । अन्यत्र अर्थात् बाद में प्रविष्ट पात्रों का इसके विपरीत क्रम है । यह क्रम अथ शब्द से सूचित होता है । इसलिए ऐसा कहते हैं कि प्रधानता के कारण उत्तराभिमुख होकर दक्षिण दिशा में आत्म निवेदन करना केवल इतिवृत्त के वश से ( यथानत् ) उचित है । पूर्व में प्रविष्ट हुए पात्रों के साथ सम्मिलित हुए पात्रों का सब कुछ बाह्य कक्ष्या में ही होता है, यह 'तु' शब्द का अर्थ है ॥ १० ॥

पूर्व दिशा कौन है ? इस पर कहते हैं—

अनुवाद—जिधर अर्थात् जिस ओर भाण्डवाद्य का मुख हो और जिस ओर नेपथ्यगृह का द्वार हो, नाटयप्रयोग में उसे पूर्व दिशा समझनी चाहिए ॥ ११ ॥

१. अयं श्लोकः 'ख' पुस्तके नास्ति ।
२. क-भ. पूर्वादि दिक्षु विज्ञेयं प्रयोगे नाट्यसंश्रये ।
३. क-ड. नाट्ययोगे तु नित्यशः ।

[1]निष्क्रामेद्यश्च तस्माद्वै स तेनैव यथा व्रजेत् ।
यतस्तस्य कृतं तेन पुरुषेण निवेदनम् ॥ १२ ॥
[2]निष्क्रान्तोऽर्थवशाच्चापि प्रविशेद्यदि[3] तद् गृहम् ।
[4]यतः प्राप्तः स पुरुषस्तेन [5]मार्गेण निष्क्रमेत् ॥ १३ ॥
[6]अथवार्थवशाच्चापि तेनैव सह गच्छति ।
तथैव प्रविशेत् [7]गेहमेकाकी सहितोऽपि वा ॥ १४ ॥

तेनैवेति पूर्वंप्रविष्टपात्रान्तरयोगेनेत्यर्थः ॥ १२ ॥

अभिनव—'यतो मुखम्' यह समस्त पद है। जिसकी अपेक्षा से भाण्डवाद्यों का मुख हो, वही पूर्व दिशा है। अब प्रश्न यह है कि केवल भाण्ड के मुख को प्रमाण मानना कष्टकर है। इस पर कहते हैं कि द्वार को प्रमाण मानकर। क्योंकि द्वार विधिपूर्वक निर्मित होता है। नेपथ्य पद के ग्रहण से ज्ञात होता है कि नेपथ्यगृह का द्वार पूर्वाभिमुख होता है। भाण्ड पद का उपादान तो उसकी प्रतियोजना रहने पर प्रधानता के कारण पूर्व दिशा को सूचित करता है ॥ ११ ॥

अनुवाद—जो व्यक्ति जिस मार्ग से निष्क्रमण करे, वह उसी मार्ग से वैसे ही प्रवेश करे, क्योंकि उस व्यक्ति ने उसी मार्ग का उपयोग किया था ॥ १२ ॥

अभिनव—यहाँ 'तेनैव' पद का अर्थ है पूर्व में प्रविष्ट पात्र के अनन्तर प्रविष्ट दूसरे पात्र के सम्बन्ध से ॥ १२ ॥

अनुवाद—किसी प्रयोजन से बाहर निकल जाने पर यदि वही व्यक्ति पुनः उस गृह में प्रवेश करे तो जिस मार्ग से वह प्रवेश किया था उसी मार्ग से निकल जाय ॥ १३ ॥

अनुवाद—अथवा किसी कार्यवश कोई व्यक्ति किसी के साथ जिस मार्ग से बाहर जाता है तो उसे उसी के साथ अथवा अकेले उसी मार्ग से उसी प्रकार प्रवेश करना चाहिए ॥ १४ ॥

१. ख. ग. पुस्तकयो अयं श्लोकः इत्थं पठ्यते । निष्क्रामेच्चापि यस्तत्र नरः कार्येण केनचित् ।
स निष्क्रमेत्तु तेनैव कृतं येन निवेशनम् ॥
२. इतः परं श्लोकचतुष्टयं क.ख. पुस्तकयोर्नास्ति ।
३. क-द. निवेशेदत्र तद्गृहम् । क-द-न. विशेद्यदि तद्गृहम् ।
४. क-ज. प्राप्तः स पुरुषो येन ।
५. क-न. तेनैव यथा व्रजेत् ।
६. क-ढ. यद्यप्यर्थं वशाच्चैव ।
७. क. तथैव प्रविशेद्गृहम् ।

तयोश्चापि प्रविशतोः [1]कक्ष्यामन्यां विनिर्दिशेत् ।
परिक्रमेण रङ्गस्य त्वन्या कक्ष्या विधीयते ॥ १५ ॥
समैश्च सहितो गच्छेन्नीचैश्च परिवाहितः ।
अथ [2]प्रेक्षणिकाश्चापि विज्ञेया ह्यग्रतो गतौ ॥ १६ ॥
सैव भूमिस्तु बहुभिर्विकृष्टा स्यात्परिक्रमैः[3] ।
मध्या वा सन्निकृष्टा वा तेषामेवं विकल्पयेत् ॥ १७ ॥

---

[4]एवं बाह्यं वा मध्यमं वापि तथैवाभ्यन्तरमिति दूरं वा सन्निकृष्टं वेत्यादि विभजति सैव भूमिरिति ॥ १७ ॥

विकल्पानां मध्यात्पत्वरचनादिश्च न केवलमल्पत्वबहुत्वकृतमेव ? परिक्रम-वैचित्र्यं यावदन्यदपीति दर्शयति नगरे वेत्यादिना प्रयोगत इत्यन्तेन ।

---

**अनुवाद**—इस प्रकार दोनों पात्रों के प्रवेश करते समय अन्य कक्ष्या की सूचना दी जाय और रङ्गमञ्च के परिक्रमण से अन्य कक्ष्या का विधान होना चाहिए ॥ १५ ॥

**अनुवाद**—समान श्रेणी के पात्रों के साथ-साथ चलना चाहिए और अधम पात्रों के साथ परिवारित ( घिरे हुए ) होकर चलना चाहिए तथा चलने के समय प्रतीहारी को आगे चलना बताया जाय ॥ १६ ॥

**अभिनव**—अब पूर्वोक्त बाह्य, मध्य एवं आभ्यन्तर तथा दूर, मध्य एवं सन्निकृष्ट के विभाग के कहते हैं—

**अनुवाद**—रङ्गमण्डप की वही भूमि, यदि बहुत परिक्रमण करने पड़े तो 'विकृष्टा', यदि मध्य परिक्रमण करने पड़े तो 'मध्या' और यदि थोड़ा परिक्रम करने पड़े तो 'सन्निकृष्टा' कहलाती है। परिक्रम के कारण उस भूमि का विकल्प इस प्रकार करना चाहिए ॥ १७ ॥

**अभिनव**—भूमि की विकृष्टत्वादि का रचना केवल बहुत्व एवं अल्पत्व के कारण ही नहीं, बल्कि परिक्रम-वैचित्र्य के कारण भी होती है, इसी बात को कहते हैं—

---

१. ख.ग. काष्ठामन्यां ।
२. क-द. प्रेषणकाः । क-न. प्रेषणिकाः ।
३. क-भ-म. इदं श्लोकार्धं नास्ति ।
४. क. एवं बाह्ये वा मध्यमे वापि तथैवाभ्यन्तर इति विकृष्टं दूराभित्यादि ।

नगरे वा वने वापि सागरे पर्वतेऽपि वा ।
दिव्यानां गमनं कार्यं [1]द्वीपे वर्षेषु वा पुनः ॥ १८ ॥

आकाशेन विमानेन माययाप्यथ वा पुनः ।
विविधाभिः क्रियाभिर्वा नानार्थाभिः प्रयोगतः ॥ १९ ॥

नाटके च्छन्नवेषाणां दिव्यानां भूमिसञ्चरः ।
मानुषैः[2] कारणादेषां यथा[3] भवति दर्शनम् ॥ २० ॥

---

प्रयोगो नाट्यम् । दिव्यानां देवयोनीनां पिशाचादिब्रह्मान्तानां यन्नगरादिद्वीपादिविषयाऽऽगमनं तदाकाशेनैव आकाशगामिना विमानेन, मायया वा अदर्शनरूपया, अन्याभिर्वा बलादाहरणादिक्रियाभिर्विविधप्रयोजनाभिः कार्यमिति सम्बन्धः ॥ १९ ॥

न च द्विव्यानामेष एव प्रकारः किं तु अन्योऽप्यस्तीत्याह नाटक इति ।

---

अनुवाद—दिव्य पात्रों को नगर, वन, पर्वत, समुद्र, भारतवर्षादि वर्ष तथा द्वीप आदि सभी स्थानों में आकाश मार्ग से, विमान से, अथवा माया के द्वारा अथवा विविध क्रियाओं के द्वारा नाना प्रकार के प्रयोगों के द्वारा गमन करना चाहिए ॥ १८-१९ ॥

अभिनव—प्रयोग-जो नाट्य में किया जाता है दिव्य अर्थात् पिशाचादि से लेकर ब्रह्म पर्यन्त सभी देव योनियों का नगर, द्वीप आदि स्थानों में गमन आकाशगामी विमान से अथवा अदर्शन रूप माया से अथवा नाना प्रयोजनवती आहरणादि रूप विविध क्रियाओं के द्वारा करना चाहिए ॥ १८-१९ ॥

अभिनव—दिव्यों के लिए केवल यही उपर्युक्त एक ही प्रकार नहीं है, किन्तु अन्य भी प्रकार है, उसको कहते हैं—

अनुवाद—नाटक में दिव्य पुरुषों का प्रच्छन्न वेष में पृथ्वी पर संचरण होना चाहिए; क्योंकि कारण विशेष से ही मनुष्यों को इस दिव्य विभूतियों का दर्शन होता है ॥ २० ॥

---

१. क-न. द्वीपवर्षेषु वा पुनः । क-प. वर्षाद्वीपेषु वा पुनः ।
२. क-न. मानुषैः कारणैरेषां ।
३. क-न. प्रयोक्तृभिः । क. यदा ।

भारते त्वथ हैमे वा हरिवर्ष इलावृते ।
रम्ये किंपुरुषे वापि कुरुषूत्तरकेषु वा ॥ २१ ॥
दिव्यानां छन्दगमनं [1]सर्ववर्षेषु कीर्त्तितम् ।
भारते मानुषाणाञ्च गमनं संविधीयते ॥ २२ ॥
[2]गच्छेद्यदि विकृष्टस्तु देशकालवशान्नरः ।
[3]अङ्कच्छेदे तमन्यस्मिन् निर्दिशेद्धि प्रवेशके ॥ २३ ॥

---

वेषशब्देन चापादतलं वपुर्लक्ष्यते । तेन वरप्रदानाद्यनुग्रहनिमित्ताच्छन्नस्वरूपाणां देवानां मानुषे दर्शनं भवति, तदा नाटके प्रयोगे तेषामपि भूमिसञ्चरः, संचरत्यस्मिन्निति सञ्चरः भूमिरेव ॥ २० ॥

अयं तु देवेषु सामान्यकल्प इत्याह—दिव्यानामिति ।

पुराणेषु त्वयं सामान्यविधिरित्याह—भारत इति न त्विलावृतावावित्यर्थः ॥ २२ ॥

---

**अभिनव**—वहाँ वेष शब्द से पादतल तक शरीर लक्षित होता है । इससे यह प्रतीत होता है कि वरदान आदि अनुग्रह के कारण ही प्रच्छन्न स्वरूप वाले देवताओं का मनुष्य के रूप में दर्शन होता है, ऐसी अवस्था में नाटक के प्रयोग में दिव्यों का भी भूमि पर सञ्चार होता है, क्योंकि जहाँ घूमते हैं वहाँ भूमि ही होगी ॥ २० ॥

**अभिनव**—अब देवताओं के सामान्य कल्प ( प्रकार ) का निरूपण करते हैं—

**अनुवाद—भारतवर्ष और हिमपर्वत पर, हरिवर्ष, इलावृत्तवर्ष, रम्य किंपुरुष वर्ष ( किन्नर प्रदेश ) अथवा उत्तर कुरु प्रदेश में सभी वर्षों में दिव्य पात्रों का स्वतन्त्र गमन कहा गया है । किन्तु भारतवर्ष में तो मनुष्यों के गमन का संविधान है ही ॥ २१-२२ ॥**

**अभिनव**—पुराणों में तो यह सामान्य-विधान कहा गया है । यह भारतवर्ष में ही, न कि इलावृत्त आदि वर्षों में । यह भावार्थ है ॥ २१-२२ ॥

**अनुवाद—यदि कोई मनुष्य कार्यवश दूरदेश में जाय तो अङ्क का विच्छेद होने पर दूसरे अङ्क के प्रारम्भ में प्रवेशक के द्वारा प्रदर्शित करे ॥ २३ ॥**

---

१. ख. वर्षेष्वेतेषु कारयेत् ।

२. विकृष्टं यस्तु गच्छेद्धि देशं कार्यवशान्नरः ।
   क-द. गच्छेद्यदि विकृष्टं तु देशं कालवशान्नरः ।
   म. पुस्तके इतः पञ्च श्लोकाः न सन्ति ।

३. क-ज. अङ्कच्छेदेन चान्यास्मिन् निर्दिशेत्तं प्रवेशके ।

[1]अह्नः प्रमाणं गत्वा तु कार्यलाभं विनिर्दिशेद् ।
[2]तथालाभे तु कार्यस्य अङ्कच्छेदो विधीयते ॥ २४ ॥
क्षणो मुहूर्तो यामो वा दिवसो वापि [3]नाटके ।
[4]एकाङ्के सविधातव्यो बीजस्यार्थवशानुगः ॥ २५ ॥
[5]अङ्कच्छेदे तु निर्वृत्तं मासं वा वर्षमेव वा ।
नोर्ध्वं वर्षात्प्रकर्तव्यं कार्यमङ्कसमाश्रयम् ॥ २६ ॥
एवन्तु भारते वर्षे कक्ष्या[6] कार्या प्रयोगतः ।
[7]मानुषाणां गतिर्या[8] तु दिव्यानान्तु निबोधत ॥ २७ ॥

---

अनुवाद—दिन के प्रमाण के अनुसार किसी स्थान पर जाकर कार्य-सिद्धि का निर्देश करे। यदि उतने समय में उस प्रकार का लाभ न हो तो अङ्कच्छेद कर देना चाहिए ॥ २४ ॥

अनुवाद—नाटक में क्षण, मुहूर्त्त, प्रहर अथवा एक दिन का वृत्त बीज के प्रयोजन के अनुसार एक ही अङ्क में समाप्त कर देना चाहिए ॥ २५ ॥

अनुवाद—वर्ष अथवा मास के कार्य को अङ्कच्छेद में ( अङ्क की समाप्ति पर ) निवर्त्तन ( समाप्त ) कर देना चाहिए। एक अङ्क में कार्य को एक वर्ष से अधिक के नहीं होने चाहिए ॥ २६ ॥

अनुवाद—इस प्रकार भारतवर्ष में प्रयोग के अनुसार कक्ष्या का विभाग करना चाहिए। यह मनुष्यों की गति हैं। अब दिव्य पात्रों की गति को समझे ॥२७॥

---

१. ख. ऊर्ध्वप्रमाणं । क-ज. अङ्कप्रमाणं ।
२. क-न. तथालाभेषु कार्यं स्यात् ।
क-भ. तथालाभे तु कार्यं स्यात् ।
३. क-ज. मध्याह्ना दिवसोऽपि वा ।
४. क-ज. अङ्के अङ्के ।
५. ख. अङ्कच्छेदं पुनर्वृत्तं ।
६. क-उ. कक्ष्या कार्या प्रयोक्तृभिः ।
७. ख. मानुषाणां गतौ येषां दिव्यानां तु निबोधत ।
८. क. (टि०) गतिर्ज्ञेया । गतिर्ह्येषां । गतिर्यास्तु ।

हिमवत्पृष्ठसंस्थे तु कैलासे पर्वतोत्तमे ।
यक्षाश्च गुह्यकाश्चैव धनदानुचराश्च ये ॥ २८ ॥
[1]रक्षःपिशाचभूताश्च सर्वे हैमवताः स्मृताः ।
हेमकूटे च गन्धर्वा विज्ञेयाः [2]साप्सरोगणाः ॥ २९ ॥
सर्वे नागाश्च निषधे शेषवासुकितक्षकाः[3] ।
महामेरौ त्रयस्त्रिंशद् ज्ञेया देवगणा बुधैः[4] ॥ ३० ॥
नीले तु वैडूर्यमये [5]सिद्धा ब्रह्मर्षयस्तथा ।
दैत्यानां दानवानाञ्च श्वेतपर्वत इष्यते[6] ॥ ३१ ॥

वर्षे प्रचारादाह—हैमतो इति । हिमवति बाहुल्ये नैषां गतिरित्यर्थः । एवं सर्वत्र ॥ २८-२९ ॥

नील इति अद्रिविशेषे, तस्यैव विशेषणं वैडूर्यमये, एतच्च कवेः शिक्षार्थम् ॥ ३१ ॥

अनुवाद—हिमालय पर्वत के पृष्ठभाग पर स्थित पर्वतश्रेष्ठ कैलास पर रहने वाले जो यक्ष, गुह्यक और कुबेर के अनुचर और राक्षस, भूत, पिशाच हैं, वे सब 'हैमवत' अर्थात् हिमालय पर्वत के वासी हैं और अप्सराओं सहित गन्धर्व हेमकूट पर्वत के निवासी हैं ॥ २८-२९ ॥

अभिनव—वर्ष अर्थात् हरिवर्ष, किंपुरुष वर्ष आदि वर्षों में विचरण करने के कारण ये देवता 'हैमवत' कहे जाते हैं । हिमवान् में इनकी गति ( प्रचार ) अधिक है । इसी प्रकार सब जगह समझे ॥ २८ २९ ॥

अनुवाद—शेष, वासुकि, तक्षक आदि सभी नाग निषध पर्वत पर रहते हैं । और विद्वान् पुरुष तैंतीस देवताओं को महामेरु ( सुमेरु ) पर्वत का निवासी समझें ॥ ३० ॥

अनुवाद—वैदूर्यमणि वाले नीलगिरि पर सिद्ध और ब्रह्मर्षि निवास करते हैं और दैत्य एवं दानवों का निवास-स्थान श्वेत पर्वत पर है ॥ ३१ ॥

अभिनव—नील यह पर्वत विशेष का नाम है । उसी का विशेषण वैदूर्यमणिमय है । यह कवि की शिक्षा के लिए कहा गया है ॥ ३१ ॥

१. क.ग. रक्षोभूतापिशाचाश्च ।
क-ट. रक्षः पिशाचा भूताश्च ।
२. क-ट. विज्ञेयाप्सरसां गणाः । ३. क-म. शेषप्रभृतयः स्मृताः ।
४ ख. तथा । क.(टि.) द्विजाः । ५. ख. सिद्धब्रह्मर्षयस्तथा । ६. क. ग. उच्यते ।

पितरश्चापि विज्ञेया शृङ्गवन्तं [1]समाश्रिताः ।
इत्येते पर्वताः श्रेष्ठा दिव्यावासाः प्रकीर्तिताः[2] ॥ ३२ ॥
तेषां [3]कक्ष्याविभागश्च जम्बूद्वीपे भवेदयम् ।
[4]तेषां न चेष्टितं कार्यं स्वैः स्वैः कर्मपराक्रमैः ॥ ३३ ॥

---

दिव्यानां पिशाचादिब्रह्मान्तानामावासः ॥ ३२ ॥

ननु वर्षान्तरेषु[5] दिव्यपर्वतेषु यदुचितं गमनं तत्कर्तुं शक्यमित्याह तेषामिति ।

चकार इवार्थे । जम्बूद्वीप इव दिव्यपर्वतेष्वपि । दिव्यानामपि कक्ष्याविभागः स्थानविशेषोपलक्षिता गतिरित्यर्थः । एतत् स्फुटयति न तेषामिति ॥ ३३ ॥

---

**अनुवाद**—पितरों को शृङ्गवान् पर्वत का निवासी समझना चाहिए। ये पर्वतश्रेष्ठ दिव्यों ( दिव्यपात्रों ) के आवास-स्थान कहे गये है ॥ ३२ ॥

**अभिनव**—दिव्यों का अर्थात् पिशाच आदि से लेकर ब्रह्म पर्यन्त दिव्यों आवास दिव्यावास है ॥ ३२ ॥

**अनुवाद**—उन दिव्यों का कक्ष्या-विभाग जम्बू द्वीप में होता है। इन देवताओं की चेष्टाएँ अपने-अपने कर्म और पराक्रम के अनुसार नहीं होनी चाहिए ॥ ३३ ॥

**अभिनव**—'तेषाम्' इत्यादि के द्वारा वर्षान्तरों में होने वाले दिव्य पर्वतों पर जो गमन उचित है, उसे करना चाहिए, यह द्योतित होता है। यहाँ पर 'कक्ष्या-विभागश्च' में 'चकार' इव के अर्थ में उपात्त है। जम्बू द्वीप के समान दिव्य पर्वतों पर भी कक्ष्या-विभाग है। अतः दिव्यों की भी स्थान-विशेष में उपलक्षित गति होती है। इसी बात को 'तेषाम्' इत्यादि के द्वारा स्फुटित करते हैं ॥ ३३ ॥

---

१. क-म. शृङ्गवद्भिरिवासिनः ।
२. क. ग. दिव्यवासा भवन्ति हि ।
३. ग. कथाविभागस्तु ।
४. ख.ग. तेषां तु ।
५. क-क. द्वीपान्तरेषु ।

[1]परिच्छेदविशेषस्तु तेषां मानुषलोकवत् ।
[2]सर्वे भावाश्च दिव्यानां कार्या मानुषसंश्रयाः ॥ ३४ ॥

[3]तेषां त्वनिमिषत्वं यत्तन्न कार्यं प्रयोक्तृभिः ।
इह भावा रसाश्चैव [4]दृष्टावेव प्रतिष्ठिताः ॥ ३५ ॥

---

परिच्छेदविशेषश्च तदीयः परिवारः स्वाभितो न कार्य इत्यर्थः परिच्छेदो वा ज्ञानं तद् दूरव्यवहिताविविषयं न प्रदर्शनीयम् । कथं तर्हि, इत्याह मानुषेति मानुषगत एवैषां सर्वो भावः कार्यः, कथं, मानुषलोकवत् यथा मानुषे लोके अंशावतरणे नायकानां रामादीनां किंचिदुत्कृष्टं सातिशयं मनुष्योचितमेव चरितं तथैव दिव्यभावबहुवृत्तीनामपीत्यर्थः ॥ ३४ ॥

---

अनुवाद—उन दिव्यों के परिच्छेद-विशेष का अभिनय मनुष्य-लोक की तरह करना चाहिए । क्योंकि दिव्यों के सभी भाव मनुष्यों के समान दिखाना चाहिए ॥ ३४ ॥

अभिनव—परिच्छेद-विशेष का अभिप्राय है कि उन दिव्यों के परिवार ( उपकरणों ) को अपने चारों ओर नहीं रखना चाहिए । अथवा परिच्छेद का अर्थ ज्ञान है, अर्थात् दूरस्थ पदार्थ को जान लेना और व्यवधान रखे हुए ( व्यवहित ) पदार्थ को जान लेना आदि विषय नहीं दिखाना चाहिए । क्यों नहीं दिखाना चाहिए ? इस पर कहते हैं कि इनके अर्थात् दिव्यों के सभी भाव मनुष्यों के समान दिखाना चाहिए । कैसे ? कहते हैं मनुष्यों के समान दिखाना चाहिए । जैसे मनुष्य लोक में अंशावतार नायक रामादि का थोड़ा उत्कृष्ट एवं अतिशय विशिष्ट चरित मानवोचित ही है । उसी प्रकार दिव्य भावों की बाहुल्येन स्थिति भी मानुषोचित ही है अर्थात् उनका चरित मनुष्यों के समान दिखाना चाहिए ॥ ३४ ॥

अनुवाद—दिव्यों अर्थात् देवताओं के निर्निमेषत्व का अभिनय नाट्यप्रयोक्ताओं को नहीं करना चातिए । क्योंकि अभिनय में सभी भाव एवं दृष्टि पर ही अधिष्ठित है ॥ ३५ ॥

---

१. ख. परिच्छेदाविशेषस्तु ।
२. क.ग. सर्वे भावास्तु ।
   क.भ. सर्वो भावश्च कार्यो मानुषसंश्रयः ।
३. ग. तेषामनिमिषं यत्तु ।		४. दृष्ट्यामेव ।

वृष्ट्या हि सूचितो भावः [1]पुनरङ्गैर्विभाव्यते ।
एवं कक्ष्याविभागस्तु मया प्रोक्तो द्विजोत्तमाः ॥
पुनश्चैव प्रवक्ष्यामि प्रवृत्तीनान्तु लक्षणम् ॥ ३६ ॥

न निमषतीत्यनिमिषं रूपं तेषां नैव कार्यम् । तुरवधारणे अथ हेतुरिहेति । भावा व्यभिचारिणो, रसाः स्थायिनो वृष्टावेवेति वृष्ट्यामिति स्पष्टयति ।

दृष्ट्येति सूचितः सूचाभिनय एव विभाव्यते विभावादिशेषयुक्तत्वे स्फुटीभवतीत्यर्थः । अत एव न तेषां चेष्टितमित्यनेन साध्योऽप्ययमर्थः पुनरुपात्तः प्राधान्यात् ॥ ३६ ॥

एवं सर्वोपकारित्वादुद्देशस्य संग्रहे सर्वं पश्चादभिधानं तेनैवं न यद्यपि कक्ष्याविभागः सूचितस्तथापि चारीपरिक्रमसङ्गेन गत्यध्यायानन्तरं वर्णितः । इदानीं त्वाङ्गिकोपयोगिधर्म्यादित्रयमुद्दिष्टं, तत्र वृत्तीनामग्रतो निरूपणं भविष्यति, तत्र च हेतुं वृत्त्यध्याय ( अ-२० ) एव वक्ष्यामः । यद्यपि धर्मौ पूर्वमुद्दिष्टा तथापि यत्र वार्ता प्रवर्तेत' ( १३-७ ) इत्यनेन कक्ष्याविभागकल्पितदेशभेदाभिधानप्रसङ्गेन च देश-

**अभिनव**—जिसमें आँखों का स्पन्दन नहीं होता वह अनिमिष रूप है । उस अनिमिष रूप को यहाँ नहीं दिखाना चाहिए । क्यों नहीं दिखाना चाहिए ? कहते हैं कि इस लोक में भाव व्यभिचारी भाव है, रस स्थायी हैं, ये सभी भाव दृष्टि में ही हैं अर्थात् दृष्टि के द्वारा ही प्रस्तुत किये जाते हैं, इसी को 'दृष्ट्याम्' के द्वारा स्पष्ट करते हैं ॥ ३५ ॥

**अनुवाद**—क्योंकि पहिले वृष्टि के द्वारा भावों को सूचित किया जाता है, फिर अङ्गों के द्वारा उसका अभिनय किया जाता है । हे द्विजश्रेष्ठों ! इस प्रकार मैंने कक्ष्या-विभाग का वर्णन किया है । अब प्रवृत्तियों का लक्षण कहूँगा ॥ ३६ ॥

**अभिनव**—'दृष्ट्या सूचितः' से सूची चारी के द्वारा किया जाने वाला अभिनय अभिप्रेत है । क्योंकि सूचा चारो का अभिनय ही भाव-विशेष के योग में स्फुट होता है । अत एव 'न तेषां चेष्टितं कार्यम्' अर्थात् 'उनके चेष्टित को नहीं करना चाहिए । इस कारिका से साध्य अर्थ का यहाँ पुनः उपादान किया गया है । यह उनकी प्रधानता के कारण ॥ ३६ ॥

१. ब. पुनरङ्गैः । ग. पश्चावङ्गैः ।

चतुर्विधा प्रवृतिश्च प्रोक्ता नाट्यप्रयोगतः[1] ।
आवन्तो दाक्षिणात्या च पाञ्चाली चौड्रमागधो[2] ॥ ३७ ॥

---

विभागप्रतिपन्नाः प्रवृत्तय आक्षिप्ताः । किं च पात्रस्य सति प्रवेशे कक्ष्याविभाग उत्तरद्वारेण दक्षिणात्यावन्त्योः प्रवेशः, अन्ययोस्तु सव्येनेत्येवं प्रवृत्तिविभागः प्रवेशक-भेदमाक्षिपति । सोऽपि तत्स्थानेनेदमिति तदुपयोगित्वेनापि समनन्तरं प्रवृत्तयो वक्तव्या इति मनसि कृत्वाह चतुर्विधेति ।

---

## प्र वृत्ति-निरूपण

**अभिनव**—इस प्रकार सर्वोपकारी होने के कारण उद्देश के सङ्ग्रह में जो अभिधान किया गया है, उस अभिधान से यद्यपि कक्ष्या-विभाग की सूचना नहीं मिलती, तथापि चारी और परिक्रम के प्रसङ्ग से गत्यध्याय नामक बारहवें अध्याय के अनन्तर कक्ष्या-विभाग दिखा दिया है। इस सभय तो आङ्गिक अभिनय के उपयोगी धर्मी, वृत्ति, प्रवृत्ति तीनों का उद्देश्य क्रम से जो कथन किया था, उनमें वृत्तियों का निरूपण पहिले होगा, उसका हेतु वृत्यध्याय नामक बीसवें अध्याय में किया जायगा। उद्देश संग्रह में यद्यपि धर्मी का पहिले कथन है तथापि 'यत्र वार्त्ता प्रवर्त्तत' इसके द्वारा कक्ष्या-विभाग के लिए कल्पित देश-भेद के अभिधान के प्रसङ्ग से देश-विभाग प्रतिपन्न है और प्रवृत्तियाँ आक्षिप्त हैं और भी पात्र के प्रवेश करने पर जो कक्ष्या-विभाग होता है, वह दाक्षिणात्य और आवन्ती में उत्तर द्वार से प्रवेश करना चाहिए और अन्य पाञ्चाली और औड्रमागधी में वामद्वार से प्रवेश करना चाहिए, इस प्रकार प्रवृत्ति-विभाग प्रवेशक भेद का आक्षेप करता है। वह प्रवेशक भेद भी उस स्थान से 'यह करना, ऐसा करना' इस प्रकार वृत्ति के उपयोगी होने पर भी वृत्तियों के समनन्तर प्रवृत्तियों को कहना चाहिए, इस बात को मन में रखकर कहते हैं—

**अनुवाद—नाटच-प्रयोक्ताओं ने चार प्रकार की प्रवृत्तियों को कहा है—आवन्ती, दाक्षिणात्या, पाञ्चाली और औड्रमागधी ॥ ३७ ॥**

---

१. क.ग. प्रोक्ता नाटचप्रयोक्तृभिः । क-न. प्रयोज्या नाटचप्रोक्तृभिः ।
क-म. विज्ञेया नाटचकोविदैः । क-द. प्रयोगतः नालसंश्रया ।
२. क-प. चाण्ड्रमागधी । क-ब. चैव मागधी ।

अत्राह प्रवृत्तिरिति कस्मात् ? उच्यते पृथिव्यां [1]नानादेशवेष-भाषाचारवार्ताः प्रख्यापयतीति[2] वृत्तिः । [3]प्रवृत्तिश्च निवेदने । अत्राह-यथा पृथिव्यां बहवो [4]देशाः सन्ति, कथमासाञ्चतुर्विधत्वमुपपन्नं, समानलक्षणश्चासां प्रयोग [5]उच्यते, सत्यमेतत् । समानलक्षण आसां प्रयोगः । किन्तु नानादेशवेषभाषाचारो लोक इति कृत्वा लोकानुमतेन वृत्तिसंश्रितस्य[6] नाट्यस्य वृत्तीनां मया चतुर्विधत्वमभिहितं भारती[7] सात्त्वतीकैशिक्यारभटी चेति ।

---

अनुवाद—इस विषय में भरतमुनि कहते हैं कि इन्हें प्रवृत्ति क्यों कहते ? इस प्रश्न का उत्तर देते हुए कहते है कि पृथ्वी पर विभिन्न प्रदेशों में प्रचलित नाना वेष-भूषा, भाषा, आचार और वार्त्ता को ख्यापन करने वाली वृत्ति हो 'प्रवृत्ति' है और निःशेष ज्ञान रूप अर्थ में प्रवृत्ति शब्द है। इस विषय में पुनः प्रश्न उठता है कि जब पृथ्वी पर अनेक देश हैं तो इन प्रवृत्तियों का चतुर्विधत्व कैसे संगत होगा ? क्योंकि इनके प्रयोग का लक्षण समान है। इस पर कहते हैं कि यह सत्य है कि इनके प्रयोग ( अभिनय ) में लक्षण की समानता है। किन्तु नाना देशों में विभिन्न वेष, भाषा, आचार वाले लोग हैं, इसलिए लोक के अनुमत लोक के रुचि के अनुसार वृत्तियों पर आश्रित नाट्य की चार प्रकार की वृत्तियों को मैंने कहा है—भारती, आरभटी, सात्त्वती और कैशिकी।

---

१. क-न. नानादेशकृतान् वेषकृतान् ।

२. क-ङ. प्रख्यापयन्तीति । क-म. आख्यापयतीति ।

३. ख. वृत्तिश्च ।

४. क-ग. नानादेशाः ।

५. क-म. अत्रोच्यते एवमेतत् ।

६. ग. लोकानुमतेऽनुवृत्तिसंश्रितमस्य । ख. संश्रितस्य नाटयस्य ।
क-म. वृत्तिसमाश्रितस्य प्रयोगस्य ।

७. ख. ग. भारत्यारभटीसात्त्वतीकैशिकी चेति । वृत्तिसंश्रितेष्वमीषु प्रयोगेष्वभिरता ।

वृत्तिसंश्रितैश्च प्रयोगैरभिहिता देशाः । यतः [1]प्रवृत्तिचतुष्टयमभिनिर्वृत्तं प्रयोगश्चोत्पादितः[2] ।

---

प्रवृत्तिः कस्मादिति प्रश्नाः । कस्मादिति चतुष्कप्रश्नः ।

अर्थं तावदाह पृथिव्यामिति । प्रवृत्तिः देशविशेषगता वेषभाषासमाचारवैचित्र्यप्रसिद्धिरुच्यते । तत्रैवं योजना देशे देशे येष्वेव वेषादयो नेपथ्यं, भाषा वा, आचारो लोकशास्त्रव्यवहारः, वार्ता कृषिपाशुपाल्यादिजीविका इति तान् प्रख्यापयति पृथिव्यादिसर्वलोकविद्याप्रसिद्धिं करोति । प्रवृत्तिर्बाह्यार्थे यस्मान्निवेदने निःशेषेण वेदने ज्ञाने प्रवृत्तिशब्दः । 'अस्त्येषा[3] भुवने प्रवृत्तिरभवद्रामेण रामस्य यत्'' इत्यादौ ।

---

अनुवाद—वृत्तियों के आधार पर किये जाने वाले प्रयोगों के आधार पर चार देश कहे गये हैं । क्योंकि इन्हीं चार देशों के आधार पर प्रवृत्तियों के चार प्रकार उपपन्न हुए और प्रयोग भी किया जाने लगा ।

अभिनव—अब प्रश्न होता है कि इन्हें प्रवृत्ति क्यों कहते हैं ? इनको प्रवृत्ति मानने में क्या हेतु है ? किस आधार पर ये प्रवृत्तियाँ है ? और किससे ये प्रवृत्तियाँ उद्भूत हुई हैं ? ये चार प्रश्न यहाँ उपस्थित होते हैं ? इन्हीं चार प्रश्नों को लक्ष्य कर आचार्य कहते हैं—'कस्मादिति' ।

अभिनव—इनमें पहिले अर्थ को कहते हैं अर्थात् प्रवृत्ति के विषय को कहते हैं—पृथिव्यामिति । देश विशेष के वेष, भाषा, आचार-विचार और वार्ता के वैचित्र्य की प्रसिद्धि को 'प्रवृत्ति' कहते हैं । इसमें योजना इस प्रकार है—जिन-जिन देशों में जो वेष-भूषा, एवं भाषा प्रचलित है, जो आचार-विचार, लोक-व्यवहार एवं शास्त्रीय व्यवहार हैं, जो वार्त्ता अर्थात् कृषि, पशु पालन एवं वाणिज्य आदि जीविका है, उनका प्रख्यापन करने वाली वृत्ति 'प्रवृत्ति' है । वह पृथिवी आदि सब लोकों की को विद्या की प्रसिद्धि करता है, इसलिए उसे प्रवृत्ति कहते हैं । क्योंकि प्रवृत्ति बाह्य अर्थ के विषय में निवेदन अर्थात् निःशेष वेदन ज्ञान रूप अर्थ में प्रवृत्ति शब्द प्रयुक्त है । 'लोक में यह एक प्रवृत्ति है जो राम के द्वारा राम को है' इत्यादि में ।

---

१. क-म. यतस्ततः प्रवृत्तेश्चतुष्टयमिति निर्वृतम् ।

२. क. (टिप्पण्यां) द-भ. पुस्तकयोः दाक्षिणात्यालक्षणात्पूर्वमेवावन्तीलक्षणमुक्तं यथा—

आनर्मदाया आसिन्धोरापूर्वावर्तिनस्तथा ।
आपश्चिमात्समुद्राच्च तथा सौवीरराष्ट्रतः ॥
आहिमाद्रेस्तथा देशा विदेशाश्चान्तरेण ते ।
सात्वती कौशिकी युक्ता तेषामावन्तिकी स्मृता ॥

३. क-क. अस्यैषा ।

अथ संख्याप्रश्ने स्वाभिप्रायमाह यथेति देशा इति। तत्कृत्वापि चतुष्टयी प्रवृत्तिरित्युक्तं न चत्वार एव देशाः। स्यादेतदेव तावत्यस्तावदुक्ता अभ्यधिकास्तु त्यक्ता इत्याशङ्क्याह समानलक्षणश्चासां प्रयोग इत्युच्यते महद्भिरिति शेषः। प्रयोग इति नाट्यम्। चतसृणामेवासां समानलक्षणानामेतत्साधारणस्वभावः सर्वप्रयोग इत्येव व्यवहारः, युष्मन्मते न त्वन्यो व्यवहारः कश्चिद्दर्शितः। [1]यथा च कामक्रोधलोभमोहैस्तु सावरणीकृतजगच्चिन्तादिः प्रदेशः आशु पराक्रियते तथा प्रकृतेऽपि।

ननु चतुस्साधारणप्रयोग इत्येव नत्वन्योऽत्र प्रविशति व्यवहार इत्येतदुक्तम्। विस्मरणशीलो भवान् न स्मर्यते। उक्तं पूर्वरङ्गान्ते ( अध्याय ५वाँ ) इत्येवाऽवन्ति-पाञ्चालदाक्षिणात्यौड्रमागधो। कर्तव्यः पूर्वरङ्गस्तु।१८१। इति पूर्वरङ्गस्य प्रयोगस्य गर्भाधानीयस्थानीय इत्युक्तम्। तत्रैवाभ्युपगमपूर्वकमुत्तरमाह—तत्तु सत्य-मित्यादिना नानादेशवेषेत्यन्तेन अभ्युपगमोक्तदेशादिशब्देन प्रवृत्तिमभिदधता। आसामिति व्याख्यानम्। किंत्वित्यादिनोत्तरे[2] एतदुक्तं भवति वृत्तिसंश्रितं वृत्तीरा-श्रितमेतच्चतुर्विधम्।

---

अभिनव—अब इन प्रवृत्तियों के संख्या के विषय में ग्रन्थकार अपना अभिप्राय कहते हैं—'यथा' इत्यादि से लेकर 'देशाः' तक। देश के नानात्व को मानकर भी प्रवृत्तियाँ चार हैं, ऐसा कहा है देश भी चार हैं, ऐसा नहीं कहा है। कदाचित् इतनी हो कही गई है, और जो अधिक है, उन्हें छोड़ दिया हो, ऐसी आशङ्का करके कहते हैं कि 'नाट्य-प्रयोग में लक्षणों की समानता है' ऐसा महान् लाग कहते हैं। 'प्रयोग' का अर्थ है नाट्य। इन चारों के लक्षण समान है, अतः समान ( साधारण ) स्वभाव वाला प्रयोग सर्वत्र होता है, यही व्यवहार हैं। तुम्हारे मत में भी अन्य कोई व्यवहार नहीं दिखाया है। जैसे, काम, क्रोध, लोभ, मोह के कारण जगत् की चिन्ता आदि साधारण करके मनुष्य उस प्रदेश को शीघ्र छोड़ देता है उसी प्रकार प्रकृत में चार हो प्रवृत्तियों को कहा है, अन्यों को छोड़ दिया है।

---

१. क. तथा च।

२. क. किंत्वित्यादिनोत्तरमाह।

क-क. किंचिदादिना।

नतु का प्रवृत्तिः किं तथैवाभ्युपगमः प्रवृत्तिः। नेत्याह लोकानुगुणानुसारेण। लोकस्य हि दक्षिणापथः पूर्वदेशः पश्चिमदेशः उत्तरभूमिरिति चतुर्धा विभागोऽस्ति, न चैष निर्निबन्धनः (चित्तवृत्तिभेद) सादृश्यसंभवात्। तथाहि दाक्षिणात्येषु शृङ्गारप्रचुरतया कैशिक्याः संभवः। पश्चिमेष्वावन्त्येव संगृहीता एषु सापि, सति धर्मप्राधान्ये सात्त्वत्यस्ति। प्राच्येषु तु घटाटोपवाक्याडम्बरप्राधान्याद् भारत्यारभट्योः योगः। उत्तरभूम्यां यद्यपि प्राधान्याद् भारत्यारभटीयोगस्तथापि कैशिकीलेशात्तु शृङ्गारमयप्रयोगसहिष्णवो जनाः। यद्वक्ष्यते "प्रयोगस्त्वल्पगीतार्थं" (१३-५१) इति। अर्थशब्देन तत्प्रयोजनं नृत्तवाद्यादि। इत्येवं चित्तवृत्तिभेदसादृश्याल्लोकस्य यश्चतुर्धाविभागः स एवास्मिन्नुक्तः।

अब प्रश्न होता है कि चारों प्रवृत्तियों के प्रयोग साधारण हैं, यही व्यवहार यहाँ प्रवेश करता है, अन्य व्यवहार यहाँ प्रवेश नहीं करता, यही तो आपने कहा है। इस पर कहते हैं—आप बहुत भुलक्कड़ हैं, बहुत भूलते हैं, अतः मैं याद दिलाता हूँ, सुनिये, पाँचवें अध्याय में पूर्वरङ्ग के निरूपण के अन्त में 'इत्येवावन्तिकापाञ्चालीदाक्षिणात्यौड्रमागधो। कर्त्तव्यः पूर्वरङ्गस्तु' अर्थात् 'इस प्रकार आवन्ती, दाक्षिणात्यापाञ्चाली और औड्रमागधी लोगों द्वारा पूर्वरङ्ग का विधान करना चाहिए' यह कहना पूर्वरङ्ग के प्रयोग के लिए गर्भाधान स्थानीय है, ऐसा कहा है। इस विषय में अभ्युपगम पूर्वक अर्थात् स्वीकृति पूर्वक उत्तर देते हैं—'तत्तु सत्यमित्यादिना'–'नानादेशवेषेत्यन्तेन' अर्थात् आपने जो कहा 'वह सत्य है', यहाँ से लेकर 'नाना देश-वेष' यहाँ तक के अभ्युपगम में उक्त देशादि शब्द से प्रवृत्ति को कहते हुए उतर देते हैं—'आसाम्' इत्यादि को व्याख्या कर दो गई है, किन्तु 'इत्यादि' के द्वारा उत्तर में यह कहा गया है कि वृत्तियों के आश्रित ये प्रवृत्तियाँ चार प्रकार की होती हैं।

**अभिनव**—अब पुनः प्रश्न उठता है कि प्रवृत्ति क्या है? क्या जैसा कहा गया है, उसी प्रकार मान लेना प्रवृत्ति है? इस पर कहते हैं—नहीं। लोक के अनुकूल अनुसरण को ही प्रवृत्ति कहा जाता है। क्योंकि लोक के दक्षिणापथ पूर्वदेश, पश्चिम देश और उत्तरभूमि—ये चार विभाग हैं। ये विभाग बिना किसी कारण के नहीं है; क्योंकि चित्तवृत्तियों के सादृश्य को सम्भावना है। जैसा कि दाक्षिणात्यों में शृङ्गार रस की प्रचुरता होने से कैशिको वृत्ति सम्भव है। पश्चिम देश में आवन्ती का संग्रह तो है ही, किन्तु कैशिको भो है, इसके अतिरिक्त धर्म को प्रधानता होने से सात्त्वती वृत्ति भी है। पूर्व प्रदेश में घटाटोप वाक्याडम्बर होने की प्रधानता होने से

ननु किमित्ययं संक्षेप आदृतः। आह। यस्माल्लोको बहुविधवेषभाषाचारादियुक्तः कस्ते प्रतिपदं शक्तुं शक्नुयात् शिक्षितुमभ्यसितुं वा प्रयोक्तुं द्रष्टुं वा, चित्तवृत्तिप्रधानं चेदं नाट्यमिति तदेव वक्तुं न्याय्यम्। एतदेव स्पष्टीकुर्वन्नाह भारतीत्यादिना।

प्रयोगे वागङ्गचेष्टासु अभिनिर्वृत्तं लोकप्रसिद्धमित्यर्थः। चकारेण तत इत्याकृष्यते। तल्लोकप्रसिद्धचतुष्टयमवलम्ब्य ब्रह्मणा प्रयोग उत्पादितः। अयं ग्रन्थश्चिरन्तनैर्वृत्तीनां चतुर्ष्वेव दृष्टान्ततामाश्रित्य व्याख्यातः, तत्र च वैषम्येण दूषणमुक्तम्, वृत्तीनां हि सनिमित्तं चतुर्धात्वं प्रवृत्तीनां तस्माच्चतुष्ट्वमात्रेण दृष्टान्तोऽयमिति व्याख्यानेषु गजस्नानीयताया आनयनेनालूनविशीर्णः वृत इत्यास्तां तावत्।

भारती और आरभटी का योग रहता है। उत्तर प्रदेश में यद्यपि प्रमुख रूप से भारती एवं आरभटी वृत्तियों का ही योग है तथापि कैशिकी के अंशतः सम्बन्ध होने से लोग शृङ्गारमय प्रयोग के सहिष्णु होते हैं। जैसा कि आगे कहेंगे—'अल्प गीतार्थ वाला प्रयोग यहाँ होता है' (१३।५०)। यहाँ अर्थ शब्द से उसके ( गीत के ) प्रयोजनभूत नृत्य, वाद्य आदि का ग्रहण होता है। इस प्रकार चित्तवृत्तियों के सादृश्य से लोक का जो चार विभाग किया गया है वही यहाँ चार प्रवृत्ति के रूप में कहा गया है।

**अभिनव**—अब पुनः प्रश्न होता है कि यह संक्षेप क्यों किया गया ? इस पर कहते हैं—क्योंकि यह लोक अनेक प्रकार के वेष, भाषा, आचार आदि से युक्त है तो कौन उनका प्रतिपद कहने, शिक्षा देने, अभ्यास कराने अथवा प्रयोग करने या दिखाने के लिए समर्थ होगा ? क्योंकि यह नाट्य चित्तवृत्ति प्रधान है, अतः तदनुकूल ही उसको कहना न्याय-संगत है। इसी बात को स्पष्ट करते हुए कहते हैं—'भारती इत्यादि'।

**अभिनव**—प्रयोग अर्थात् वाचिक एवं आङ्गिक चेष्टाओं में अभिनिर्वृत्त अर्थात् लोकप्रसिद्ध है। 'प्रयोगश्च' में उपात्त चकार से 'ततः' का आकर्षण करते हैं। लोक प्रसिद्ध वृत्तिचतुष्टय एवं प्रवृत्तिचतुष्टय का अवलम्बन करके ब्रह्मा ने इस प्रयोग का उत्पादन किया। यह ग्रन्थ चिरन्तनों द्वारा वृत्तियों की चतुरस्रता में दृष्टान्त का आश्रय बनकर व्याख्यात है; किन्तु वहाँ विषमता के कारण दोष कहा गया है, क्योंकि वृत्तियों में सनिमित्त चतुर्धात्व प्रवृत्तियों में भी चतुर्धात्व है। इसी से प्रवृत्तियों को चार मानने में दृष्टान्त है। इस प्रकार व्याख्यानों में गजस्थानीयता के आनयन से यह ग्रन्थ आलून अर्थात् नोच लेने से विशीर्ण हो गया, इसलिए रहने दया जाय ॥ ३७॥

तत्र दक्षिणात्यास्तावत् [1]बहुनृत्तगीतवाद्या कैशिकीप्रायाः चतुरमधुरललिताङ्गाभिनयाश्च । तद्यथा[2] —

महेन्द्रो मलयः सह्यो मेकलः पालमञ्जरः[3] ।
एतेषु ये श्रिता देशाः स ज्ञेयो दक्षिणापथः ॥ ३८ ॥
[4]कोसलस्तोशलाश्चैव कलिङ्गा [5]यवनाः खसाः ।
[6]द्रविडान्ध्रमहाराष्ट्रा वैष्णा[7] वै वानवासजा[8] ॥ ३९ ॥
दक्षिणस्य समुद्रस्य तथा विन्ध्यस्य चान्तरे[9] ।
[10]ये देशास्तेषु युञ्जीत दाक्षिणात्यां तु नित्यशः ॥ ४० ॥

---

१. दाक्षिणात्या प्रवृत्ति

अनुवाद—उनमें दाक्षिणात्या प्रवृत्ति अनेक प्रकार के नृत्य, गीत, वाद्य से युक्त, कैशिकी वृत्ति से सम्पन्न और चतुर, मधुर, ललित आङ्गिक अभिनयों से पूर्ण होती है । वह जैसे—

अनुवाद—महेन्द्र, मलय, सह्य, मेकल और कालपंजर नामक पर्वतों के मध्य स्थित प्रदेश 'दक्षिणापथ' कहलाता है ॥ ३८ ॥

अनुवाद—कोसल, तोसल, कलिङ्ग, यवन, खस, द्रविड़, आन्ध्र, महाराष्ट्र, वैण्ण ( कृष्णा और पिनाकी नदी के तटवासी ), वानवासिक तथा दक्षिण समुद्र और विन्ध्य पर्वत के मध्यवर्त्ती जो प्रदेश है उनमें दाक्षिणात्या प्रवृत्ति की योजना करनी चाहिए ॥ ३९-४० ॥

---

१. ग. बहुगीतनृत्यवाद्या ।
२. ग. पुस्तके 'तद्यथा' नास्ति ।
३. ग. मेखक कालपञ्जरः । ख. मेखकः कालपञ्जरः ।
क-प. मेहकः पलङ्गरः ।
४. ख. कौसला तोशलाश्चैव ।
५. क-ख. कालिङ्गा एव मोसलाः । ६. क-ग. द्रमिडाः । प्रमिलाः ।
७. क-द. भिल्ला । वैणा इति कृष्णापिनादिकी तीरवासिनः ।
८. ख. ग. वानवासिजाः । क-प. वानवासिकाः । ९. क-द. चोत्तरे ।
१०. ख. ये देशाः संश्रितास्तेषु दाक्षिणात्यास्तु नित्यशः ।
क-ड. ये देशा दाक्षिणात्यास्तु वृत्तिभारभटी श्रिताः ।

कैशिकी प्रायेण एषु इति बहुव्रीहिः। असामानाधिकरण्यात्सामानाधिकरण्येऽपि वा सामानायामाकृतौ भाषितपुंस्त्वाभावान्न पुंवद्भावः । केशैर्निवृत्तास्तेषु भवा वेत्याविव्युत्पत्तिर्निमित्तमात्रम् । एतच्च वक्ष्यामः संक्षेपेण (अध्याय २०) ।

दक्षिणसमुद्रस्य विंध्यपर्वतस्य च मध्ये ये देशास्तेषु दाक्षिणात्या । एतेनैव सिद्धे सति देशभेदानां प्रतिपदपाठस्तदन्तरालानां पर्वतकच्छादिम्लेच्छानां निषेधेन, प्रसिद्धया देशोपसंग्रहणार्थः कवीनाम् । एवमुत्तरत्र ॥ ४१ ॥

---

**अभिनव**—'कैशिकीप्रायाः' में बहुव्रीहि समास है। 'कैशिकी प्रायेण एषु' इस विग्रह में बहुव्रीहि समास होकर 'कैशिकीप्रायाः' शब्द बनता है। अब यहाँ प्रश्न उठता है कि बहुव्रीहि समास होने पर 'कैशिकी' में पुंवद्भाव होना चाहिए था। इस पर आचार्य कहते हैं—'असामानाधिकरण्यात्' अर्थात् समानाधिकरण न होने से। भाव यह है कि यहाँ पर 'कैशिकी प्रायेण एषु' में सामानाधिकरण नहीं है, क्योंकि प्रकृत में कैशिकी स्त्रीलिङ्ग है, किन्तु प्रायेण स्त्रीलिङ्ग नहीं है, अतः यहाँ समानाधिकरण नहीं है और समानाधिकरण होने पर ही पुंवद्भाव होता है दूसरे समानाधिकरण होने पर भी कैशिकी शब्द के भाषितपुंस्त्व न होने से पुंवद्भाव नहीं हुआ। 'केशैः निवृत्ता कैशिकी' अथवा 'केशेषु भवा कैशिकी' इत्यादि व्युत्पत्तियाँ साधुत्व बोधन में निमित्त मात्र हैं। इसे हम बीसवें अध्याय में संक्षेप में कहेंगे।

दक्षिण समुद्र और विन्ध्य पर्वत के मध्य का जो देश है उनमें दाक्षिणात्या प्रवृत्ति है, इतने कथन मात्र से ही विन्ध्य और दक्षिणी समुद्र के मध्य के प्रदेशों का ग्रहण हो जाता है, फिर भी भिन्न-भिन्न देशों का प्रतिपद पाठ विन्ध्य पर्वत और दक्षिणी समुद्र के मध्यवर्त्ती पर्वत, कच्छ-खाड़ी और म्लेच्छों के देश के निषेध और प्रसिद्ध होने से कवियों के देशविषयक ज्ञान कराने के लिए किया गया है। इसी प्रकार आगे भी समझना चाहिए ॥ ३९-४० ॥

**विशेष**—दक्षिणी समुद्र और विन्ध्य पर्वत के मध्य में बसे जितने प्रदेश हैं, उनमें दाक्षिणात्या प्रवृत्ति का प्रयोग करना चाहिए । वेष-भूषा, भाषा, आचार-विचार में इन प्रदेशवासियों में बहुत कुछ समानता है, अतः इन प्रदेश-वासियों के लिए दाक्षिणात्या प्रवृत्ति का विधान बताया गया है। इस प्रवृत्ति में शृङ्गार रस की प्रधानता होती है ॥ ३९-४० ॥

आवन्तिका वैदिशिका सौराष्ट्रा मालवास्तथा ।
सैन्धवास्त्वथ सौवीरा 'आनर्ताः सार्बुदेयकाः'[1] ॥ ४१ ॥

दाशार्णास्त्रैपुराश्चैव तथा वै मार्तिकावताः[2] ।
कुर्वन्त्यावन्तिकीमेते प्रवृत्तिं नित्यमेव तु ॥ ४२ ॥

सात्वतीं कैशिकीं चैव वृत्तिमेषां[3] समाश्रिताः ।
भवेत् प्रयोगो नाट्येऽत्र[4] स तु कार्यः प्रयोक्तृभिः ॥ ४३ ॥

---

नित्यमेव त्विति—अनादिरयं देशभेदेन चित्तवृत्तिक्रमः । दृष्टो हि वस्त्राभरणात्मना देशभेदोचितः स्वभावभेदः ॥ ४२ ॥

---

## २. आवन्ती प्रवृत्ति

अनुवाद—आवन्ती, विदिशा, सोराष्ट्र, मालव, सैन्धव, सौवीर, आनर्त्त, आर्बुदेय, दशार्ण, त्रिपुर तथा मृत्तिकावत देशवासी नियमतः आवन्ती प्रवृत्ति का प्रयोग करते हैं ॥ ४१-४२ ॥

अभिनव—नित्यमेवत्विति–देशभेद से होने वाली चित्तवृत्तियों का क्रम अनादि है, क्योंकि देश-भेद के औचित्य से प्राप्त स्वभाव-भेद वेष-भूषा पर स्पष्ट परिलक्षित होता है ॥ ४२ ॥

अनुवाद—नाट्यप्रयोक्ताओं को नाट्य में सात्वती और कैशिकी वृत्ति के समाश्रित नाट्य-प्रयोग करना चाहिए ॥ ४३ ॥

---

१. ग. आवर्ता । क-ब. आवर्त्तकाः ।

२. ख. सार्बुदेशकाः । क-द. सार्वदेशकाः ।

३. ख. तथा वैवर्त्तिकावताः । ग. तथा वैवर्त्तिकावता ।
क-ञ. तथा वैमानिकावताः । क. मार्त्तिकावताः मृत्तिकावतीपुरवासिनः ।

४. ख.म. वृत्तिमेषा समाश्रिता । क-म. वृत्तिमेते समाश्रिताः ।
क-द. वृत्तिमेषां समाश्रया ।

५. क.ख.ग. नाम्यत्र ।

अङ्गा बङ्गाः कालिङ्गाश्च वत्साश्चैवोढ्रमागधाः ।
'पौण्ड्रा नेपालकाश्चैव अन्तर्गिरिबहिर्गिराः[2] ॥ ४४ ॥
तथा [3]प्लवङ्गमा ज्ञेया मलदा मल्लवर्तकाः ।
ब्रह्मोत्तरप्रभृतयो भार्गवा [4]मार्गवास्तथा ॥ ४५ ॥
प्राग्ज्योतिषाः पुलिन्दाश्च वैदेहास्ताम्रलिप्तकाः[5] ।
[6]प्राङ्गा प्रावृतयश्चैव युञ्जन्तीहोढ्रमागधीम् ॥ ४६ ॥

---

तत्र प्राग्देशानां सीमात्वेन दक्षिणत ऊढ्राः समुद्रनिकटे उत्तरतो मागधाः तदुभयमध्यवर्तित्वादूढ्रमागधा[7], अत[8] एवोढ्रकलिङ्गानामुभयोपजीवित्वाभिप्रायेण वृत्तिद्वयमध्ये गणनम् । गिरीणामन्तर्यं भवास्तेऽन्तर्गिराः गिरीणां बहिर्भवा बहिर्गिरा 'गिरेश्च सेनकस्य' इति समासान्ते अचि रूपम् ॥ ४४-४६ ॥

---

अनुवाद—अङ्ग, बङ्ग, कलिङ्ग, वत्स, उड्र, मगध, पौण्ड्र, नेपाल, अन्तर्गिरि, बहिर्गिरि, प्लवङ्गम, मालवा, मल्लवर्जक, ब्रह्मोत्तर, प्राग्ज्यातिष, भार्गव, मार्गव, पुलिन्द, वैदेह, ताम्रलिप्त और पूर्व दिशा के अन्य प्रदेशवासी लोग ओड्रमागधी प्रवृत्ति का प्रयोग करते हैं ॥ ४४-४६ ॥

अभिनव—प्राच्य देश की सीमा होने से दक्षिण में समुद्र तटवर्ती उड्र है और उत्तर में मगध है। दोनों के मध्यवर्ती प्रदेश में औड्रमागधी प्रवृत्ति होती है। इसलिए उड्र ( आन्ध्र ) और कलिङ्ग दोनों के लिए उपजीव्य होने के कारण इनका दो दो वृत्तियों के मध्य में परिगणन किया गया है। पर्वतों के अन्दर होने वाले देश अन्तर्गिर और पर्वतों के बाहर होने वाले देश बहिर्गिर हैं। यहाँ पर 'गिरेश्च सेनकस्य' सूत्र से समासान्त अच् प्रत्यय होने पर यह रूप बनता है ॥ ४४-४६ ॥

---

१. क. पौण्ड्रनेपालकाश्चैव
२. ख ग. अन्तर्गिरिबहिर्दुराः ।
३. ख. ग. प्लवङ्गमाहेन्द्रमलदामलवर्त्तकाः ।
४. ख. मार्गवस्तथा ।
५. क. ताम्रलिप्तकाः ।
६. ख. ग. प्रांशु प्रवृत्तयश्चैव युञ्यन्तो चौड्र मागधी ।
७. क. ओड्रमागधी । क-क. आन्ध्रमागधी ।
८. क-क. ( टि० ) अतएवान्ध्रकलिङ्गानां ।

[1]अन्येऽपि देशाः प्राच्यां ये पुराणे सम्प्रकीर्तिताः ।
तेषु प्रयुज्यते ह्येषा [2]प्रवृत्तिश्चोढ्रमागधी ॥ ४७ ॥

पाञ्चाला सौरसेनाश्च[3] काश्मीरा हस्तिनापुराः ।
बाह्लीका [4]शल्यकाश्चैव मद्रकौशीनरास्तथाः ॥ ४८ ॥

हिमवतसंश्रिता ये तु गङ्गायाश्चोत्तरां दिशम् ।
ये श्रिता वै जनपदास्तेषु पाञ्चालमध्यमाः ॥ ४९ ॥

---

पुराण इत्यागमपूर्वकत्वमाह । एषेति आवन्तिकी प्राग्ज्योतिषकामरूपोया ॥ ४८ ॥

तुरुष्काश्चारट्टकखसदरदप्रभृतयः मध्यमायामेव ये प्रविष्टाः, ते तु व्यवहार-बहिष्कृतत्वात् स्वकण्ठेन न पठिताः ॥ ५० ॥

---

अनुवाद—इसी प्रकार पुराण आदि में पूर्व के जो अन्य प्रदेश कहे गये हैं उनमें भी इस ओड्रमागधी प्रवृत्ति का प्रयोग होता है ॥ ४७ ॥

अभिनव—'पुराणे' इस कथन से सिद्ध होता है कि यह विषय आगम सिद्ध है। यह ओड्रमागधी प्रवृत्ति कामरूप और प्राग्ज्योतिष में भी होती है ॥ ४७ ॥

अनुवाद—पाञ्चाल, शूरसेन, काश्मीर, हस्तिनापुर, बाह्लीक, शाकल, मद्र, उशीनर प्रदेश तथा हिमालय पर्वत पर स्थित और गङ्गा नदी के उत्तरदिशा में आश्रित जनपदों में (प्रदेशों में) पाञ्चाल-मध्यमा प्रवृत्ति का प्रयोग होता है ॥ ४८-४९ ॥

अभिनव—तुरुष्क, आरट्टक, खस और दरद प्रभृति देश मध्यमा में ही प्रविष्ट हैं। वे व्यवहार से बहिष्कृत होने के कारण भरतमुनि ने अपने कण्ठ से, अपने मुख से उनका पाठ नहीं किया है ॥ ४८-४९ ॥

---

१. अयं श्लोकः क-भमयोर्नास्ति ।
२. ख. प्रवृत्तिश्चोड्रमागधी । ग. प्रवृत्तिश्चौड्रमागधी ।
३. क. ग. शौरसेनाः ।
४. भ. बह्लिकाः शल्यकश्चैव ।

[1]पाञ्चालमध्यमायान्तु सात्त्वत्यारभटी स्मृता।
प्रयोगस्त्वल्पगीतार्थं आविद्धगतिविक्रमः ॥ ५० ॥

द्विधा क्रिया भवत्यासां रङ्गपीठपरिक्रमे।
प्रदक्षिणप्रदेशा च तथा चाप्यप्रदक्षिणा ॥ ५१ ॥

आवन्ती दाक्षिणात्या च प्रदक्षिणपरिक्रमे।
अपसव्यप्रदेशास्तु पाञ्चाली चोढ्रमागधी ॥ ५२ ॥

आवन्त्यां दाक्षिणात्यायां[2] पार्श्वद्वारमथोत्तरम्।
[3]पाञ्चाल्यामोढ्रमागध्यां योज्यं द्वारन्तु दक्षिणम् ॥ ५३ ॥

---

अल्पगीतार्थं इति लेशतः कैशिकीमनुजानाति ॥ ५१ ॥

---

अनुवाद—पाञ्चाल-मध्यमा प्रवृत्ति में सात्त्वती और आरभटी वृत्ति होती है। इसमें गीत प्रयोग की अल्पता और आविद्ध गति एवं विक्रम ( पादसंचालन ) होता है ॥ ५० ॥

अभिनव—'अल्पगीतार्थं' यह कथन लेशतः कैशिकी वृत्ति की अनुज्ञा देता है ॥ ५० ॥

अनुवाद—रङ्गपीठ के परिक्रम में ( रङ्गपीठ पर चलने में ) इन प्रवृत्तियों की दो प्रकार की क्रियाएं होती हैं एक दक्षिण की ओर से और दूसरी वाम भाग से प्रवेश किया जाता है ॥ ५१ ॥

अनुवाद—प्रदक्षिण परिक्रम में आवन्ती और दाक्षिणात्या प्रवृत्ति होनी चाहिए और अपसव्य अर्थात् अप्रदक्षिण परिक्रम में ( बायीं ओर से प्रवेश करने में ) पाञ्चाली और औड्रमागधी प्रवृत्ति होनी चाहिए ॥ ५२ ॥

अनुवाद—आवन्ती और दाक्षिणात्या प्रवृत्ति में द्वार की योजना उत्तर की और पाञ्चाली एवं औड्रमागधी में द्वार की योजना दक्षिण की ओर करनी चाहिए ॥ ५३ ॥

---

१. अयं श्लोकः 'ग' पुस्तके नास्ति।
२. ख, ग. योज्यं। ३. क-प. पाञ्चालमध्यामागध्योः।

एकीभूताः पुनश्चैताः प्रयोक्तव्याः प्रयोक्तृभिः ।
[1]पार्षदं देशकालौ चाप्यर्थयुक्तिमवेक्ष्य[2] च ॥ ५४ ॥

दक्षिणोत्तरव्यतिरेकेण परिक्रमणस्थानाभावात् नैकट्याद् द्वे प्रवृत्ती एकीकृत्य प्रयोगाभिधानम्। तत्र दक्षिणात्य उत्तरेण द्वारेण प्रविश्य पश्चिमायां दिशि परिक्रम्य ततोऽपि दक्षिणस्यां ततः पूर्वस्यां तत उत्तरस्यां परिक्रमेत। परिक्रम्य च तस्यामेव दिश्यात्मनिवेदनं कुर्यात्। [3]तदुक्तं दक्षिणाभिमुख इति। तत उत्तरस्याः पूर्वां ततोऽपि दक्षिणां ततः पश्चिमां प्राप्योत्तरद्वारेणैव निष्क्रामेत्। एवं सात्त्वत्यादौ तद्विपर्ययेण पाञ्चाल्यां। तदस्यां दक्षिणद्वारेण प्रवेशो निष्क्रमणं च प्रदक्षिणेन दक्षिणदिशा प्रवेशोऽभ्यन्तरकक्ष्याव्यवस्थितपात्रनिकट एवेति स्यात्। एवमपसव्यप्रवेश इति ॥ ५४ ॥

**अभिनव**—उत्तर और दक्षिण को छोड़कर अन्य तरफ से परिक्रमण नहीं करना चाहिए। इसलिए निकट की दो वृत्तियों को मिलाकर प्रयोग करने का विधान बताया गया है। इस प्रयाग के समय दाक्षिणात्य उत्तर द्वार से प्रवेश कर पश्चिम दिशा में परिक्रमण करके फिर दक्षिण दिशा में पुनः पूर्व में फिर उत्तर में परिक्रमण करे। इस प्रकार घूमकर उसी दिशा में आत्मनिवेदन करे। जैसा कि कहा गया है कि 'दक्षिणाभिमुख होकर आत्मनिवेदन करे, फिर उत्तर दिशा से पूर्व को, पूर्व दिशा से दक्षिण को तथा दक्षिण दिशा से पश्चिम की ओर जाकर फिर उत्तर द्वार से निष्क्रमण करे। इसी प्रकार सात्त्वती आदि वृत्तियों से विपरीत क्रम से पाञ्चाली में प्रयोग होना चाहिए। इसीलिए दक्षिण द्वार से किया जाने वाला प्रवेश भी आभ्यन्तर कक्ष्या में स्थित पात्र के निकट ही होना चाहिए। यही प्रक्रिया अपसव्य प्रवेश में भी करनी चाहिए ॥ ५२-५३ ॥

**अनुवाद**—इस प्रकार पार्षद (सभा), देश, काल और अर्थयुक्ति (अर्थ-विशेष की अभिव्यक्ति) को देखकर नाट्य-प्रयोक्ताओं को इनका एकीकरण करके (सम्मिलित) प्रयोग करना चाहिए ॥ ५४ ॥

१. ख. एकभूता। ख. ग. देशञ्चाप्यर्थयुक्ति कालमवेक्ष्य च।
क-म. देशं कालमवस्थां च काव्ययुक्तिमवेक्ष्य च।
२. क-द अवेक्षते।
३. क-ख. तदुत्तरम्।

येषु देशेषु या [1]कार्या प्रवृत्तिः परिकीर्तिता ।
तद्वृत्तिकानि रूपाणि तेषु तज्ज्ञः प्रयोजयेत् ॥ ५५ ॥

विशेषान्तरमाह—एकीभूता इति । पार्षदमिति । परिषदि स्वामित्वकृतं वा प्राधान्यं देशकृतं कालकृतं प्रयोजनकृतं बहुतरपात्रपरीक्षायातोचितं यद्वैचित्र्यं तत्कृत-मिदमवेक्ष्य सङ्करोऽपि कर्तव्यः, तदाह एकीभूता इति प्रधानानुयायिन्य एवेत्यर्थः ॥ ५४ ॥

एवं प्रयोक्तरि परिक्रमोपयोगः । प्रवृत्तीनां प्रत्येकविषयेऽपि तं दर्शयन्नाह येषु देशेष्वित्यादि ।

या प्रवृत्तिरित्यर्थः, सा वृत्तिर्येषु रूपकेषु तेषु । तेन काश्मीर देशगत नायक नाटिकानुचिता तस्यां कैशिकीप्राधान्ये दाक्षिणात्यौचितत्वात् । देशादौचित्ये तच्चे-ष्टितव्यावर्तनेन प्रतीतिविघाताद्रसमयत्वाभावः । रसाश्च नाट्यस्य प्राणाः व्युत्पत्ति-रपि वा परैव भवेत् असत्यताशङ्का च समूलघातं विहन्यादेव प्रयोगमित्यनेनाभि-प्रायेणाह तद्वृत्तिकानीति । येषु देशेषु यो वृत्तिप्रकार उक्तः स येषु रूपकेषु नाटका-दीनामन्यतमेषु भवति, तानि रूपकाणि तेष्विति तद्देशगतनायकप्राधान्येन कर्तव्यानि कविना नटेन च ॥ ५५ ॥

---

अभिनव—पार्षदमिति - परिषद् ( सभा ) में स्वामित्व के कारण या अध्यक्ष बनने के कारण अथवा देश के कारण या काल के कारण अथवा किसी प्रयोजन से अथवा बहुत से पात्रों की परीक्षा करने से प्राप्त वैचित्र्यकृत प्रधानता को देखकर उसी के अनुसार नियम में सांकर्य किया जा सकता है । इसी कारण 'एकीभूता' कहा गया है अर्थात् प्रधान का सर्वत्र अनुयायी रहे ॥ ५५ ॥

अभिनव—इस प्रकार प्रयोक्ता में परिक्रम का उपयोग दिखाया गया है, अब प्रत्येक प्रवृत्तियों के विषय में भी उपयोग को दिखलाते हुए कहते हैं—

अनुवाद—जिन देशों में जो प्रवृत्ति पहिले कही गई है । उन देशों में उन वृत्तियों से युक्त अभिनय नाट्य-विशेषज्ञ करें ॥ ५५ ॥

---

१. ख. ग. पूर्व ।

[1]एकीभूताः पुनस्त्वेता[2] नाटकादौ[3] भवन्ति हि ।
अवेक्ष्य वृत्तिबाहुल्यं तत्तत्कर्म समाचरेत्[4] ॥ ५६ ॥

सार्थं बाहुल्यमेकस्य शेषाणामथ बुद्धिमान् ।
येषामन्यस्य बाहुल्यं प्रवृत्तिं पूरयेत्तदा ॥ ५७ ॥

---

**अभिनव**—जिन देशों में जिन प्रवृत्तियों का विधान है उसी के अनुसार रूपकों में भी यही वृत्ति होनी चाहिए । इससे कश्मीर देशगत नायक को प्रधानता होने पर नाटिका का प्रयोग अनुचित है, क्योंकि नाटिका में कैशिकी वृत्ति की प्रधानता होने से दाक्षिणात्य नायक का होना अधिक उचित है । दूसरे देश काल आदि के औचित्य में उसके चेष्टित के व्यावर्त्तन से प्रतीति का विघात होने से रसमयत्व का अभाव हो जायगा, क्योंकि रस ही नाट्य के प्राण हैं और व्युत्पत्ति भी । अन्यथा सामञ्जस्य न होने पर असत्यता की आशङ्का का समूल नाश कर देगी । इस अभिप्राय से कहते हैं—तद्वृत्तिकामिति । जिन देशों में जो वृत्ति-प्रकार कहा गया है वह प्रकार जिन रूपकों के नाटकादि प्रकारों में किसी एक रूपक में होता है । वे ही रूपक उस देश के नायक की प्रधानता से कवि और नट को करने चाहिए अर्थात् उस देश की नाटक को प्रधानता से ही रूपक का प्रयोग करना चाहिए ॥ ५५ ॥

**अनुवाद**—ये प्रवृत्तियाँ एकीभूत होकर नाटक आदि में प्रयुक्त होती हैं । अतः वृत्तियों की बहुलता को देखकर ( पर्यवेक्षण कर ) उन-उन कार्यों का प्रयोग करना चाहिए ॥ ५६ ॥

**अनुवाद**—जहाँ समुदाय में किसी एक की प्रधानता ( या अधिकता ) होती है और शेष की अङ्गता तथा जहाँ पर दूसरे की बहुलता होती है, वहाँ प्रवृत्ति को पूर्ण करना चाहिए ॥ ५७ ॥

---

१. इतः परं श्लोकद्वयं क. ख. पुस्तकयोर्नास्ति ।

२. क-म. यथास्त्वेताः ।

३. ख.ग. नाटकादौ भवन्ति च ।

४. ख. ग. तत्तत्कर्माचरेत् सदा । क-म. तद्धर्मीमाचरेत्तथा ।

प्रयोगो द्विविधश्चैव[1] विज्ञेयो नाटकाश्रयः[2] ।
सुकुमारस्तथाऽऽविद्धो नाट्ययुक्तिसमाश्रयः ॥ ५८ ॥

---

नाट्यशब्दवाच्यस्य प्रयोगस्याश्रयो नाटकशब्दोऽत्र न रूपकविशेषे, अपि तु नाट्य एव। यथा—

"हास्यस्थानानि यानि स्युः कार्योत्पन्नानि नाटके" ( अ २२ ) इत्यत्र नाटकमुन्नयति प्रेक्षकान् ( स्वावेशेन ) संवेशेन ? व्युत्पत्त्या च तथा तद्भावानुप्रवेशेन प्रयोक्तृनिति। नाटके कृताविति पाठे गात्राणि विक्षिप्यन्ते अभिनयप्रयोगायाऽस्मादिति संज्ञाकाले। अन्ये तु नटशब्दात् काठकादिवच्चरणार्थे वुञ् इच्छन्तो नटानां कर्म श्लाध्यमिति गोत्रचरणयोश्च श्लाधादिविशेषणत्वाद् वुञित्याहुः (पा—१-१-१३४) लौकिकं च लिङ्गमिति नैवं शङ्कितव्यमेतस्यैकान्तिकं स्त्रीत्वमिति ॥ ५८ ॥

---

अनुवाद—नाट्य-युक्ति ( नाट्य-नियम) की योजना के अनुसार नाटककारों को नाटकाश्रित प्रयोग दो प्रकार का समझना चाहिए—सुकुमार और आविद्ध ॥ ५८ ॥

अभिनव—नाट्य शब्द के वाच्य-प्रयोग के आश्रय नाटक शब्द यहाँ पर रूपक-विशेष के अर्थ में नहीं, अपितु नाट्य के अर्थ में है।

जैसे—"हास्य के जो स्थान है वे नाटक में कार्योत्पन्न हैं" यहाँ पर नाटक स्वावेश से या व्युत्पत्ति से प्रेक्षकों का उन्नयन करता है और भावानुप्रवेश से प्रयोक्ताओं का उन्नयन करता है। यहाँ 'नाटकादौ' के स्थान पर 'नाटके कृतौ' ऐसा पाठ मानने पर अभिनय के प्रयोग के लिए जिससे पात्रों का बिक्षेप करते हैं वे संज्ञाकाल में कर्त्तव्य हैं। अन्य लोग तो नट शब्द से पाठक की तरह चरण अर्थ में वुञ् ( अक ) प्रत्यय मानते हुए 'नटों का कर्म श्लाघ्य है' तथा गोत्र और चरण के श्लाघा आदि का विशेषण होने के वुञ् (अक) प्रत्यय होता है, ऐसा कहते हैं। वहाँ पर एकान्तिक स्त्रीत्व ही वुञ् प्रत्यय का द्योत्य है ऐसो शङ्का नहीं करनी चाहिए, क्योंकि लिङ्ग प्रयोग तो लोक को इच्छा के अधीन होता है ॥ ५६ ॥

---

१. ग. ( टि० ) विविधश्चैव ।
२. ख. नाट्यकाश्रय । क-म. नाटकाश्रितः ।

[1]यत्त्वाविद्धाङ्गहारन्तु च्छेद्यभेद्याहवात्मकम् ।
मायेन्द्रजालबहुलं [2]पुस्तनेपथ्यसंयुतम्[3] ॥ ५९ ॥
[4]पुरुषैर्बहुभिर्युक्तमल्पस्त्रीकं तथैव च ।
[5]सात्त्वत्यारभटीयुक्तं नाट्यमाविद्धसंज्ञितम् ॥ ६० ॥
डिमः समवकारश्च व्यायोगेहामृगौ तथा ।
[6]एतान्याविद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः ॥ ६१ ॥

---

आविद्ध उत्कटः, अङ्गानां हारो हरणं यत्र । छेदेन भेदेन प्रधानः आहवः संग्रामः, आह्वयन्ते परस्परं वीरा यत्रेति । माया मंत्रौषधादिकृतं रूपपरिवर्तनादि, इन्द्रजालं हस्तलाघवसादृश्यादिकृतं पुस्तं द्रुमृण्मयमाकृत्यादि आविद्धं स्त्रीकर्मरूपाणां स्वरूपं स्वक्षेत्रे एव वक्ष्यामः ॥ ५९-६० ॥

---

**अनुवाद**—जो आविद्ध अङ्गहारों से युक्त, छेदन, भेदन एवं युद्धमय, माया एवं इन्द्रजाल की बहुलता से परिपूर्ण, पुस्त एवं नेपथ्य से युक्त, अनेक पुरुषों ( पात्रों ) से युक्त एवं अल्प स्त्रीपात्र वाला, तथा सात्त्वती एवं आरभटी वृत्तियों से युक्त नाट्य है, उसे 'आविद्ध' संज्ञक नाट्य समझना चाहिए ॥५९-६०॥

**अभिनव**—आविद्ध का अर्थ है उत्कट । जहाँ पर अङ्गों का हरण हो वह अङ्गहार है । छेदन-भेदन-प्रधान आहव सङ्ग्राम ( युद्ध ) है । जहाँ पर वीर लोग परस्पर एक दूसरे को ललकारते हैं । मन्त्र, औषधि के प्रयोग से रूप का परिवर्त्तन माया है । हस्तलाघव अर्थात् हाथ की सफाई से किया गया परिवर्त्तन 'इन्द्रजाल' है । लकड़ी और मिट्टी से निर्मित आकृति युस्त है । आविद्ध का अर्थ है स्त्रियों के कर्म एवं रूपों का स्वरूप, जिसका निरूपण आगे अपने क्षेत्र में करेंगे ॥ ५९-६० ॥

**अनुवाद**—डिम, समवकार, व्यायोग और ईहामृग रूपकों को नाट्य-प्रयोक्ताओं को 'आविद्ध' संज्ञक नाट्य मानना चाहिए ॥ ६१ ॥

---

१. क-म. यत्त्वाविद्धाङ्गहारन्तु । क-ब. तत्राविद्धाङ्गहारं तु ।
२. ख. ग. पुंसो नेपथ्यसंयुतम् । ३. क-म. संयुतः ।
४. क-म. प्रयोगः पुरुषप्रायस्तथाल्पस्त्रीक एव च ।
५. क. ग. सात्त्वत्यारभटीप्रायं नाट्यमाविद्धमेव तत् ।
क-(म.) सात्त्वत्यारभटीयुक्तो ज्ञेय आविद्धसंज्ञितः ।
६. क-म. आविद्धसंज्ञा विज्ञेयाः प्रयोगस्य वशानुगाः ।

'एषां प्रयोगः कर्तव्यो दैत्यदानवराक्षसैः[2] ।
उद्धता ये च पुरुषाः शौर्यवीर्यबलान्विताः[3] ॥ ६२ ॥

नाटकं सप्रकरणं भाणो वीथ्यङ्क[4] एव च ।
सुकुमारप्रयोगाणि मानुषेष्वाश्रितानि[5] तु ॥ ६३ ॥
[6]यतो मुखं भवेद्भाण्डं द्वारनेपथ्यकस्य तु ।
सा मन्तव्या तु दिक् पूर्वा नाटचयोगेषु नित्यशः ॥ ६४ ॥

शौर्यमभीरुत्वं वीर्यमुत्साहः, बलं कायधर्मः पराक्रमः ॥ ६२ ॥

मानुषेष्विति बाहुल्यापेक्षमेतत्। एवं चत्वारि भिन्नानि डिमादीति उद्धतानि, वर्गसुकुमाराणि नाटकादीनि ॥ ६३ ॥

अनुवाद—इनका प्रयोग दैत्य, दानव, राक्षस तथा शौर्य, वीर्य एवं बल से युक्त उद्धत पुरुषों द्वारा करना चाहिए ॥ ६२ ॥

अभिनव—शौर्य का अर्थ है डरपोक न होना। वीर्य का अर्थ है उत्साह। बल शरीर का धर्म पराक्रम है ॥ ६२ ॥

अनुवाद—नाटक, प्रकरण, भाण, वीथी, अङ्क ये सुकुमार नाट्यप्रयोग है और ये मनुष्यों के आश्रित होते हैं ॥ ६३ ॥

अभिनव—'मानुषेषु' में बहुवचन का प्रयोग मनुष्यों की अपेक्षा से है। इस प्रकार डिमादि चार रूपक आविद्ध अर्थात् उद्धत हैं और नाटकादि रूपक सुकुमार है ॥ ६३ ॥

अनुवाद—प्रेक्षागृह से रहित बाह्य प्रयोग में कदाचित् स्वामी की आज्ञा से विविशाओं में भी प्रेक्षागृह हो सकता है ॥ ६४ ॥

१. ख. एष प्रयोगः ।
२. क. देवदानवराक्षसैः ।
३. क-भ. शौर्यधैर्यवयान्विताः ।
४. ख. ग. वीथ्यङ्क नाटिके ।
५. ठ॰ मानुषेष्वाश्रितास्तु ये । क-भ. योज्यान्येतानि मानुषैः ।
६. एष श्लोकः क. ग. पुस्तकयोर्नास्ति ।

अथ बाह्यप्रयोगेषु प्रेक्षागृहविवर्जिते ।
विदिक्ष्वपि भवेद्रङ्गः कदाचिद् भर्त्तुराज्ञया ॥ ६५ ॥

पृष्ठे कृत्वा कुतपं नाट्ये युक्ता यतो मुखं भरताः ।
सा पूर्वा मन्तव्या प्रयोगकाले तु नाट्यज्ञैः ॥ ६६ ॥

द्वाराणि षट् चैव भवन्ति चास्य रङ्गस्य दिग्भागविनिश्चितानि ।
नाट्यप्रयोगेन खलु प्रवेशे प्राच्यां प्रतीच्यां च दिशि प्रवेशः ॥ ६७ ॥

विधानमुत्क्रम्य यथा च रङ्गे विनाप्रमाणाद्विदिशः प्रयोगे[1] ।
द्वारन्तु यस्मात्समृदङ्गभाण्डं प्राची दिशं तां मनसाऽध्यवस्येत् ॥ ६८ ॥

वयोऽनुरूपः प्रथमन्तु वेषो वेषानुरूपश्च गतिप्रचारः ।
गतिप्रचारानुगतश्च पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः ॥ ६९ ॥

अनुवाद—नाट्य-पृष्ठ पर कुतप अर्थात् भाण्ड-वाद्यादि रखकर नट लोग जिधर मुख करके नाट्य का प्रयोग करते हैं। प्रयोग-काल के अनुसार नाट्यवेत्ताओं को उसे पूर्व दिशा समझनी चाहिए ॥ ६५ ॥

अनुवाद—रङ्गमण्डप के दिशा ( मार्ग ) एवं भाण्डवाद्यों के विन्यास के अनुसार छः द्वार होते हैं किन्तु नाट्यप्रयोग के अनुसार रङ्गमण्डप में केवल पूर्व एव पश्चिम दिशा से प्रवेश करना चाहिए ॥ ६६ ॥

अनुवाद—विधान ( नियम ) का उल्लंघन करके जिस प्रकार रङ्गमण्डप में बिना प्रमाण के विदिशाओं में भी द्वार होता है वहाँ मृदङ्ग आदि भाण्डवाद्यों के विन्यास को देखकर मन से उसे पूर्व दिशा समझनी चाहिए ॥ ६७ ॥

अनुवाद—नाट्य-प्रयोग में अवस्था ( आयु ) के अनुसार वेष-भूषा और वेष-भूषा के अनुसार गति-प्रचार, गति-प्रचार के अनुकूल पाठ्य (संवादादि) और पाठ्य के अनुकूल अभिनय करना चाहिए ॥ ६८ ॥

---

१. क-म. कृतः कथंचिद्विदिश प्रयोगः ।

[1]आगमनामाख्यातनिपातोपसर्गसमासतद्धितैर्युक्तः ।
[2]सन्धिवचनविभक्त्युपग्रहनियुक्तो वाचिकाभिनयः[3] ॥ ४ ॥

---

अर्थद्वारेण रूपसौन्दर्येण चैषामुभयथा च योगः, क्षुभितं मह्यमिदं मे, क्षुब्धमिति मन्थेः प्रतीतिः स्यात् । अर्थभेदेऽपि स्वरूपसौन्दर्यं सार्वत्रिकं, विषयभेदेन च 'अस्यन्दिष्यन्त सिन्धवः' इति हि कर्तव्ये 'अस्यन्दिष्यन् सर्वे सिन्धवः' इति दुर्भणम्, अश्रवम् च, 'भक्ष्यं भक्षति वक्षसः क्षतमहो यद् वेपते क्लीबितम्' इति—अत्र रौद्रे भोक्ष्यतीति हृद्यम् । अत्र 'लोचने कदा संमार्जिष्यति' इति, न तु कदा संमार्क्ष्यतीति । एवं वैकल्पिकेऽपि आगमे सौन्दर्यात् ।

---

अनुवाद—यह वाचिक अभिनय आगम, नाम ( संज्ञा शब्द ), आख्यात ( क्रिया ), उपसर्ग, निपात, समास, तद्धित, सन्धि, वचन, विभक्ति तथा उपग्रह ( लिङ्ग-ज्ञान ) से युक्त होता है ॥ ४ ॥

अभिनव—अर्थों के द्वारा और रूपसौन्दर्य के द्वारा इनका दोनों प्रकारों से योग हैं। 'मेरे लिए यह क्षुभित है, अथवा 'क्षुब्ध' है। इस प्रकार यहाँ क्षुभित और क्षुब्ध दोनों प्रयोग देखे जाते हैं किन्तु क्षुब्ध कहने पर मन्थन की प्रतीति होती है। यहाँ दोनों में अर्थभेद होने पर भी स्वरूप-सौन्दर्य सर्वाधिक है। अतः विषय-भेद से 'अस्यन्दिष्यन्त सिन्धवः' इसके स्थान पर 'अस्यन्दिष्यन् सिन्धवः' ऐसा कहना कठिन है और अश्रव भी है अर्थात् सुनने योग्य नहीं है। और 'भक्ष्य भक्षति वक्षसः क्षतमहो यद् वेपते क्लीबितम्' अर्थात् 'वक्षःस्थल के क्षत भक्ष्य को खाता है, किन्तु जो कांपता है, वह नपुंसकता है'। यहाँ रौद्र रस में 'भक्षति' के स्थान पर 'भक्ष्यति' प्रयोग ही है, और 'लोचने कदा संमार्जिष्यति' अर्थात् 'आँखों का सम्मार्जन कब करेंगे' यहां पर 'संमार्जिष्यति' यह प्रयोग तो हृद्य है। 'कदा संमार्क्ष्यति' यह प्रयोग तो कभी भी ठीक नहीं है, यहाँ इडागम वैकल्पिक है, फिर भी सौन्दर्य के अनुसार प्रयोग हाना चाहिए।

---

१. क. नामाख्यातनिपातोपसर्गतद्धितसमासनिर्वर्त्यः ।
   ख. ग. नामाख्यातनिपातैरुपसर्गसमासतद्धितैर्युक्तः ।
   क. (टि०) आममनामाख्यातोपसर्गतद्धितनिपातसन्धिव्रतः ।

२. क. सन्धिविभक्तिनियुक्तो विज्ञेयो वाचिकाभिनयः ।
   ख. ग. सन्धिविभक्तिषु युक्तो विज्ञेयो वाचिकाभिनयः ।
   क. (टि०) सवचनविभक्त्युपग्रहनिर्वर्त्यो वाचिकाभिनयः ।

३. क. (टि०) वाचिकोऽभिनयः ।

[1]अभावपक्षे वा ।

आच्छिद्य प्रियतः कदम्बकुसुमं यस्यारिदारैर्नवम्
यात्राभङ्गविधायिनो जलमुचां कालस्य चिह्नं महत् ।
हृष्यद्भिः परिचुम्बितं नयनयोर्न्यस्तं हृदि स्थापितं
सीमन्ते निहितं कथञ्चन ततः कर्णावतंसीकृतम् ॥

इति सुव्यक्तमेव । एकान्त्संप्रतीतिनश्चेति धुटोऽसत्त्वपक्ष एव । आगमेनादेशोऽप्युपलक्ष्यते । मुग्धाशब्दस्थाने न मूढाशब्दः प्रयोगार्हः ।

नाम यथा मदनरिपुरिति भगवत्पर्यायश्चेति तदीयश्रृङ्गारवर्णने न प्रयोज्यम् ।

अथवा अभाव पक्ष में—

आच्छिद्य प्रियतः कदम्बकुसुमं यस्यारिदारैर्नवं
यात्राभङ्गविधायिनो जलमुचां कालस्य चिह्नं महत् ।
हृष्यद्भिः परिचुम्बितं नयनयोर्न्यस्तं हृदि स्थापितं
सीमन्ते निहितं कथञ्चन ततः कर्णावतंसीकृतम् ॥

यहाँ पर सब सुस्पष्ट है । और 'एकान्त्सप्रतीतिनः' इस प्रयोग में 'एकान्' और 'प्रतीतिनः' को मिलाकर जब प्रयोग करेंगे तो यहाँ 'धुट्' का आगम होकर 'एकान्त्सप्रतीतिनः' प्रयोग बनता है । किन्तु यह पक्ष सुवाच्य नहीं है । यहाँ 'धुट्' का असत्त्व पक्ष ही हृद्य है । आगम शब्द आदेश का उपलक्षण है, अतः मुग्ध शब्द के स्थान पर मूढ़ शब्द का प्रयोग उचित नहीं है ।

**नाम इति**—जैसे 'मदनरिपु' यह नाम अर्थात् संज्ञा वाचक शब्द है और कामारि शिव का पर्याय भी है । अतः श्रृङ्गार के वर्णन में इसका प्रयोग नहीं करना चाहिए । क्योंकि जो काम का अरि ( शत्रु ) है वह श्रृङ्गारी कैसे हो सकता है ? इस प्रकार यहाँ अनौचित्य दोष है और अनौचित्य से बढ़कर रस-भङ्ग का और दूसरा कारण नहीं है ।

**नानौचित्यादृते कश्चिद् रसभङ्गस्य कारणम्**

अतः श्रृङ्गार रस के वर्णन में 'मदनरिपु' इस नाम का प्रयोग नहीं करना चाहिए ।

१. क. अभावपक्षो । क. (टि०) अभावलक्षो ।

आख्यातमपि किन्तु यद्वैचित्र्यमावहति (तत्प्रयोज्यम् यथा)—

[1]"स्मरसि स्मर मेखलागुणै:' इति वर्तमानप्रत्ययेन [2]तत्साक्षात्करणमुपालम्भ-विषयता, त्वमेवात्र साक्षी अनृतं न प्रकटितं, अन्यथा स्मृतवानिति मेखलागुणैरिति स्यात् ।

उपसर्गोऽपि प्रकृतार्थयोगी यथा—विधिना तव निर्मितिः कृता इत्यर्थे न मितिः ।

अधिकद्योतको यथा—मुहुरुपचितैर्दृष्टिरालुप्यते[3] इति ।

**आख्यात इति**—वैचित्र्य के आधान में ही क्रिया पद ( आख्यात ) प्रयोज्य है, प्रयोग इष्ट है । यथा—

स्मरसि स्मर ! मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम् ।
च्युतकेसरदूषितेक्षणान्यवतंसोत्पलताड़नानि वा ॥

( कुमारसम्भव ४।८ )

यहाँ पर 'स्मरति' यह क्रिया वैचित्र्य का आधान करती है । भाव यह कि नायिका नायक से कहती है कि याद है कि गोत्रस्खलन करने पर मैंने तुम्हे करधनी से बाँधा था, केसर के पराग से तुम्हारी आँखों को दूषित किया था और कर्णावतंस से ताड़ित किया था, क्या उसे तुम याद कर रहे हो ? यहाँ पर वर्तमानकालिक लट् लकार के प्रयोग से बन्धन का साक्षात्करण अर्थात् प्रत्यक्ष अनुभव कर रहे हो, इस प्रकार उपालम्भ की विषयता प्रतीत होती है । तुम्ही साक्षी हो, मैंने कोई झूठ तो नहीं कहा ! अन्यथा 'स्मृतवानसि मेखलागुणै:' इस प्रकार का पाठ होता ।

**उपसर्ग इति**—उपसर्ग भी प्रकृत अर्थ से योग सम्बन्ध रखने पर प्रयोज्य होता है, अन्यथा नहीं । जैसे—**'विधिना तव निर्मितिः कृता'** ( ब्रह्मा जी ने इस काम के लिए तुम्हारी निर्मिति की है) । यहाँ पर 'निर्' उपसर्ग ब्रह्मा की सृष्टि से सम्बन्ध रखता है, अतः 'निर्मितिः' पद उपयोगी है । इस अर्थ में 'मितिः' शब्द का प्रयोग अनुपयुक्त है ।

१. स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु बन्वम् ।
च्युतकेसरदूषितेक्षणान्यवतंसोत्पलताड़नानि वा ॥ (कुमारसम्भवे ४१८ ।

२. तत्साक्षात्कारेणोपालम्भविषयता ।

३. त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे-
क्रूरस्तस्मिन्नपि न सहते सङ्गमे नौ कृतान्तः ॥ (मेघदूत उत्तरार्द्ध–४४)

उपसर्गैः कर्मप्रवचनीया अप्युपलक्ष्यते (यथा) "कः स्यादर्जुनात् प्रति", विचितो नास्तीति पुनरेव स्यात्। अर्जुनकृते विचितमिति।

मीमांसते हृदयमात्मन एव बाला।
नाम्नापि मानकलनां सहते न जातु॥

न तु चित्तं विचारयत्यामान एवेति। एवं सुब्धातुप्रत्ययपदं न तत्सुकृत्सु वाच्यं गौरवभयात्तु नोदाहृतम्।

स्त्रीप्रत्ययो यथा—'अध्यासीनः स वैदग्धी कृतीति न तु वैदग्ध्यं कृतीति; स्त्रीप्रत्ययेन सौभाग्यातिशयप्रतीतेः।

---

अधिक अर्थ के द्योतक उपसर्ग का उदाहरण है। जैसे—

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्त्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे-
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥
(मेघदूत उत्तरार्द्ध ४५)

यहाँ 'उपचितैः' में 'उप' उपसर्ग का प्रयोग अधिक अर्थ द्योतित करता है।

**अभिनव**—उपसर्ग पदों के द्वारा कर्मप्रवचनीय का भी उपलक्षण हो जाता है। जैसे—"**कः स्यादर्जुनात्प्रति**" (अर्जुन का प्रतिनिधि कौन है?)। यहाँ पर "प्रतिः प्रतिनिधिप्रतिदानयोः" सूत्र से प्रतिनिधि अर्थ में प्रति के योग में कर्मप्रवचनीय संज्ञा होती है। इसलिए 'अर्जुनात्' ये पञ्चमी विभक्ति हुई है।

"बाला अपने हृदय से मीमांसा करती है, क्योंकि मान करने अर्थात् रूठने का तो नाम ही नहीं ले रही है।"

यहाँ पर बाला हृदय में ही मीमांसा करती है, अपने चित्त की नहीं। इस प्रकार सुब्धातु से प्रत्यय करने पर निष्पन्न शब्द का प्रयोग नहीं करना चाहिए। गौरव के भय से उन प्रत्ययों का उदाहरण नहीं दिया है।

**स्त्रीप्रत्यय का उदाहरण**—जैसे, "**अध्यासीनः न वैदग्धीं कृती**" अर्थात् वह व्यक्ति पद पर आसीन होकर वैदग्धी क्रिया को करके कृती हैं। यहाँ पर इस प्रकार के प्रयोग से सौन्दर्यातिशय द्योतित होता है। उसके स्थान पर 'वैदग्ध्यं कृती' प्रयोग करने में सौन्दर्य नहीं है। स्त्रीप्रत्यय (वैदग्धी कृती) के प्रयोग से सौन्दर्यातिशय की प्रतीति होती है।

तद्धितपदं तद्धितप्रत्ययोपलक्षणम् तद् यथा—"[1]शात्रवं व पपुर्यशः" इति न तु शत्रूणां वेति; तद्धितवृत्त्या ह्येकार्थीभावान्वयात् तद्ग्रासीकृतमपि यशस्ते स्वयं-ग्राहीचक्रुरित्यर्थः।

निपातो यथा—"[2]हा हा हा देवि घोरा भव"।

तद्धितपद यहाँ तद्धितपद तद्धित प्रत्यय का उपलक्षण है। तद्धित प्रत्यय का उदाहरण-जैसे—

ताम्बूलीनां दलैस्तत्र रचिता पानभूमयः।
नारिकेलासवं योधाः शात्रवं व पपुर्यशः॥ ( रघुवश ४।४२ )

"पर्वत पर मद्यपान के लिए स्थान बनाकर योद्धाओं ने शत्रुओं के यश के समान नारियल के आसव( मद्य ) को नागवल्ली के पत्तों में पिया।"

वहाँ पर 'शात्रवं व' पाठ ही ठीक है 'शत्रूणां व' यह पाठ उचित नहीं है। क्योंकि 'शत्रूणामिदम्' इस अर्थ में अण् प्रत्यय होकर 'शात्रवं' प्रयोग बनता है। क्योंकि तद्धितवृत्ति के द्वारा एकार्थीभाव होकर पदार्थों के साथ उसका अन्वय होता है। तद्धित वृत्ति के द्वारा ग्रासीकृत यश को स्वयं ग्रहण कर लिया।

निपात इति, जैसे—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति ह हा हा देवि! धीरा भव॥
( उत्तररामचरित )

यहाँ पर 'ह हा हा' ये निपात तीव्र खेद को प्रकट करते हैं।

१. ताम्बूलीनां दलैस्तत्र रचितापानभूमयः।
नारिकेलासवं योधाः शात्रवं व पपुर्यशः॥ (रघु० ४।४२)

२. स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः।
वाता शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः॥
कामं सन्तु कठोरहृदयो रामोऽस्मि सर्वं सहे।
वैदेही तु कथं भविष्यति हा हा हा देवि घोरा भव॥ (उत्तरामचरिते)

सूचकः—आः ? किमत्र किरातैर्यत्र वान्ति वर्षानिला विशेषेण निरङ्कुशा इति।

समासेन एकार्थीभावे यत्र सति वृत्तम्'''यथा—मध्येगङ्गायमुनमनु (नेति ?) न तु मध्ये गङ्गायमुनयोरिति। [1]एवं समासान्तरेषु वाच्यम्। शुद्धेषु संकीर्णेषु चागमावयो निवृत्यन्ता[2] विद्यन्ते यत्रेति मत्वर्थीये च।

सन्धिर्द्विधा नैरन्तर्यरूपः श्लेषश्च—भवतोयेति। विपर्ययेण [3]नैरन्तर्यं असिद्धता[4] तत्रास्थिरा इति श्लेषे बीभत्साश्लीलने। सूत्रं ब्राह्ममिति पृथगपि द्विश्रुतिः, सङ्ग पवयोः, नैकपदवत्ता, ब्रह्मसूत्रमित्यनुस्वानस्योत्तरसंक्रान्तिव्यतिरेकेण [5]चात्मनि विश्रावयितुमशक्यत्वादेकपदवद्भावः।

सूचक कहता है—आः यहाँ किरातों से क्या प्रयोजन ? जहाँ वर्षा ऋतु की हवा निरङ्कुश होकर विशेष रूप से बह रही है।

समास के द्वारा एकार्थीभाव में—जैसे—'मध्ये गङ्गायमुनमनु'। यहाँ 'मध्ये गङ्गायमुनयोः' यह प्रयोग ठीक नहीं है। इसो प्रकार अन्य समासों में भो समझना चाहिए। इसो प्रकार शुद्ध और सङ्कीर्ण वृत्तियों में जहाँ आगम आदि निवृत्ति पर्यन्त रहते हैं और मत्त्वर्थीय प्रत्ययों में भो समझना चाहिए।

सन्धिरिति—सन्धि दो प्रकार की होती है—नैरन्तर्यरूप और श्लेषरूप। जैसे—भवतोया' में विपर्यय करने पर 'या भवतः' नैरन्तर्य में असिद्धता है। श्लेषरूप सन्धि में जैसे—तत्र+अस्थिरा=तत्रास्थिरा। बीभत्स+अश्लीलने=बीभत्साश्लीलने। 'ब्रह्मसूत्रम्' इसमें दो पदो का सङ्ग है। यहाँ एकश्रुति है। अतः एकपदवत्ता है। 'सूत्रं ब्राह्मं' ऐसा अलग-अलग कहने पर दो पदों का सङ्ग है, द्विश्रति है, अतः एकपदवद्भाव नहीं है। इसी को आचार्य स्पष्टीकरण करते हैं—'ब्रह्मसूत्रम्' में अनुस्वान अर्थात् उच्चारण किये गये ब्रह्म पद को सूत्र में सङ्क्रान्त किये बिना आत्मा के विषय में प्रख्याति करना अशक्य है, इसलिए यहाँ एकवद्भाव है। भाव यह कि आत्मविषयक सिद्धान्तों के प्रतिपादक सूत्र को 'ब्रह्मसूत्र' कहते हैं।

१. क. (टि०) गङ्गारचितनयनयोरिति।
२. क. (टि०) अनिच्छन्ना।
३. क. (टि०) विपर्ययौ।
४. क. (टि०) असिलता।
५. क. (टि०) भस्मनि।

विभक्तयः सुप्तिङः, तैः कारकशक्तयो लिङ्गाद्युपग्रहाश्चोपलक्ष्यन्ते । यथा—

दाहोऽम्भः प्रसृतिंपचः प्रचयवान् बाष्पः प्रणालोचितः
श्वासाः कम्पितदीपवर्तिलतिकाः पाण्डिम्नि मग्नं वपुः ।
किञ्चान्यत्कथयामि रात्रिमखिलां त्वन्मार्गवातायने
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्त्तते ॥

( विशालसिद्धभञ्जिका )

इति वपुष्येव मज्जनकर्तृकत्वं तदायत्तां पाण्डिम्नश्चाधारतां द्योतयन्नतीव रञ्जयति, न तु पाण्डुस्वभावं वपुरिति । एवं कारकान्तरेषु वाच्यम् ।

वचनं यथा—"पाण्डवा यस्य दासाः" सर्वे च पृथक् चेत्यर्थः ।

विभक्तियां सुप् और तिङ् हैं। इनसे कारकशक्ति और लिङ्गादि का उपग्रह उपलक्षित होता है। जैसे—

दाहोऽम्भः प्रसृतिंपचः, प्रचयवान् बाष्पः प्रणालोचितः
श्वासाः कम्पितदीपवर्त्तिलतिकाः पाण्डिम्नि मग्नं वपुः ।
किञ्चान्यत्कथयामि रात्रिमखिलां त्वन्मार्गवातायने
हस्तच्छत्रानिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते ॥

( विशालसिद्धभञ्जिका ६।२१ )

यहाँ पर 'पाण्डिम्नि मग्नं वपुः' में शरीर पाण्डिमा 'पाण्डुरता' में डूब गया है। यहाँ पर शरीर मज्जन ( डूबना ) क्रिया का कर्त्ता बताया गया है। उसके अधीन पाण्डिमा ( पाण्डु ) का आधार द्योतित करता हुआ वह अत्यन्त रञ्जक हो गया है। यहाँ शरीर की पीलिमा ( पीलापन ) नहीं कहा है। इसी प्रकार अन्य कारकों में भी करना चाहिए।

वचन का उदाहरण जैसे—

कर्त्ता धूतच्छलानां जतुमयशरणोद्योतनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः ।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य भिन्नं
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥ ( वेणीसंहार)

यहाँ पर 'पाण्डवाः' में उपात्त बहुवचन से यह सिद्ध होता है कि सभी पाण्डव पृथक् पृथक् भी दास हैं।

१. कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः ।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥ (वेणीसंहारे)

तथा वैचित्र्येण "त्वं हि रामस्य द्वारा किम्" "मैथिली तस्य द्वारा:"
लिङ्गाद्य्‌पग्रहः, यथा—
कीर्तिस्तव श्वेतेति न तु श्वेतं यशस्तवेति ।
कुरुते भुजशालिनः श्रेयम् । न तु कुर्वते भुजशालिनि पुंस्वं लिङ्गम् ।
[1]परिमृदितमृणालीकोमलान्यङ्गकानि ।

वैचित्र्य के द्वारा जैसे—

"त्वं हि रामस्य दाराः किम् ?" "मैथिली तस्य दाराः ।

अर्थात् 'तुम राम की दारा हो, क्या ?' 'मैथिली ( जानकी ) उसकी दारा है ।' यहाँ पर 'त्वं' ( तुम ) और मैथिली' एकवचन और 'दाराः' बहुवचन का प्रयोग अत्यन्त वैचित्र्य है, वैचित्र्यकारक है ।

लिङ्गादि उपग्रह का उदाहरण-जैसे—

"कीर्तिस्तव श्वेतेति न तु श्वेतं यशस्तव ।
दानादिप्रभवा कीर्त्तिः शौर्यादिप्रभवं यशः ॥

"तुम्हारी कीर्त्ति श्वेत है, तुम्हारा यश श्वेत नहीं है । क्योंकि कीर्त्ति दानादि के प्रभव है और यश शौर्यादि प्रभव होता है" । यहाँ पर दानादिप्रभवा श्वेता कीर्त्ति स्त्रीलिङ्ग का प्रयोग किया है, 'तुम्हारा यश श्वेत है' ( यशः श्वेतं ) नपुंसकलिङ्ग का उपादान ठीक नहीं है । यहाँ 'कीर्त्ति' स्त्रीलिङ्ग का प्रयोग ही उचित है ।

उपग्रह का अन्य उदाहरण—जैसे 'कुरुते भुजशालिनः श्रेयम्' यहाँ पर 'कुरुते' का प्रयोग है 'कुर्वते' का नहीं । यहाँ 'भुजशालित्व' पुरुष का लिङ्ग है। अन्य उदाहरण-जैसे—

अलसवलितमुग्धान्यध्वसंपातखेदा-
न्यशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणाली कोमलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ ( उत्तररामचरित १।२४)

यहाँ पर नपुंसक लिङ्ग का उपन्यास यह सूचित करता है कि तुम्हारे अङ्ग न तो उपमर्दक्षम हैं न उपभोगक्षम । अपितु कृश एवं कोमल हैं ।

१. अलसललितमुग्धान्यध्वसंपातखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणालीकोमलान्यङ्गकानि-
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ (उत्तर १।२४)

आसमन्ताद् वैचित्र्यं यथा—

[1]'आपातेऽपि विकारकारणमहो वक्त्राम्बुजन्माऽऽसवः ।

नियुज्यते क्रियायामिति नियुक्तो धातुः तस्य वैचित्र्यं यथा—

"ग्रस्तं कुलान्तं जगत्" न तु भुक्तम् । ग्रसतेरदनमात्रे परिभाषितेऽपि ग्रासातिशयसंरम्भः कुलान्तेऽत्र वर्त्तते । पूर्ववदत्रापि द्वन्द्वान्मत्वर्थीयः । एतदेवोपजीव्यानन्दवर्धनाचार्येणोक्तं "सुप्तिङ्वचने" त्यादि । अन्यत्रापि सुबादिवक्रतेति ॥ ४ ॥

आसमन्तात् वैचित्र्य का उदाहरण जैसे—

केलीकन्दलितस्य विभ्रममधोर्धुयं वपुस्ते दृशौ
भङ्गीभङ्गुरकामकार्मुकमिदं भ्रूनर्मकर्मक्रमः ।
आपातेऽपि विकारकारणमहो वक्त्राम्बुजन्मासवः
सत्यं सुन्दरि ! वेधसस्त्रिजगतीसारं त्वमेकाकृतिः ॥

यहाँ पर नायिका हर प्रकार की विचित्रताओं से सम्पन्न है, अतः यह आसमन्तात् वैचित्र्य का उदाहरण है ।

क्रिया में जिसका नियोग किया जाता है वह धातु है उसका वैचित्र्य जैसे—

**'ग्रस्तं कुलान्तं जगत्'** यहाँ पर 'ग्रस्त' पद का उपन्यास है, 'भुक्त' पद को नहीं यहाँ 'ग्रसति' पद से यद्यपि भक्षण मात्र को परिभाषित किया है तथापि यहाँ 'कुलान्त' के विषय में ग्रासातिशय है । यहाँ भी कुलान्त में पहिले द्वन्द्व समास है ( कुलं च अन्तश्च = कुलान्तम् ), फिर द्वन्द्व के बाद मत्वर्थीय अच् प्रत्यय है । ( कुलान्तमस्मिन्नस्तीति' इस विग्रह में मत्वर्थीय अच् प्रत्यय होता है । इसी को उपजीव्य बनाकर आनन्दवर्धनाचार्यने कहा है —

सुप्तिङ्वचनसम्बन्धैस्तथाकारकशक्तिभिः ।
कृत्तद्धितसामसैश्च द्योत्यो लक्ष्यक्रमः क्वचित् ॥

( ध्वन्यालोक ३।१६ )

इस प्रकार अन्य स्थलों पर भी सुबादिवक्रता कहनी चाहिए ॥ ४ ॥

---

१. केलीकन्दलितस्य विभ्रममधो धुर्यं वपुस्ते दृशौ-
भङ्गीभङ्गुरकामकार्मुकमिदं भ्रूनर्मकर्मक्रमः ।
आपातेऽपि विकारकारणमहो वक्त्राम्बुजन्मासवः-
सव्यं सुन्दरि वेधसस्त्रिजगतीसारं त्वमेकैकाकृतिः ।

द्विविधं हि स्मृतं पाठ्यं संस्कृतं प्राकृतं तथा[1]।
[2]तयोर्विभागं वक्ष्यामि यथावदनुपूर्वशः ॥ ५ ॥
व्यञ्जनानि स्वराश्चैव सन्धयोऽथ विभक्तयः।
नामाख्यातोपसर्गाश्च निपातास्तद्धितास्तथा ॥ ६ ॥
[3]एतैरङ्गैः समासैश्च नानाधातुसमाश्रयम्[4]।
विज्ञेयं संस्कृतं पाठ्यं प्रयोगञ्च [5]निबोधत ॥ ७ ॥

इत्येवं दशभिरङ्गैर्विभज्य कवितावाचकशब्दनिष्ठो व्यवहार उक्तः। [6]स्थान-प्रयत्नादिज्ञानञ्च कवेर्गाढशिथिलमसृणपरुषादिगुम्फविशेषविभागायोपदिष्टं न च तस्य सम्यगुच्चारणोपदेशाय। वर्गश उपादानं सावर्ण्येन प्रबन्धसौन्दर्यज्ञानार्थं यथा—

दत्तानन्दं धनिनमनुसरन् वृतिधनः।

इस प्रकार आगमादि दस अङ्गों के द्वारा कविता के वाचक शब्दनिष्ठ व्यवहार को विभक्त करके कहा है। स्थान ( कण्ठादि स्थान ) और प्रयत्न आदि के ज्ञान का उपादान कवियों के गाढ़, शिथिल, कोमल और कठोर आदि गुम्फ विशेष के विभाग के लिए उपदेश दिया है, उसके सम्यग् उच्चारण के उपदेश के लिए उसकी उपादान नहीं किया है। वर्गशः उपादान सवर्णता अर्थात् वर्णों की समान वर्णता से होने वाले प्रबन्ध के सौन्दर्य ज्ञान के लिए है। जैसे—

'दत्तानन्दं धनिनमनुसरन् वृत्तिधनः'।

इत्यादि में न की सवर्णता है।

**अनुवाद—पाठ्य दो प्रकार का कहा गया है—संस्कृत और प्राकृत। अब मैं क्रमशः उन दोनों के विभाग को विधिपूर्वक कहूँगा ॥ ५ ॥**

**अनुवाद—व्यञ्जन, स्वर, सन्धि, विभक्ति, नाम ( संज्ञा शब्द ), आख्यात ( क्रिया ), उपसर्ग, निपात और तद्धित, समास और नामधातु—इन अङ्गों से सम्पन्न संस्कृत पाठ्य को समझना चाहिए, अब उनके प्रयोग को समझिये ॥६-७॥**

१. क. (टि०) यथा।
२. क. (टि०) अङ्गानिकक्ष्याम्यनयोः।
३. ख. ग. एतैरङ्गविधानैस्तु।
४. क. नानाधातुगवेक्षितम्। क-न (टि०) नानाधातुगवक्षितम्। क. (टि०) नानाधातुसमन्वितम्।
५. ख. ग. तद्वक्ष्यामि समासतः।
६. क. स्थानकरणादिज्ञानं च।

[1]अकाराद्याः स्वरा ज्ञेया औकारान्ताश्चतुर्दश।
[2]हकारान्तानि कादीनि व्यञ्जनानि विदुर्बुधा ॥ ८ ॥

तत्र स्वराश्चतुर्दश—अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ इति स्वरा ज्ञेयाः ॥

कादीनि व्यञ्जनानि यथा—क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह इति व्यञ्जनवर्गः।

वर्गे वर्गे समाख्यातौ द्वौ वर्णौ प्रागवस्थितौ।
अघोषा इति ये त्वन्ये सघोषाः संप्रकीर्तिता ॥ ९ ॥

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलश्च दन्ताश्च नासिकोष्ठौ च तालु च ॥ १० ॥

---

अनुवाद—अकार से लेकर औकार पर्यन्त चौदह स्वर होते हैं और कादि से हकारान्त तक तैंतीस व्यञ्जन समझने चाहिए ॥ ८ ॥

अनुवाद—स्वर चौदह हैं—अ, आ, इ, ई, उ, ऊ, ऋ, ॠ, ऌ, ॡ, ए, ऐ, ओ, औ—ये चौदह स्वर हैं।

क से लेकर ह तक—क, ख, ग, घ, ङ, च, छ, ज, झ, ञ, ट, ठ, ड, ढ, ण, त, थ, द, ध, न, प, फ, ब, भ, म, य, र, ल, व, श, ष, स, ह—ये तैंतीस व्यञ्जन वर्ण हैं।

अनुवाद—प्रत्येक वर्ग के प्रथम दो वर्ण अघोष कहे जाते हैं शेष वर्ण सघोष कहलाते हैं ॥ ९ ॥

विमर्श—प्रत्येक वर्ग के प्रथम और द्वितीय अक्षर अर्थात् क, ख, च, छ, ट, ठ, त, थ, प, फ और श, ष, स—ये अघोष वर्ण हैं और शेष वर्ण अर्थात् वर्ग के तृतीय, चतुर्थ, पञ्चम अर्थात् ग, घ, ङ, ज, झ, ञ, ड, ढ, ण, द, ध, न, ब, भ, म तथा य, र, ल, व, ह—ये वर्ण सघोष कहे जाते हैं ॥ ९ ॥

वर्णों के आठ स्थान हैं—उर (उरस्), कण्ठ, शिर, जिह्वामूल, दन्त, नासिका, ओठ और तालु ॥ १० ॥

---

१. क (टि०) अकारादि। २. क-भ (टि०) ककादीनि ह्रान्तानि।

अ कु ह विसर्जनीयाः कण्ठ्याः। इ चु य शास्तालव्याः। ऋ टु र षा मूर्धन्याः। लृ तु ल सा दन्त्याः। उ पूपध्मानीया ओष्ठ्या। ⌣प⌣ फ इति प फा भ्यां प्राक् अर्धविसर्गसदृशः उपध्मानीयः। ⌣क ⌣ख इति कखाभ्यां प्राक् अर्धविसर्गसदृशो जिह्वामूलीयः। ए ऐ कण्ठ्यतालव्यौ। ओ औ कण्ठोष्ठ्यौ। वकारो दन्त्योष्ठ्यः। ङ ञ ण न मा अनुनासिकाः।

विसर्जनीय औरस्य इत्येके।

सर्ववर्णानां मुखं स्थानमित्यपरे।

---

अनुवाद—अब वर्णो के स्थान का निरूपण करते हैं—

१. अकार, कवर्ग (क, ख, ग, घ, ङ) ह और विसर्ग का कण्ठ स्थान है।

२. इकार, चवर्ग (च, छ, ज, झ, ञ) य और श का तालु स्थान है।

३. ऋ, टवर्ग (ट, ठ, ड, ड, ण) र और ष का मूर्धास्थान है।

४. लृकार, तवर्ग (त, थ, द, ध, न) लकार और सकार का दन्त स्थान है।

५. उ कार, पवर्ग, (प, फ, ब, भ, म) और ऊपध्मानीय (⌣प⌣) का ओष्ठ स्थान है।

६. क और ख के पूर्व जो अर्धविसर्ग सदृश चिह्न (⌣क ⌣ख) का जिह्वामूल स्थान है।

७. ए, ऐ का कण्ठ और तालु स्थान है।

८. ओ, औ का कण्ठ और ओष्ठ स्थान है।

९. वकार का दन्त और ओष्ठ स्थान है।

१०. ङ, ञ, ण, न और म का नासिका स्थान भी होता है।

११. विसर्जनीय (विसर्ग) का औरस्य स्थान है, ऐसा कुछ आचार्य मानते हैं।

१२. सभी वर्णो का मुख स्थान है, ऐसा अन्य आचार्य कहते हैं।

द्वौ द्वौ वर्णौ तु वर्गाद्यौ शषसाश्च त्रयोऽपरे ।
[1]अघोषा घोषवन्तस्तु ततोऽन्ये परिकीर्तिताः ॥ ११ ॥
एते घोषाघोषा कण्ठ्योष्ठ्या दन्त्यजिह्वयानुनासिक्या ।
ऊष्माणस्तालव्याः विसर्जनीयाश्च बोद्धव्याः ॥ १२ ॥

घोष इति अनुप्रदानविशेषः । नासिका तद्व्यापारोऽन्ते यस्य तथाभूतो धर्मोऽनुस्वारः । तत्र घोषबाहुल्याद् गाढता यथा—

"अङ्गं दधन्निबिडचन्दनमङ्गनानां ।
नैदाघवातसदनं न तु मन्मथस्य ॥"

अत्र चकारतकारावेव अघोषौ । एतदर्थस्य च स्थानादिविभाग उपन्यस्तः । एतद् ( भाषा ) स्वर ? लक्षणाध्याये (१७) स्फुटयिष्यामः । ⌒क⌒ खयोरुच्चारणाय ककारखकारौ । जिह्वाशब्देन (जिह्वमूलं) स्थानम् । करणञ्च ।

अनुवाद—प्रत्येक वर्ग के आदि के दो-दो वर्ण ( क, ख, च, छ, ट, ठ, त, थ, प, फ ) और श, ष, स ये तीन वर्ण अघोष कहलाते हैं और शेष वर्ण अर्थात् प्रत्येक वर्ग के अन्तिम तीन वर्ण ( ग, घ, ङ, ज, झ, ञ, ड, ढ, ण, द, ध, न, ब, भ, त ) और य, र, ल, व, ह ये सघोष हैं ॥ ११ ॥

अनुवाद—ये घोष और अघोष वर्ण कण्ठ्य, ओष्ठ्य, दन्त्य, जिह्वा, नासिका, ऊष्माण, तालव्य, विसर्जनीय, स्थानों से उच्चारित होते हैं ॥ १२ ॥

अभिनव—घोष यह वर्णो का प्रयत्न विशेष है । नासिका और उसका व्यापार जिसके अन्त में हो वह धर्म अनुस्वार संज्ञक है। इनकी गाढ़ता घोष वर्णों के आधिक्य से होती है । जैसे—

अङ्गं दधान्निबिड़चन्दनमङ्गनानां ।
नैदाघवातसदनं न तु मन्मथस्य ॥

अर्थात् 'सघन चन्दन' ( चन्दन का लेप ) को धारण करने वाला अङ्गनाओं का अङ्ग ग्रीष्म ऋतु के वायु का सदन नहीं है, अपितु कामदेव का सदन है ।" यहाँ पर नकार और तकार ही अघोष हैं । इसीलिए ही स्थान आदि का विभाग उपन्यस्त किया गया है । इसे हम स्वर-लक्षण के अध्याय में सत्तरहवें श्लोक में स्पष्ट रूप में कहेंगे । ⌒क⌒ख के उच्चारण के लिए जिह्वामूल स्थान है ।

१. क ( टि० ) अघोषाविति ये स्वन्ये सघोषाः सम्प्रकीर्तिता ।
क-म. अघोषवन्तो ये चान्ये सघोषाः परिकीर्तिताः ।

गघङ जझञ डढण दधन बभम तथैव यरलवा मता घोषाः ।
कख चछ टठ तथ पफ श, ष, सा इति वर्गेष्वघोषाः स्युः ॥१३॥
कखगघञाः कण्ठस्थास्तालुस्थानास्तु चछजझञाः ।
टठडढणा मूर्धन्यास्तथदधनाश्चैव दन्तस्थाः ॥ १४ ॥
पफबभमास्त्वोष्ठ्याः स्युः दन्त्या लृलसा अहौ च कण्ठस्थौ[1] ।
तालव्या इचुयशा स्युर्ऋटुरषा [2]मूर्धस्थिताः ज्ञेयाः ॥१५॥
लृलॄ दन्त्यौ ओऔ कण्ठोष्ठ्यो एऐकारौ च कण्ठतालव्यौ ।
[3]कण्ठ्यो विसर्जनीयो जिह्वामूलोद्भवः कखयोः[4] ॥ १६ ॥
पफयोरोष्ठस्थानं भवेदुकारः स्वरो विवृतः ।
स्पृष्टाः काद्या मान्ताः शषसहकारास्तथा विवृताः ॥ १७ ॥

अनुवाद—ग, घ,ङ, ज, झ, ञ, ड, ढ, ण, द, ध, न, ब, भ, म, य, र, ल, व—ये घोष वर्ण हैं और क, ख, च, छ, ट, ठ, त, थ, प, फ, श, ष, स—ये अघोष वर्ण हैं ॥ १३ ॥

अनुवाद—क, ख, ग, घ, ङ का कण्ठस्थान च, छ, ज, झ, ञ का तालुस्थान, ट, ट, ड, ढ, ण का मूर्धास्थान त, थ, द, ध, न का दन्तस्थान, प, फ, ब भ, म का ओष्ठ स्थान होते हैं और लृ, ल, स को दन्त्य, अ, ह को कण्ठ्य कहते हैं ॥ १४-१५ (१) ।

अनुवाद—इ, चु ( चवर्ग—च, छ, ज, झ, ञ ) य, श का तालव्य स्थान है ( इचुयशानां तालु ) । ऋ, टु ( टवर्ग ट, ठ, ड, ढ, ण ), र और ष का मूर्धा स्थान है ( ऋटुरषाणां मूर्धा ) ऌ लृ को दन्त्य, ओ, औ को कण्ठोष्ठ्य, ए, ऐ को कण्ठतालव्य, विसर्ग का कण्ठ्य और ≍क ≍ख का जिह्वामूल स्थान है ॥ १५-१६ ॥

अनुवाद—उकार पवर्ग और ≍प ≍फ का ओष्ठ स्थान है । स्वर का विवृत स्थान है । क से म पर्यन्त वर्ण ( क, ख, ग, घ, ङ, च, छ, ज, झ, ञ, ट, ठ, ड, ढ, ण, त, थ, द, ध, न, प, फ, ब, भ, म ) स्पर्श संज्ञक कहे जाते हैं । श ष स ह को विवृत कहते हैं ॥ १७ ॥

१. क-प ( टि० ) कण्ठोष्ठ्यौ ।
२ क. मूर्ध्नि स्थिता ज्ञेयाः ।
३. क. कण्ठ्यौ विसर्जनीयौ जिह्वाम् ।
४. ख. जिह्वामूलोद्भवः कपयोः ।
५. ख. ग. कण्ठेन रसान् विद्यात् ।

अन्तस्थाः संवृतजाः ङञणनमा नासिकोद्भवा ज्ञेयाः ।
ऊष्माणश्च शषसहाः यरलववर्णास्तथैव चान्तःस्थाः ॥ १८ ॥
जिह्वामूलीयः ≍कः ≍प उपध्मानीयसञ्ज्ञया ज्ञेयः ।
कचटतपा स्वरिताः स्युः खछठथफा स्युः सदा क्रम्याः ॥ १९ ॥
[1]कण्ठयोरस्यान् विद्यात् गजडदबान् पाठ्यसंप्रयोगे[2] तु ।
वेद्यो विसर्जनीयो [3]जिह्वास्थाने स्थितो वर्णः ॥ २० ॥
एते व्यञ्जनवर्णाः समासतः सञ्ज्ञया मया कथिता ।
[4]शब्दविषयप्रयोगे स्वरांस्तु भूयः प्रवक्ष्यामि ॥ २१ ॥

---

अनुवाद—अन्तःस्थ ( य, र, ल, व ) वर्ण संवृत कहलाते हैं। ङ, ण, ञ, न, म का नासिका स्थान भी होता है। श, ष, स, ह, ऊष्मा संज्ञक वर्ण है और य, र, ल, व को अन्तःस्थ वर्ण कहते हैं ॥ १८ ॥

अनुवाद—जिह्वामूलीय ( ≍ क ≍ ख ) का जिह्वामूल स्थान है और ≍ प ≍ फ को ऊपध्मानीय कहते हैं। क, च, ट, त, प, वे स्वरित हैं और ख, छ, ठ, थ, फ—ये क्रम्य वर्ण हैं। पाठभेद के अनुसार ये कण्ठ्य कहे जाते हैं ॥ १९ ॥

अनुवाद—ग, ज, ड, द, ब वर्णों का और पाठभेद के अनुसार घ, झ, ढ, थ, भ वर्णों का कण्ठोरस्य स्थान है और विसर्जनीय का जिह्वामूल स्थान है, ऐसा समझना चाहिए ॥ २० ॥

अनुवाद—इन व्यञ्जन वर्णों का मैंने संक्षेप में वर्णन किया है। अब शब्द प्रयोग के विषय में स्वरों का वर्णन करूँगा ॥ २१ ॥

---

१. ख. म. पाठ्ययोगे तु ।

२. ख. ग. घझढधभान् ।

३. ख. ग. विद्यास्थानस्थितो वर्णः ।
क ( टि० ) जिह्वामूले स्थितो वर्णः ।

४. क. शब्दप्रयोगविषये ।

[1]यस्मिन् स्थाने स समो विज्ञेयो यः सवर्णसंज्ञोऽसौ ।
[2]य इमे स्वराश्चतुर्दश निर्दिष्टास्तत्र वै दश समानाः ।
पूर्वो ह्रस्वस्तेषां परश्च दीर्घोऽवगतव्यः[3] ॥ २२ ॥

---

सवर्णसंज्ञ इति । ये येन तुल्यास्ते तत्सवर्णभूतयः ॥ २२ ॥

---

**अनुवाद**—जिस स्थान में जो वर्ण सम ( समानस्थानीय ) होता है, उसे सवर्ण संज्ञक समझना चाहिए। जो ये चौदह स्वर कहे गये हैं उनमें दस स्वर समान हैं। इन समान स्वरों में क्रमशः पहिले को ह्रस्व और दूसरे को दीर्घ समझना चाहिए ॥ २२ ॥

**अभिनव**—सवर्ण संज्ञा कहने का अभिप्राय है कि जो वर्ण जिस वर्ण के साथ समान हो वे सवर्ण संज्ञक होते हैं ॥ २२ ॥

**विशेष**—पाणिनि ने भी समान स्थान और प्रयत्न वाले वर्णों को सवर्ण कहा है। (तुल्यास्यप्रयत्नं सवर्णम्) आचार्यों ने जो चौदह स्वर बताये हैं उनमें प्रारम्भ के दस स्वर सवर्ण संज्ञक है। वे दस स्वर हैं—अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ । इनमें प्रथम अ इ उ ऋ ऌ ये पाँच स्वर ह्रस्व और आ ई ऊ ॠ ॡ वे पाच दीर्घ स्वर है। इस पर ये ह्रस्व दीर्घ भेद से भिन्न होते हुए भी एकवद्भाव होने से अभिन्न हैं। पाणिनि ने आ, ई, ऊ, ॠ के दीर्घ रूप तो माने हैं किन्तु 'ॡ' का दीर्घरूप नहीं मानते। ( ऌवर्णस्य दीर्घाभावः ) ॥ २२ ॥

---

१. ख-ग. पुस्तकयोर्नास्ति श्लोकार्धोऽयम् ।

२. क ( टि० भ-म. पुस्तकयोः )—

य इमे स्वराश्चतुर्दश तत्रादौ दश समानसंज्ञास्तु ।
पूर्वो ह्रस्वस्तेषां परश्च दीर्घोऽवगन्तव्यः ।
पूर्वाचार्यैरुक्तं विस्तरतो लक्षणं तु शब्दानाम् ।
संक्षेपादहमेषां लक्षणमर्थं च लक्षयामि ।
अर्थप्रधानं नाम स्यादाख्यातं तु क्रियाकृतम् ।
द्योतयन्त्युपसर्गास्तु विशेषं भावसंश्रयम् ।
नामाख्यातार्थविषयं विशेषं द्योतयन्ति ते ।
पृथक् तत्रोपसर्गेभ्यो निपाता नियमे च्युते ।

३. ख. विधातव्यः ।

[1]इत्थं व्यञ्जनयोगैः स्वरैश्च साख्यातनामपदविहितैः ।
काव्यनिबन्धाश्च स्युर्धातुनिपातोपसर्गास्तु ॥ २३ ॥
एभिर्व्यञ्जनवर्गैर्नामाख्यातोपसर्गनिपातैः ।
तद्धितसन्धिविभक्तिभिरधिष्ठितः शब्द इत्युक्तः ॥ २४ ॥
[2]पूर्वाचार्यैरुक्तं शब्दानां लक्षणं समासयोगेन ।
विस्तरशः पुनरेव प्रकरणवशात् संप्रवक्ष्यामि ॥ २५ ॥

---

पूर्वापरीभूतह्रस्वदीर्घरूपतया स्वरा भिन्ना अपि अभिन्ना, एकवद्भावात् ।

करिष्यमाणं क्रियमाणं कृतमिति भूतादिकालयुक्तं गमनागमनाभ्यामध्यक्ष-परोक्षभूताभ्यां क्रियाभ्यां युक्तमाख्यातम् । एकत्वाविवचनलिङ्गयुक्तं नाम ॥ २३ ॥

---

**अनुवाद**—इस प्रकार स्वर और व्यञ्जनों के योग से आख्यात सहित नाम ( संज्ञा शब्द ) पद, निपात और उपसर्गों के योग से काव्यों का निबन्धन होता है ॥ २३ ॥

**अभिनव**—पूर्व के ह्रस्व स्वर और बाद के दीर्घ स्वर भिन्न होते हुए भी अभिन्न हैं, एकवद्भाव होने से ।

**अभिनव**—करिष्यमाण और क्रियमाण रूप भूतकाल से युक्त तथा गमन रूप प्रत्यक्षभूत और अगमन रूप परोक्ष भूत क्रियाओं से युक्त आख्यात है । एकत्व वचन और पुंस्त्वादि लिङ्गों से युक्त नाम है ॥ २३ ॥

**अनुवाद**—इन व्यञ्जन वर्गों तथा नाम, आख्यात, उपसर्ग, निपात, तद्धित, सन्धि, तथा विभक्तियों से अधिष्ठित शब्द कहा गया है ॥ २४ ॥

**अनुवाद**—प्राचीन आचार्यों ने शब्दों का लक्षण संक्षेप में कहा है, अब प्रकरण के अनुसार विस्तार से लक्षण कहूँगा ॥ २५ ॥

---

१. क. ग. उद्दिष्टं शब्दानां लक्षणमेतत्समासयोगेन ।
प्रकारणवशाद्धि तदहं विस्तरशः संप्रवक्ष्यामि ॥
ख. पूर्वाचार्यैरुक्तं शब्दानां लक्षणं तु विस्तरशः ।
पुनरेव संहृतार्थं लक्षणतः संप्रवक्ष्यामि ।

२. ख. ग. पूर्वाचार्यैरुक्तं शब्दानां लक्षणं तु विस्तरतः ।
पुनरेव संहृतार्थं लक्षणतः सप्रवक्ष्यामि ॥

[1]अर्थप्रधानं नाम स्यादाख्यातं तु क्रियाकृतम् ।
द्योतयन्त्युपसर्गास्तु विशेषं भावसंश्रयम् ॥ २६ ॥
तत्प्राहुः सप्तबिधं षट्कारकसंयुतं प्रथितसाध्यम् ।
निर्देशसम्प्रदानापादानप्रभृतिसञ्ज्ञाभिः ॥ २७ ॥
नामाख्यातार्थविषय विशेषं द्योतयन्ति ते ।
पृथक्तत्रोपसर्गेभ्यो निपाता नियमेऽच्युते ॥ २८ ॥
[2]संप्रत्यतीतकालक्रियादिसंयोजितं प्रथितसाध्यम् ।
वचनं नागतयुक्तं सुसदृशसंयोजनविभक्तम् ॥ २९ ॥

प्रथितः साध्योऽर्थो वाच्यत्वेन यस्य ॥ २७ ॥

अनवाद—नाम ( संज्ञा शब्द ) अर्थप्रधान होता है और आख्यात क्रिया होतो है और उपसर्ग क्रिया के विषय में विशेषताओं को द्योतित करते हैं ॥ २६ ॥

विशेष—नाम ( संज्ञा शब्द ) पाँच प्रकार के होते हैं—उणाद्यन्त, कृदन्त, तद्धितान्त, समासान्त और शब्दानुकरण । जेसा कि कहा है —

उणाद्यन्तं कृदन्तञ्च तद्धितान्तं समासान्तम् ।
शब्दानुकरणं चैव नाम पञ्चविधं स्मृतम् ॥

अनुवाद—नाम शब्द सात प्रकार का होता है और छः कारकों से संयुक्त होता है तथा प्रथित साध्य होता है । यह करण, सम्प्रदान, अपादान आदि संज्ञाओं से युक्त होता है ॥ २७ ॥

अभिनव—रूप से प्रसिद्ध है साध्य अर्थ जिसका ॥ २७ ॥

अनुवाद—नाम और आख्यातार्थ के विषय को विशेषताओं को जो द्योतित करते हैं, वे उपसर्गों से पृथक् निपात है यह नियम अच्युत है ॥ २८ ॥

अनुवाद—वर्तमान एवं भूतकाल की क्रियाओं से संयोजित प्रथित साध्य होतो है । वचन विभक्तियों से युक्त तथा सुसदृश संयोजन से सम्पन्न होते हैं ॥२९॥

१. अयं श्लोकः ख. ग. पुस्तकयोर्नास्ति ।
२. ख. संप्रत्यतीतकालयोजितः क्रियादिसंयोगः ।
प्रथित. साध्ये वचनानां यतियुक्तं संदृशसंयोजनविभक्तम् ।
ग. संप्रत्यतीतकाल सम्प्रयोजितः क्रियादिसंयोगः प्रथितः ।
साध्ये वचनानां यतियुक्तं सदृश संयोजकविभक्तम ।

[1]पञ्चशतधातुयुक्तं पञ्चगुणं पञ्चविधमिदं वापि ।
[2]स्वाद्यधिकारगुणैरर्थविशेषैर्विभूषितन्यासम्[3] ॥
प्रातिपदिकार्थलिङ्गैर्युक्तं[4] पञ्चविधमिदं ज्ञेयम् ॥ ३० ॥
आख्यातं [5]पाठ्यकृतं ज्ञेयं नानार्थाश्रयविशेषम्[6] ।
[7]वचनं नामसमेतं पुरुषविभक्तं तदाख्यातम् ॥ ३१ ॥
[8]प्रातिपदिकार्थयुक्तान्धात्वर्थानुपसृजन्ति ये स्वार्थैः[9] ।
उपसर्गा ह्युपदिष्टास्तस्मात् संस्कारशास्त्रेऽस्मिन्[10] ॥ ३२ ॥

---

अनुवाद—पाँच सौ धातुओं से युक्त वह पञ्चगुणित पञ्चविध है । सु आदि विभक्तियों तथा अर्थविशेष से युक्त तथा प्रातिपदिकार्थ एवं लिङ्ग से युक्त पाँच प्रकार के होते हैं ॥ ३० ॥

विशेष—भरत के अनुसार ५०० × ५ = २५०० धातुएँ हैं । और वे पाँच वर्गों में विभाजित हैं । भट्टाजिदीक्षित ने सिद्धान्तकौमुदी में लगभग २१०० धातुओं का उल्लेख किया है और उन्हें दस गणों में विभाजित किया है ॥ ३० ॥

अनुवाद पाठ्य में नाना प्रकार अर्थ विशेष के आश्रयीभूत क्रिया को आख्यात समझना चाहिए । वह आख्यात नाम ( संज्ञा शब्द, प्रातिपदिक ) के साथ वचन ( एकवचन, द्विवचन, बहुवचन ) तथा पुरुष ( उत्तम, मध्यम, प्रथम पुरुष ) में विभक्त है ॥ ३१ ॥

अनुवाद—इस व्याकरण शास्त्र में जो अपने अर्थों के द्वारा प्रातिपदिक अर्थ से युक्त धातु के अर्थ को विशिष्ट बना देते हैं वे उपसर्ग कहलाते हैं ॥ ३२ ॥

---

१. ख ग. पुस्तकयोः श्लोकार्धोऽयं न वर्तते ।
२. अयं श्लोकः कासुचिन्मातृकासु नोपलभ्यते ।
३ क. (ड.) विभूषिता न्यासाः ।
४. ख. ग. प्रातिपादिकार्थलिङ्गयुक्तं । ५ क-ड. पाठ्यमिदं ।
६. क नानार्थविशेषम् । क-द नामाश्रयविशेषम् । क-प. नानार्थाश्रयविशेष ।
७ श्लोकार्धोऽये न दृश्यते ।
८. क. प्रातिपदिकार्थयुक्त्या ।
९. क. ये स्वार्थे । १० क. संस्कारतस्तस्मिन् ।

प्रातिपदिकार्थयोगाद्धातुच्छन्दोनिरुक्तयुक्त्या  च ।
यस्मान्निपतन्ति  पदे  तस्मात्प्रोक्ता  निपातास्तु ॥ ३३ ॥

---

धात्वर्थानुपसृजन्ति उपरागेण अन्यादृशान् कुर्वन्ति तेनोपकारेण प्रादिपादिकार्थस्य युक्तसम्बन्धेन प्रकरीतोति। हि शब्दः प्रकर्षे। प्रातिपदिकार्थोपरागेण वा धात्वर्थं विचित्रं करोति। यद्वा तु स्वार्थैः धात्वर्थानुपसृजन्ति। अतः उपसर्जनात् प्रातिपदिकार्थं च युक्ता उपसर्गाः यथा प्राचार्यः प्रान्तेवासी ॥ ३२ ॥

---

**अभिनव**—धात्वर्थ का उपसृजन करते हैं, उपराग से अन्य के सदृश करते हैं, उस उपकार से प्रातिपदिकार्थ को उक्त सम्बन्ध से प्रकृष्ट करते है। यहाँ हि शब्द का अर्थ प्रकृष्ट है। प्रातिपदिकार्थ के उपराग से धात्वर्थ को विचित्र बनाते हैं। अथवा अर्थ से धातु के अर्थ को उपसृष्ट विशिष्ट करते हैं। अतः उपसर्जन करने के कारण प्रातिपदिकार्थ भो उपसर्ग युक्त होते हैं। जैसे—'प्राचार्य' में तथा प्रान्तेवासी में उपसर्ग है ॥ ३२ ॥

**विशेष**—धातु [क्रिया] के साथ उपसर्ग लगाने से तीन प्रकार के अर्थ को द्योतित करते हैं—१. कोई उपसर्ग धातु के अर्थ को बाधित ( नष्ट) कर देता है। जैसे जि (जय) धातु का अर्थ जीतना है किन्तु परा उपसर्ग लगने पराजय अर्थ हो जाता है। कुछ उपसर्ग धातु के अर्थ का ही अनुमरण करते हैं। जैसे—जय का अर्थ जीतना है वि उपसर्ग लगाने से वही (विजय) अर्थ द्योतित होता है। कुछ उपसर्ग धात्वर्थ को बिशिष्ट बनाते हैं। जैसे—

धात्वर्थं बाधते कश्चित् कश्चित् तमनुवर्तते।
तमेव  विशिनष्ट्यन्य  उपसर्गगतिस्त्रिधा ॥

**अनुवाद**—प्रातिपदिकार्थ के योग से धातु, छन्द, निरुक्त और युक्ति से पद में जो निपतन करते हैं, इसलिए वे निपात कहे जाते हैं ॥ ३४ ॥

[1]प्रत्ययविभागजनिताः प्रकर्षसंयोगसत्त्ववचनैश्च ।
[2]यस्मात्पूरयतेऽर्थान् प्रत्यय उक्तस्ततस्तस्मात् ।। ३४ ।।
लोके प्रकृतिप्रत्ययविभागसंयोगसत्त्ववचनैश्च[3] ।
तांस्तात् पूरयतेऽर्थास्तेषु यत्तद्धितस्तस्मात् ।। ३५ ।।

---

प्रातिपदिकार्थयोगात् वृद्धश्च वटुश्च, धातुयुक्त्या पचति पठति च पाकपाठयोरेव हि समुच्चयार्थकौ चशब्दौ युक्तौ। अयुक्त्याश्रयात्तु पादपूरणार्थमुच्यते। यत्र द्योतनेन विना न मण्डना, द्योतने च सति वाक्यमलंकृतं भवति। तद्यथा— "मिलति न खलु यस्या" इति खलुशब्दः प्रयासस्याकृतार्थत्वं द्योतयति। तच्च येनापि विना स्फुटमेव वाक्यार्थत एव लाभात्। "अहरहरनुरागात्" इति निर्भज्य वचनं द्योतितस्यापि स्फुटीकरणम्, तद्युक्त्या। "अहो बतासि स्पृहणीयवीर्यः" इत्यत्र प्रातिपदिकार्थानेतैरथैरुपनिपतितैर्ज्ञापयति ।। ३३ ।।

---

**अभिनव**—प्रातिपदिकार्थ के योग से 'वृद्धश्च बटुश्च' अर्थात् वृद्ध और बटु का धातु के साथ योग होने पर 'पचति' और 'पठति' में पकाना और पढ़ना अर्थ में 'च' शब्द समुच्चय अर्थ को युक्त करता है और अयुक्ति के आश्रय से तु केवल पादपूरण के लिए होता है अर्थात् जहाँ युक्ति का आश्रय नहीं है वहाँ 'च' शब्द पादपूर्ति के लिए होता है। जहाँ द्योतन (अर्थप्रकाशन) के विना कोई मण्डना (शोभा) नहीं हैं और द्योतन होने पर वाक्य अलंकृत हो जाता है। जैसे— 'मिलति न खलु यस्याः' इसमें 'खलु' शब्द प्रयास के अकृतार्थ को द्योतित करता है और वह खलु के विना भी वाक्यार्थ से ही स्पष्ट मिल जाता है। 'अहरहरनुरागात्' यहाँ पर द्योतित का भी स्फुटीकरण किया है। यहाँ प्रातिपदिक और धातु से युक्ति है। 'अहो बतासि स्पृहणीयशोभः' में अहो और बत शब्द प्रातिपदिकाथ को द्योतित करते हैं।

**अनुवाद**—जो प्रकर्ष, संयोग एवं सत्त्व के कथन से प्रत्यय के विभाग से जनित प्रत्यय द्वारा अर्थ को पूरित करते हैं। इस लिए वे प्रत्यय कहे जाते हैं ।। ३४ ।।

**अनुवाद**—लोक में प्रकृति और प्रत्यय के विभाग एवं संयोग तथा सत्त्व के कथन के द्वारा उन-उन अर्थों का पूरण करते हैं, इसलिए वे तद्धित कहे जाते हैं ।। ३५ ।।

---

१. क. (टि०) अयं श्लोकः केषुचित् पुस्तकेषु नोपलभ्यते ।
२. क-प. तांस्तान् । ३. क. सत्त्ववचनेषु ।

एकस्य बहूनां वा धातोर्लिङ्गस्य वा पदानां वा ।
[1]विभजन्त्यर्थं यस्मात् विभक्तयस्तेन ताः प्रोक्ताः ॥ ३६ ॥

---

तद्धितः—तस्मै प्रातिपदिकार्थाय हितस्सः प्रातिपदिकार्थं यश्च वा स्वात्मीकुरुते । प्रकृतिप्रत्ययोर्विभागोऽवयवः काव्ये तन्मतं सम्प्रयोगप्रयोजनमैन्द्रेऽभिहितं संयोगः संबन्धः । चान्द्री ज्योत्स्ना । सत्त्वं तद्भावः यथा सूक्तस्य स्वभावः सौक्त्यं वचनं प्रवचनं काठकमादित्यश्रुत्या, तुर्यपञ्चमाध्यायविहिता निर्देक्ष्यन्ते ॥३५॥

एकस्य पदस्य बहूनां वा पदानां समाप्ति प्राप्तानाम् । वाशब्दाद् द्वयोरपि । येनार्थो विभज्यते विभक्त्याख्यः प्रत्ययः, तेषां च पदानां द्वैविध्यं धातोर्वा संबन्धि यदुत्पन्नं लिङ्गस्य वा सम्बन्धि अर्थवल्लिङ्गमिति संज्ञायां अव्युत्पन्नम् । यदि वा लिङ्गस्य संबन्धिन्यो विभक्तयः प्रतिपादिकात् सुपः, धातोस्तिङः ॥ ३६ ॥

---

**अभिनव**—'तस्मै हितः तद्धितः' अर्थात् उसके प्रातिपदिकार्थ के हित के लिए जो प्रत्यय है, वे 'तद्धित' हैं । भाव यह है कि प्रातिपदिकार्थ (नाम) शब्दों से जो प्रत्यय होते हैं वे 'तद्धित' प्रत्यय कहलाते हैं । प्रातिपदिकार्थ का जा आत्मसात् कर लेता है वह तद्धित है । प्रकृति और प्रत्यय का विभाग (अवयव) काव्य में और प्रकृति-प्रत्यय के संयोग का प्रयोजन ऐन्द्र व्याकरण में बताया गया है । यहाँ संयोग का अर्थ सम्बन्ध है, जैसे चन्द्र से सम्बन्धित चान्द्री ज्योत्स्ना । सत्त्व का अर्थ सत् का भाव है, सूक्त का भाव सौक्त्य है । कठ का वचन (कठ में प्रोक्त) काठक है, इत्यादि युक्ति से जैसा चतुर्थ पञ्चम अध्याय में निर्देश करेंगे ॥ ३५ ॥

**अनुवाद**—एक या अनेक धातु के लिङ्ग अथवा पदों के अर्थों का विभाजन करते हैं, इसलिए वह विभक्ति कही जाती हैं ॥ ३६ ॥

**अभिनव**—एक पद अथवा वाक्य के समाप्ति पर्यन्त अनेक पदों के । 'वा' पद से दोनों का ग्रहण होता है । जिससे अर्थ का विभाग होता है वह प्रत्यय विभक्ति है । वे पद (विभक्त्यन्त पद) दो प्रकार के होते हैं—एक धातु से उत्पन्न होने वाला तत्सम्बन्धी व्युत्पन्न पद और लिङ्ग से सम्बन्धित अर्थवान् शब्द । लिङ्ग शब्द संज्ञा में अव्युत्पन्न हैं । लिङ्ग से सम्बन्धित विभक्तियाँ सुप् आदि हैं और धातु से सम्बन्धित विभक्तियाँ तिप् आदि हैं । सुबन्त और तिङन्त को पद कहते हैं ॥ ३६ ॥

---

१. क. यस्माद्विभजन्त्यर्थान् विभक्तयः कीर्तितास्तस्मात् ।

[1]विशिष्टास्तु स्वरा यत्र व्यञ्जनं वापि योगतः ।
सन्धीयते पदे यस्मात्तस्मात्सन्धिः प्रकीर्तितः ॥ ३७ ॥
वर्णपदक्रमसिद्धः[2] पदैकयोगाच्च[3] वर्णयोगाच्च ।
सन्धीयते च यस्मात्तस्मात् सन्धिः समुद्दिष्टः[4] ॥ ३८ ॥
लुप्तविभक्तिर्नाम्नामेकार्थं संहरत्समासोऽपि ।
तत्पुरुषादिसंज्ञैर्निर्दिष्टः षड्विधो विप्राः[5] ॥ ३९ ॥
एभिः शब्दविधानैर्विस्तारव्यञ्जनार्थसंयुक्तैः[6] ।
पदबन्धाः कर्तव्या निबद्धबन्धास्तु[7] चूर्णा वा ॥ ४० ॥

---

पद इत्येकपदे नित्या संहितेत्याह ॥ ३७ ॥

---

अनुवाद--जहाँ पर विशिष्ट स्वर अथवा व्यञ्जन का योग होने के कारण वर्णों का सन्धान होता है, उसे 'सन्धि' कहते हैं ॥ ३७ ॥

अभिनव—पद अर्थात् एक पद में संहिता ( सन्धि ) नित्य होती है ॥ ३७ ॥

विशेष—सन्धि के विषय में नियम है—

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥

अनुवाद--वर्ण एवं पदों के योग से वर्ण एवं पदों का सन्धान होने के कारण उसे सन्धि कहते हैं ॥ ३८ ॥

अनुवाद--नाम ( प्रातिपदिक ) शब्दों के विभक्तियों का लोप करके संक्षेप में एकार्थक पद को प्रस्तुत करता है । हे विप्रो ! तत्पुरुष आदि नामों से निर्दिष्ट वह एकार्थीभाव रुप समास छः प्रकार का होता है ॥ ३९ ॥

अनुवाद--इन विस्तृत व्यञ्जन तथा अर्थों से युक्त शब्दविधान ( व्याकरण शास्त्र ) के द्वारा पदबन्ध काव्य की रचना करनी चाहिए अथवा चूर्ण आदि गद्य की रचना करनी चाहिए ॥ ४० ॥

---

१. ख. ग. पुस्तकयोरयं श्लोको नास्ति ।
२. क. (टि०) वर्णक्रमसांसिद्धः । वर्णक्रमसम्बन्धः ।
३. क. (टि०) पदैकयोगान्यः । पदैकयोगोऽन्यः ।
४. क तस्मादुपदिश्यते सन्धिः ।
५. ख. ग षड्विधः सोऽपि ।
६ ख. ग. विस्तारव्यञ्जनात्वसंयुक्तैः ।
७ ख. ग. वृत्तनिबद्धास्तु चूर्णं वा ।

[1]विभक्त्यन्तं पदं ज्ञेयं निबद्धं चूर्णमेव च।
तत्र चूर्णपदस्येह सन्निबोधत[2] लक्षणम् ॥ ४१ ॥
[3]अनिबद्धपदं छन्दोविधानानियताक्षरम्।
[4]अर्थापेक्ष्यक्षरस्यूतं ज्ञेयं चूर्णपदं बुधैः ॥ ४२ ॥

---

निबद्धो भाविछन्दोविधिना बद्धः संघट्टनायुतः। पदबन्धा इत्युक्तम् ॥ ४० ॥

पदं निरूपयति तत्रेति परिमितवक्तव्यत्वादित्यत्राशयः ॥ ४१ ॥

च्छन्दोनियताक्षरम्। अक्षरसंख्यानियमः अक्षरनियमो गुरुलघुनिवेशनियमः (संख्यानियमः एकाक्षरः पादो द्व्यक्षरः पाद इत्यादिः) एतद्विहीनं चूर्णपदम्। अर्थः शृङ्गारवीरादिस्तदपेक्ष्यक्षराणि परमितानि भूयांसि वा स्यूतानि यत्रेति असमास-संघट्टनात्मकमुक्तमिति। इयं तु केवलं पठनकर्मत्वाद् गद्यमित्युच्यते ॥ ४२ ॥

---

**अभिनव**—निबद्ध का अर्थ है छन्दोबद्ध रचना, (संघटना) पदों का बन्ध पहिले बताया जा चुका है ॥ ४० ॥

**अनुवाद—विभक्त्यन्त अर्थात् सुबन्त-तिङन्त शब्दों को पद कहते हैं। वह दो प्रकार का होता है--निबद्ध और चूर्णपद। उनमें चूर्णपद के लक्षण को कहता हूँ, उसे समझिये ॥ ४१ ॥**

**अभिनव**—पद का निरूपण करते हैं तत्रेति। परमित वक्तव्य यह आशय है ॥ ४१ ॥

**अनुवाद—छन्दोविधान के अनुसार पद निबद्ध न हो अर्थात् छन्दोविधान के अनुसार नियत अक्षरों के नियमन से रहित अर्थ की अपेक्षा करने वाले अक्षरों से अनुस्यूत पदों को विद्वानों को चूर्णपद समझना चाहिए ॥ ४२ ॥**

**अभिनव**—छन्द नियत अक्षरों वाला होता है। अक्षरों की संख्या का नियम होना अर्थात् गुरु, लघु अक्षरों के निवेश का नियम से रहित चूर्णपद होता है। अर्थ का भाव है शृङ्गार, वीर आदि उसकी अपेक्षा करने वाले अल्प (थोड़े) अथवा बहुत अक्षर जहाँ स्यूत हों, निबद्ध हों, वहाँ समासरहित संघटनात्मक पद चूर्ण है। यह तो केवल पठन का कर्म होने से गद्य कहलाता है ॥ ४२ ॥

---

१. ख. ग. विभज्यैकं पदं ज्ञेयं निबन्धं चूर्णमेव च।
२. ख. ग. बहिर्बोधत। क. संबिबोधत।
३. क. अनिबद्धपदं छन्दस्तथा चानियताक्षरम्।
ख. ग. अनिबद्धं पदवृन्दं तथा चानियताक्षरम्।
४. ख. ग. अर्थापेक्षाक्षरयुतं।

निबद्धाक्षरसंयुक्तं यतिच्छेदसमन्वितम्[1] ।
निबद्धं तु पदं ज्ञेयं प्रमाणनियतात्मकम्[2] ॥ ४३ ॥
एवं नानार्थसंयुक्तैः [3]पदैर्वर्णविभूषितैः ।
चतुर्भिस्तु [4]भवेद्युक्तं छान्दोवृताभिधानवत्[5] ॥ ४४ ॥

---

यतिर्विरामः । ( छेदस्तत्कृतः पदविभागः ) पादसंख्यया सामान्यलक्षणमाह—प्रमाणेन श्रोत्रेन्द्रियेण नियत आत्मा यत्र श्रव्यमित्यर्थः ॥ ४३ ॥

अथ छन्दोलक्षणं कर्त्तुं तस्य स्वरूपं तावदाह—एवमित्यादि ।

वर्णा गुरुत्वलघुत्वाद्यवच्छिन्नाः । विविधैर्भूषणैः सालंकारैः पादैश्चतुभिरिति संबन्धः । इदं तत्पद्यपादेषु भवति गद्यमिति निगदनीयत्वेऽपि विशेषसंज्ञया व्यपदेशः ॥ ४४ ॥

---

**अनुवाद—निबद्ध अक्षरों से युक्त, पदच्छेद से समन्वित नियत अक्षरों के प्रमाण से युक्त निबद्ध पद समझना चाहिए ॥ ४३ ॥**

**अभिनव**—यति का अर्थ विराम है और छेद का अर्थ यतिकृत पद विभाग है । पाद की संख्या के अनुसार उसका सामान्य लक्षण कहते हैं । प्रमाण से अर्थात् श्रोत्रेन्द्रिय के द्वारा नियत है स्वरूप जिसमें उसे निबद्ध पद कहते हैं अर्थात् श्रव्य हैं ॥ ४३ ॥

**अभिनव**—अब छन्दों का लक्षण बताने के लिए उसके स्वरूप को कहते हैं—एवमित्यादि ।

**अनुवाद—इस प्रकार नाना प्रकार के अर्थों से युक्त तथा वर्णों के विभूषित चार पादों से युक्त छन्द होता है उसे वृत्त भी कहते हैं ॥ ४४ ॥**

**अभिनव**—वर्ण का अभिप्राय है गुरुत्व और लघुत्व से युक्त, अनेक प्रकार के अलङ्कारों से अलंकृत, चार पदों से युक्त पद होता है । वह पद्य पादों में रचित होता है । पद्य और गद्य दोनों उचारणीय होने से इसे गद्य इस बिशेष संज्ञा से व्यवहृत किया जाता है ॥ ४४ ॥

---

१. ख. ग. पदच्छेदसमन्वितम् ।
२. ख. ग. प्रमाणनियताक्षरम् ।
३. क. पादै। ।  ४. ख. ग. भवेद्युक्तं ।
५. क-भ. छदन्दोवृत्तसमाश्रयम् । क-न. छन्दोवृत्यभिधानवत् ।

षड्विंशतिः [1]स्मृतान्येभिः पादैश्छन्दांसि संख्यया।
समञ्चार्धसमञ्चैव तथा विषममेव च ॥ ४५ ॥

छन्दोयुक्तं समासेन [2]त्रिविधं वृत्तमिष्यते।
नानावृत्तिविनिष्पन्ना शब्दस्यैषा तनूस्स्मृता ॥ ४६ ॥

छन्दोहीनो न शब्दोऽस्ति न च्छन्दश्शब्दवर्जितम्।
[3]तस्मात्तूभयसंयोगो नाट्यस्योद्योतकः स्मृतः[4] ॥ ४७ ॥

---

षड्विंशतिरिति तावत्परिमाणान्येकाक्षरात्प्रभृति षड्विंशत्यक्षराणि यावदुक्तादीन्युत्कृत्यन्तानि छन्दांसीत्यर्थः। पादचतुष्टये तुल्यलक्षणं समं, अतुल्यलक्षणं विषमम् अर्धसमं प्रथमतृतीययोर्द्वितीयचतुर्थयोः। संज्ञाभिश्छन्दोभेदा आश्रिता ॥४५॥

---

**अनुवाद**—इस प्रकार पादों की संख्या के अनुसार छन्द २६ प्रकार के कहे गये हैं। सम, अर्धसम और विषम इसके तीन भेद हैं॥ ४५ ॥

**अभिनव**—उतने परिमाण वाले एकाक्षर से लेकर छब्बीस अक्षरों तक उत्का से लेकर उत्कृति पर्यन्त छन्द है। उनमें चारों पादों में समान लक्षण ( समान अक्षर ) होने पर 'सम' छन्द होता है और विषम अक्षर होने पर 'विषम' छन्द होता है तथा प्रथम एवं तृतीय अथवा द्वितोय एवं चतुर्थ पादों में सम अक्षर हो तो अर्धसम होता है ॥ ४५ ॥

**अनुवाद**—इस प्रकार छन्दों से युक्त वृत्त संक्षेप में तीन प्रकार का होता है। नाना प्रकार के वृत्तों से निष्पन्न इसे शब्द का तनू ( शरीर ) कहा गया है ॥ ४६ ॥

**अनुवाद**—छन्दों से रहित कोई शब्द नहीं होता और न शब्दों से रहित कोई छन्द होता है। इसलिए दोनों का संयोग नाट्य का उद्योतक माना गया है ॥ ४७ ॥

---

१. ख. ग. स्मृतानीह।

२. ख. ग. निबद्धं।

३. क. एवं तूभयसंयोगो। ख. ग. तस्मात्तूभयसंयुक्ते।

४. ख. ग. नाट्यस्योद्योतके स्मृते।

[1]एकाक्षरं भवेदुक्तमत्युक्तं द्व्यक्षरं भवेत् ।
[2]मध्यं त्र्यक्षरमित्याहुः प्रतिष्ठा चतुरक्षरा ॥ ४८ ॥

सुप्रतिष्ठा भवेत् पञ्च गायत्रो षड् भवेदिह[3] ।
[4]सप्ताक्षरा भवेदुष्णिगष्टाक्षरानुष्टुबुच्यते[5] ॥ ४९ ॥

नवाक्षरा तु बृहती पङ्क्तिश्चैव दशाक्षरा ।
एकादशाक्षरा त्रिष्टुब् जगती द्वादशाक्षरा ॥ ५० ॥

त्रयोदशाऽतिजगती शक्वरी तु चतुर्दशा ।
[6]अतिशक्वरी पञ्चदशा षोडशाष्टिः प्रकीर्तिता ॥ ५१ ॥

---

अनुवाद—एक अक्षर वाले छन्द को उक्ता, दो अक्षर वाले छन्द को अत्युक्ता, तीन अक्षर वाले छन्द को मध्या और चार अक्षर वाले छन्द को प्रतिष्ठा कहते हैं ॥ ४८ ॥

अनुवाद—पांच अक्षरों वाला प्रतिष्ठा, छः अक्षरों वाला गायत्री, सात अक्षरों वाला उष्णिक् और आठ अक्षरों वाला छन्द अनुष्टुप् कहा जाता है ॥ ४९ ॥

अनुवाद—नव ( नौ ) अक्षरों वाला छन्द बृहती, दश अक्षरों वाला पंक्ति, ग्यारह अक्षरों वाला 'त्रिष्टुप्' और बारह वाला छन्द 'जगती' कहलाता है ॥ ५० ॥

अनुवाद—तेरह अक्षरों वाले छन्द को 'अतिजगती' चौदह अक्षरों वाले छन्द को 'शङ्करी', पन्द्रह अक्षरों वाले छन्द को 'अतिशक्वरी' और सोलह अक्षरों के छन्द को 'अष्टि' कहते हैं ॥ ५१ ॥

---

१. क. एकाक्षरा भवेदुक्ता ह्यत्युक्ता द्व्यक्षरा भवेत् ।
मध्या तु त्र्यक्षरेत्याहुः प्रतिष्ठा चतुरक्षरा ।
२. क. म. मध्यम त्र्यक्षरं प्रोक्तं ।
३. क-म. तथैव च ।
४. क-म. उष्णिक् सप्ताक्षरकृतात्वष्टाऽनुष्टुप् प्रकीर्त्तिता ।
५. क. इष्यते ।
६. क. दशपञ्चातिशक्वर्याः अाष्टः स्यात् षोडशाक्षरा ।

[1]अत्यष्टिः स्यात्सप्तदशा धृतिरष्टादशाक्षरा ।
[2]एकोनविंशतिर्धृतिः कृतिर्विंशतिरेव च ॥ ५२ ॥

[3]प्रकृतिश्चैकविंशत्या द्वाविंशत्याकृतिस्तथा ।
विकृतिः स्यात् त्रयोविंशा चतुर्विशा च संकृतिः ॥ ५३ ॥

पञ्चविंशत्यतिकृतिः षड्विंशत्युत्कृतिर्भवेत् ।
अतोऽधिकाक्षरं छन्दो[4] मालावृत्तं तदिष्यते ॥ ५४ ॥

[5]छन्दसां तु तथा ह्येते भेदाः प्रस्तारयोगतः ।
[6]असंख्येप्रमाणानि वृत्तान्याहुरतो बुधाः ॥ ५५ ॥

---

अनुवाद—सत्तरह अक्षरों वाला वृत्त 'अत्यष्टि', अठारह अक्षरों वाला 'धृति' उन्नीस अक्षरों वाला 'अतिधृति' और बीस अक्षरों वाला छन्द 'कृति' कहलाता है ॥ ५२ ॥

अनुवाद—इक्कीस अक्षरों वाले छन्द को 'प्रकृति', बाइस अक्षरों वाले छन्द को 'आकृति' तेइस अक्षरों वाले छन्द को 'विकृति' और चौबीस अक्षरों वाले छन्द को 'संकृति' कहते हैं ॥ ५३ ॥

अनुवाद—पचीस अक्षरों का 'अभिकृति' और छब्बीस अक्षरों का 'उत्कृति' वृत्त कहलाता है, इससे अधिक अक्षरों के पाद वाले छन्द को 'मालावृत्त' कहलाते हैं ॥ ५४ ॥

अनुवाद—छन्दों के इतने भेद प्रस्तार के योग से बनते है । इसलिए बुधजन वृत्तो के प्रमाण ( संख्या ) असंख्येय मानते हैं ॥ ५५ ॥

---

१. क. तथा सप्तदशात्यष्टिः ।
२. क. एकोनविंशातिधृतिः ।
३. क-ब. प्रकृतिस्त्वेकविंशतिः ।
४. ख. ग. यत्तु । क-ब. यत्स्यात् ।
५. क-उ. छन्दसां च भवेदेषां भेदो नैकविधः पृथक् ।
६. क-च. असंख्येयप्रमाणानि परिमाणा वृत्तसंख्या समाश्रिता ।

गायत्रीप्रभृतित्वेषां प्रमाणं संविधीयते[1] ।
प्रयोगजानि सर्वाणि प्रायशो न भवन्ति हि ॥ ५६ ॥
[2]वृत्तानि च चतुष्षष्टिर्गायत्र्यां कीर्तितानि तु । (६४)
शतं विंशतिरष्टौ च वृत्तान्युष्णिगथोच्यते ॥ ५७ ॥ (१२८)

---

तथा ह्येते भेदा इत्याह—प्रस्तारयोगत इति। प्रस्तारे योगो युक्तिः तेन तत्र युक्तिर्वक्ष्यते—

"प्रकीर्य सर्वं गुरु, तत्र पूर्वंगुरोरधो लं परिपूर्य तत्त्वम् ।
स्यात्पूर्वंपूर्वं गुरुणेति यावत्सर्वत्र लं प्रस्तरणे तदेव" ॥

एते यथा भेदाः ॥ ५५ ॥

षडक्षराणि गायत्र्यां तत एवारभ्य प्रयोगार्हतेति सूचयति उक्त्यादीनामश्रवत्वात् । तदाह प्रयोगजानीति लक्ष्यतो न स्थितानि, अपि तु वेदवद् दृश्यन्त—इति भावः ॥ ५६ ॥

वृत्तानि च चतुःषष्टिरित्यादिना स्वकण्ठेन संख्यां पठति यावत् ॥ ५७ ॥

---

**अभिनव**—प्रस्तार के योग से छन्दों के इतने भेद होते हैं। प्रस्तार में जो योग युक्ति है उससे इतने भेद होते हैं। उनमें युक्ति को आगे कहेंगे—

"प्रथम सभी वर्ण गुरु हो, फिर आदि अक्षर गुरु और उसके नीचे लघु हो, इस प्रकार पूर्व पूर्व को गुरु से पूर्ण करे और तब तक करे जब तक सर्व लघु आ जाय।"

ये प्रस्तार के भेद हैं ॥ ५५ ॥

**अनुवाद—इनमें गायत्री प्रभृति छन्दों के प्रमाण को हम बतलाते हैं, क्योंकि छन्दों के सभी भेद प्रयोग में नहीं आते ॥ ५६ ॥**

**अभिनव**—भरत मुनि षडक्षरा गायत्री से प्रारम्भ करके छन्दों का विवेचन करते हैं, क्योंकि उक्त्यादि पाँच छन्दों के प्रयोग कहीं दिखलाई नहीं देते। अपितु वेद के समान इनका अध्ययन होता है ॥ ५६ ॥

**अनुवाद—गायत्री में ६४ प्रकार के वृत्त होते हैं और उष्णिक् छन्दों में १२८ भेद कहे गये हैं ॥ ५७ ॥**

**अभिनव**—भरत मुनि अपने मुख से संख्या को पढ़ते हैं ॥ ५७ ॥

---

१. क. संप्रवक्ष्यते । २. क. (टि०) वृत्तानां तु चतुष्षष्टिर्गायित्री परिकीर्त्तिता ।

षट्पञ्चाशच्छते द्वे च वृत्तानामप्यनुष्टुभि । (२५६)
शतानि पञ्च वृत्तानां बृहत्यां द्वादशैव च ॥ ५८ ॥ (५१२)
[1]पङ्क्त्यां सहस्रं वृत्तानां चतुर्विशतिरेव च । (१०२४)
[2]त्रैष्टुभे द्वे सहस्रे च चत्वारिंशत्तथाष्ट च ॥ ५९ ॥ (२०४८)

सहस्राण्यपि चत्वारि नवतिश्च षडुत्तरा ।
जगत्या [3]समवर्णानां वृत्तानामिह सर्वशः ॥ ६० ॥ (४०९६)

अष्टौ सहस्राणि शतं द्व्यधिका नवतिः पुनः ।
जगत्यामतिपूर्वायां वृत्तानां परिमाणतः[4] ॥ ६१ ॥ (८१९२)

शतानि त्रीण्यशीतिश्च सहस्राण्यपि षोडश ।
वृत्तानि चैव चत्वारि शक्वर्याः परिसंख्यया ॥ ६२ ॥ (१६३८४)

---

अनुवाद—अनुष्टुप् छन्द के दो सौ छप्पन (२५६) भेद और बृहती के पांच सौ बारह ( ५१२ ) भेद होते हैं ॥ ५८ ॥

अनुवाद—पंक्ति छन्द के एक हजार चौबीस ( १०२४ ) भेद और त्रिष्टुप् छन्द के दो हजार अड़ताली (२०४८) भेद होते हैं ॥ ५९ ॥

अनुवाद—सम वर्ण जगती छन्द के चार हजार छानवे ( ४०९६ ) भेद होते हैं ॥ ६० ॥

अनुवाद—अतिजगती नामक छन्द से आठ हजार एक सौ बानवे ( ८१९२ ) भेद होते हैं ॥ ६१ ॥

अनुवाद—शक्वरी नामक वृत्त को संख्या सोलह हजार तीन सौ चौरासी ( १६३८४ ) होती हैं ॥ ६२ ॥

---

१. क. पंक्ते ।
२. क. त्रैष्टुभो द्विसहस्रे ।
३. क. (टि०) समपादानां ।
४. क. वृत्तानां सर्वशो भवेत् ।

[1]द्वात्रिंशच्च सहस्राणि सप्त चैव शतानि च ।
[2]अष्टौ षष्टिश्च वृत्तानि ह्याश्रयन्त्यतिशक्वरीम् ॥ ६३ ॥ (३२७६८)
पञ्चषष्टिसहस्राणि सहस्रार्धञ्च संख्यया ।
[3]षट्त्रिंशच्चैव वृत्तानि ह्यष्टयां निगदितानि च ॥ ६४ ॥ (६५५३६)
एकत्रिंशत्सहस्राणि वृत्तानाञ्च द्विसप्ततिः ।
तथा शतसहस्रञ्च छन्दांस्यत्यष्टिसंज्ञिते ॥ ६५ ॥ (१३१०७२)
धृत्यामपि हि पिण्डेन वृत्तान्याकल्पितानि तु ।
तज्ज्ञैः शतसहस्रे द्वे शतमेकं तथैव च ॥ ६६ ॥
द्विषष्टिश्च सहस्राणि चत्वारिंशच्च योगतः[4] ।
चत्वारि चैव वृत्तानि समसंख्याश्रयाणि तु ॥ ६७ ॥ (२६२१४४)
अतिधृत्यां सहस्राणि चतुर्विशतिरेव च ।
तथा शतसहस्राणि पञ्च वृत्तशतद्वयम् ॥ ६८ ॥
अष्टाशीतिश्च वृत्तानि वृत्तज्ञैः कथितानि च। (५२४२८८)

---

अनुवाद—अतिशक्वरी छन्द के बत्तीस हजार सात सौ अड़सठ ( ३२७६८ ) भेद होते हैं ॥ ६३ ॥

अनुवाद—अष्टि नामक छन्द के पैंसठ हजार पांच सौ छत्तीस ( ६५५३६ ) भेद होते हैं ॥ ६४ ॥

अनुवाद—अत्यष्टि छन्द एक लाख इकतीस हजार बहत्तर ( १३१०७२ ) प्रकार का होता है ॥ ६५ ॥

अनुवाद—धृति नामक वृत्त के दो लाख बासठ हजार एक सौ चौवालीस ( २६२१४४ ) भेद होते हैं ॥ ६६-६७ ॥

---

१. क. द्वात्रिंशत्तु ।
२. क-म. अष्टो षष्टिश्च वृत्तानां संश्रयन्त्यतिशक्वरीम् ।
३. षड्विंशच्चैव वृत्तानि यथाष्ट्यां गदितानि तु ।
४. क. चत्वारिंशत् प्रयोगतः ।

कृतौ शतसहस्राणि दश प्रोक्तानि संख्यया ॥ ६९ ॥
चत्वारिंशत्तथा चाष्टौ सहस्राणि शतानि च।
पञ्चषट्सप्ततिश्चैव वृत्तानां परिमाणतः[1] ॥ ७० ॥ (१०४८५७६)
तथा शतसहस्राणां प्रकृतौ विंशतिर्भवेत् ।
सप्त वै गदितास्त्वत्र नवतिश्चैव संख्यया ॥ ७१ ॥
सहस्राणि शतं चैकं द्विपञ्चाशत्तथैव च ।
वृत्तानि परिमाणेन[2] वृत्तज्ञैर्गदितानि तु ॥ ७२ ॥ (२०९७१५२)
[3]चत्वारिंशत्तथैकश्च लक्षाणामथ संख्यया ।
तथा चेह सहस्राणि नवतिश्चतुरुत्तरा ॥ ७३ ॥
शतत्रयं समाख्यातं ह्याकृत्यां चतुरुत्तरम् । (४१९४३०४)

---

अनुवाद—अतिधृति नामक छन्द पांच लाख चौबोस हजार दो सौ अठासी (५२४२८८) प्रकार का होता है ॥ ६८-६९ ॥

अनुवाद—कृति छन्द दस लाख अड़तालीस हजार पांच सौ छिहत्तर (१०४८५७६) प्रकार का होता है ॥ ६९-७० ॥

अनुवाद—प्रकृति नामक छन्द के बीस लाख सत्तानवे हजार एक सौ बावन (२०९७१५२) भेद होते है ॥ ७१-७२ ॥

अनुवाद—आकृति नामक छन्द एकतालोस लाख चौरानबे हजार तीन सौ चार (४१९४३०४) प्रकार का होता है ॥ ७३-७४ ॥

---

१. क. (टि०) प्रतिभागशः ।

२. क. (टि०) प्रविभागेन ।

३. क-म. बुधैः शतसहस्राणि चत्वारिंशत्तथापरम् ।
नवतिश्चैव चत्वारि सहस्राणि शतत्रयम् ।
चत्वारि चैव वृत्तानि कथितान्याकृतौ बुधैः ॥

[1]ज्ञेया शतसहस्राणामशीतिस्त्र्यधिका बुधैः ॥ ७४ ॥
अष्टाशीति सहस्राणि वृत्तानां षट्छतानि च।
अष्टौ चैव तु वृत्तानि विकृत्यां गदितानि तु ॥ ७५ ॥ (८३८८६०८)
[2]तथा शतसहस्राणि सप्तषष्टिश्च सप्ततिः।
सप्त चैव सहस्राणि षोडश द्वे शते तथा ॥ ७६ ॥
कोटिश्चैवेह वृत्तानि संकृतौ कथितानि वै। (१६७७७२१६)
[3]कोटित्रयञ्चाभिकृत्यां पञ्चत्रिंशद्भिरन्वितम् ॥ ७७ ॥
पञ्चाशद्भिः सहस्रैश्च चतुर्भिरधिकैस्तथा।
चतुष्टयं शतानाञ्च द्वात्रिंशद्भिः समन्वितम् ॥७८॥ (३३५५४४३२)

अनुवाद—विकृति नामक छन्द के तिरासी लाख अठासी हजार छः सौ चार (८३८८६०४) भेद होते हैं ॥ ७४-७५ ॥

अनुवाद—संकृति नामक छन्द एक करोड़ सड़सठ लाख सतहत्तर हजार दो सौ सोलह (१६७७७२१६) प्रकार का होता है ॥ ७६-७७ ॥

अनुवाद—अभिकृति नामक छन्द के तीन करोड़ पैंतीस लाख चौवन हजार चार सौ बत्तीस (३३५५४४३२) प्रकार होते हैं ॥ ७७-७८ ॥

---

१. क-म. तथा शतसहस्राणामशीतिस्त्रिकसंयुता।
अष्टाशीतिसहस्राणि षडष्टौ च शतानि च ॥
वृत्तानि विकृतौ छन्दस्युद्दिष्टानीह संख्यया ॥

२. क-न. कोटिष्षडधिका नित्यं सप्तसप्ताधिका पुनः।
सप्त चैव सहस्राणि वृत्तानां च शतद्वयम् ॥
षोडशोत्तरमाख्यातं संकृत्यां परिमाणतः ॥

३. क. तथा शतसहस्राणि पञ्चत्रिंशच्च संख्यया।
तिस्रः कोट्यः सहस्राणि चतुष्पञ्चाशदेव च ॥
शतानि चत्वारि तथा द्वात्रिंशत्प्रविभागतः।
वृत्तान्यभिकृतौ चैव छन्दोज्ञैः कथितानि वै ॥

यथा—

अस्मिंस्ते शिरसि तदा कान्ते वैडूर्यस्फटिकसुवर्णाढ्ये।
शोभां स्वां न वहति तां बद्धा सुश्लिष्टा कुवलयमालेयम्[1] ॥ २६ ॥

---

शं भां स्वाम् (स्वभाववर्तने ये भेदाः ?) वैडूर्यच्छायानि यानि दलानि तत्तत्स्फुरत्सुवर्णतुल्यानि वर्णानि तदभ्यन्तरकेसराणि ॥ २६ ॥

---

उदाहरण जैसे—

ऽ ऽऽ ।।।। ऽ ऽ ऽ ऽऽऽ।।।।ऽ ऽऽ
अस्मिंस्ते शिरसि तदा कान्ते वैडूर्यस्फटिकसुवर्णाढ्ये।
शोभां स्वां न वहति तां बद्धा सुश्लिष्टा कुवलयमालेयम् ॥ २६ ॥

"हे कान्ते ! वैदूर्यमणि, स्फटिक एवं सुवर्ण के अलङ्कारों से अलङ्कृत इस तुम्हारे शिर पर गुथी हुई (धारण की हुई) यह कुवलयमाला अपनी शोभा को धारण नहीं करती है ॥ २६ ॥

यहाँ पर प्रत्येक पाद में आदि के तीन अक्षर गुरु और अन्त के तीन अक्षर गुरु तथा मध्य के चार अक्षर लघु है, अतः यहाँ उत्पलमाला कुवलयमाला छन्द कहते हैं ॥ २६ ॥

अभिनव—स्वभाव के वर्त्तने में जितने भेद हैं, उस शोभा को नहीं धारण करते। वैदूर्य मणि के समान कान्ति वाले जो दल हैं उनके सुवर्ण के समान चमकते हुए किंजल्क (केशर) हैं ॥ २६ ॥

विशेष—गायकयाड़ संस्करण में उत्पलमाला या कुवलयमाला का निम्नलिखित लक्षण अधिक दिया गया है—

त्रीण्यादौ यदि हि गुरूणि स्युश्चत्वारो यदि लघवो मध्ये।
पंक्तावन्तर्गतमकारः स्याद्विज्ञेया कुवलयमालाख्या ॥

"यदि पाद के आदि के तीन अक्षर गुरु हों और मध्य के चार अक्षर लघु हो तथा अन्त के तीन अक्षर गुरु हों तो कुवलयमाला 'उत्पलमालिका' नामक पंक्तिच्छन्द होता है।'

इसका उदाहरण ऊपर दिया गया है।

---

१. ख. ग. पुस्तकयोः इत्युदाहरणम् अस्मिंस्ते भ्रमरनिभे कान्ते नानारत्नरचितभूषाढ्ये।
शोभामावहति शुभां मूर्ध्नि प्रोत्फुल्ला कुवलयमालेयम् ॥

द्वितीयं च चतुर्थं च षष्ठमष्टममेव च ।
ह्रस्वं दशाक्षरे पादे यत्र सा शिखिसारिणी[1] ॥ २७ ॥

यथा—

नैव तेऽस्ति सङ्गमो मनुष्यैर्नापि कामभोगचिह्नमन्यत् ।
[2]गर्भिणीव दृश्यसे ह्यनार्ये ! किं मयूरसारिणी त्वमेवम्[3] ॥ २८ ॥

---

मयूरवद् व्याकोचमस्याः मयूरीभिर्वा (सारी) गतिविशेषो भवतीत्याहुः ॥ २८ ॥

---

### १३. शिखिसारिणी ( दशाक्षरा वृत्तिः )

**अनुवाद**—जिस वृत्त के दश अक्षर वाले पाद में द्वितीय, चतुर्थ, षष्ठ एवं अष्टम अक्षर ह्रस्व हो शेष गुरु हो उसे 'शिखिसारिणी' वृत्त कहते हैं ॥ २७ ॥

उदाहरण जैसे—

S I S I S I S I S S S I S I S I S I S S
नैव तेऽस्ति सङ्गमो मनुष्यैर्नापि कामभोगचिह्नमन्यत् ।
गर्भिणीव दृश्यसे ह्यनार्ये ! किं मयूरसारिणी त्वमेवम् ॥ २८ ॥

'हे अनार्ये ! तुम्हारा मनुष्यों से सङ्गम नहीं है और न कामभोग के कोई चिह्न है, किन्तु गर्भिणी के समान दिखाई दे रही हो, क्या तुम मयूरसारिणी ( मयूर के समान आचरण करने वाली ) हो ? ॥ २८ ॥

यहाँ पर पाद में द्वितीय, चतुर्थ, षष्ठ और अष्टम अक्षर लघु है और शेष गुरु हैं, अतः यहाँ 'शिखिसारिणी' या 'मयूसारिणी' छन्द है ।

**अभिनव**—मयूर के समान विकसित ( फैले हुए ) स्वरूप है जिसका अथवा मयूरी की तरह गति विशेष हैं जिसको इसे 'मयूरसारिणी कहते हैं ॥ २८ ॥

---

१. इत परं 'क' पुस्तके शिखिसारिण्या अधोलिखितं लक्षणमधिकं दृश्यते—

जौ त्रिकौ हि पादगौ तु यस्या गौ च संश्रितौ तथा समौ तौ ।
पंक्तियोग सु प्रतिक्षिताङ्गो सा मयूरसारिणीति नाम्ना ॥

२. क. गर्भिणी च जायसे ।        ३. ख. त्वमेव ।

[1]आद्यं चतुर्थमन्त्यं च सप्तमं दशमं तथा ।
गुरूणि त्रैष्टुभे पादे यत्र स्युर्दोधकं तु तत्[2] ॥ २९ ॥

यथा—

[3]प्रस्खलिता प्रपदप्रविचारं मत्तविघूर्णितगात्रविलासम्[4] ।
पश्य विलासिनि ! [5]कुञ्जरमेतं दोधकवृत्तमयं [6]प्रकरोति ॥ ३० ॥

---

मन्दं मन्दं दोधकेन गीयमानं वृत्तं दोधकवृत्तम् ॥ २८ ॥

---

विशेष—गायकवाड़ संस्करण में शिखिसारिणी का निम्नलिखित लक्षण अधिक पाया जाता है—

जौं त्रिकौ हि पादगौ तु यस्य गौं च संश्रितौ तथा समौ स्तौ ।
पंक्तियोग सुप्रतिष्ठिताङ्गी सा मयूरसारिणीति नाम्ना ॥

'जिस छन्द के दशाक्षर पाद में रगण, जगण और रगण तथा अन्त में गुरु हो वह पंक्ति के योग से सुप्रतिष्ठित 'शिखिसारिणी' या 'मयूरसारिणी' नामक वृत्त होता है ।

इसका उदाहरण उपर्युक्त उदाहरण है ।

## १४. दोधक ( त्रिष्टुप् एकादशाक्षरा वृत्ति )

अनुवाद—जिस वृत्त के एकादशाक्षर पाद में प्रथम, चतुर्थ, सप्तम, दशम और अन्तिम ( ग्यारहवाँ ) वर्ण गुरु हो वह 'दोधक' छन्द कहलाता है ॥ २९ ॥

अभिनव—जो वृत्त दूध दुहने को तरह मन्द-मन्द हो गाया जाता है वह दोधक वृत्त कहलाता है ॥ ३० ॥

---

१ ख. ग. प्रथमं च चतुर्थं च सप्तमं दशमं गुरु ।
अन्त्यं च त्रैष्टुभे पादे यत्र स्याद् दोधकं तु तत् ॥

२. इतः परं 'क' पुस्तकेऽयोलिखितं दोधकलक्षणमधिकं दृश्यते—

भौ तु भगाविति यस्य गणाः स्युः स्याच्च यतिस्त्रिचतुर्भिरथोक्ता ।
त्रैष्टुभमेव तु तत्खलु नाम्ना दोधकवृत्तमिति प्रवदन्ति ॥

३. क. प्रस्खलमानगति प्रविचारो ।

४. ख. गात्रविनामम् । ५. कुञ्जर एषो ।

६. ख. दोधकवृत्तगतिं प्रकरोति ।

[1]आदौ द्वौ पञ्चमं चैवाप्यष्टमं नैधनं तथा[2] ।
गुरूण्येकादशे पादे यत्र तन्मोटकं यथा ॥ ३१ ॥

उदाहरण जैसे—

S I I S I I S I I S S
प्रस्खलिताग्रपदप्रविचारं
मत्तविघूर्णितगात्रविलासम् ।
पश्य, विलासिनि ! कुञ्जरमेतं
दोधकवृत्तमयं प्रकरोति ॥ ३० ॥

"अरी विलासिनि ! इस हाथी को देखो, जो लड़खड़ाते हुए पैरों के अग्रभाग से विचरण कर रहा है और मतवाले की तरह झूमते हुए शरीर से विलास कर रहा है, छोटे बछड़े जैसी हरकतें कर रहा है।"

यहाँ पर प्रत्येक पाद में प्रथम, चतुर्थ, सप्तम, दशम और अन्तिम अक्षर गुरु है और शेष लघु हैं। अतः यह 'दोधक' वृत्त का उदाहरण है ॥३० ॥

विशेष—गायकगण संस्करण में दोधक वृत्त का लक्षण निम्नलिखित रूप में अधिक पाया जाता है—

भौ तु भगाविति यस्य गणाः स्युः
स्याच्च यतिस्त्रिचतुर्भिरथास्मिन् ।
त्रैष्टुभमेव हि तत्खलु नाम्ना
दोधकवृत्तमिति प्रवदन्ति ॥ ३० ॥

"जिस एकादशाक्षर पादवाले छन्द के प्रत्येक पाद में भगण, भगण, भगण और अन्त में दो गुरु हो तथा तीन एवं चार अक्षरों पर यति हो वहाँ 'दोधक' नामक वृत्त होता है। यह त्रिष्टुप् जाति का छन्द है।

इसका उदाहरण ऊपर दिया गया है।

## १५. मोटक वृत्त ( एकादशाक्षरावृत्ति )

**अनुवाद—एकादशाक्षर पाद वाले जिस छन्द के प्रत्येक पाद में आदि के दो अक्षर, पांचवां, आठवाँ एवं अन्तिम अक्षर गुरु हो तथा शेष अक्षर लघु हो, उसे 'मोटक' वृत्त कहते हैं ॥ ३१ ॥**

---

१. क. (भ.) द्वे आद्ये। २. क. गुरु एकादशाक्षरे।

एषोऽम्बुदनिस्वनतुल्यरवः [1]क्षीबः स्खलमानविलम्बगतिः ।
श्रुत्वा [2]घनगर्जितमद्रितटे वृक्षान् [3]प्रतिमोटयति द्विरदः ॥ ३२ ॥
नवमं सप्तमं षष्ठं तृतीयं च भवेल्लघुः[4] ।
[5]एकादशाक्षरे पादे इन्द्रवज्रेति सा यथा[6] ॥ ३३ ॥
त्वं [7]दुर्निरीक्ष्या दुरतिप्रसादा दुःखैकसाध्या [8]कठिनस्वभावा ।
सर्वास्ववस्थासु च कामतन्त्रे योग्यासि किं वा बहुनेन्द्रवज्रा ॥ ३४ ॥

---

एष इति यावन्मुरजघाततुल्यं गर्जितं श्रुत्वा ॥ ३२ ॥

---

उदाहरण जैसे—

S S I I S I I S I I S
एषोऽम्बुदनिस्वनतुल्यरवः
क्षीबः स्खलमानविलम्बगतिः ।
श्रुत्वा घनगर्जितमद्रितटे
वृक्षात् प्रतिमोटयति द्विरदः ॥ ३२ ॥

"यह मेघ के गर्जन के समान ध्वनि करने वाला, मत्त स्खलन एवं मन्द गति वाला हाथी पर्वत के तट पर बादलों के गर्जन को सुनकर वृक्षों को ठोकर दे रहा है।"

यहाँ पर प्रत्येक पाद में आदि के दो अक्षर पञ्चम, अष्टम एवं अन्तिम अक्षर गुरु हैं और शेष अक्षर लघु हैं, अतः यहाँ 'मोटक' छन्द है ॥ ३२ ॥

**अभिनव**—नगाड़े पर आघात हुए के समान गर्जन को सुनकर ॥ ३२ ॥

## १६. इन्द्रवज्रा ( एकादशाक्षरा वृत्ति )

**अनुवाद**—एकादशाक्षर पाद वाले जिस छन्द के प्रत्येक पाद में तृतीय, षष्ठ सप्तम, नवम अक्षर लघु हों, शेष गुरु हों, वह 'इन्द्रवज्रा' छन्द कहलाता है ॥३३॥

---

१. ख. क्षणस्खलमानविलम्बगतिः । २. क. (टि०) घननिस्वन ।
३. क. (टि०) प्रतितोटयते । मोटयते । ४. ख. ग लघुन्यथ ।
५. ख. ग. यत्रैकादेशके ६. क. (टि०) स्मृता ।
७. ख. ग. चन्द्रं निरीक्ष्य दुरितस्वभावा ।
क (भ.) दुष्प्रेक्षणीया विगतप्रसादा दुःखेन साध्या कठिनाभिघाता ।
८. क. (टि०) दुःखेन साध्या कठिनस्वभावा ।

एभिरेव तु संयुक्ता लघुभिस्त्रैष्टुभी यथा ।
उपेन्द्रवज्रा विज्ञेया [1]लघ्वादाविह केवलम् ॥ ३५ ॥

यथा—

[2]प्रिये ! श्रिया वर्णविशेषणेन स्मितेन[3] कान्त्या सुकुमारभावैः ।
अमी गुणा [4]रूपगुणानुरूपा भवन्ति ते किं ? त्वमुपेन्द्रवज्रा[5] ॥३६॥

---

उदाहरण जैसे—

S S I S S I I S I S S
त्वं दुर्निरीक्ष्या दुरतिप्रसादा
दुःखैकसाध्या कठिनैकभावा ।
सर्वास्ववस्थासु च कामतन्त्रे
योग्यासि किं ? वा बहुनेन्द्रवज्रा ॥ ३४ ॥

"हे कामतन्त्रे ! तुम सभी अवस्थाओं में दुर्निरीक्ष्या, कठिनाई से प्रसन्न होने वाली, दुःख से साध्य, और कठोर स्वभाव वाली हो, अतः तुम्हारा इन्द्रवज्रा ( इन्द्र के वज्र की तरह कठोर ) नाम योग्य है, उचित है' ॥ ३४ ॥

प्रस्तुत छन्द का तृतीय, षष्ठ, सप्तम एवं नवम अक्षर लघु है और शेष गुरु हैं अतः यहाँ इन्द्रवज्रा छन्द है ॥ ३४ ॥

## १७. उपेन्द्रवज्रा ( एकादशाक्षरावृत्तिः )

अनुवाद—जिस एकादशाक्षर वाले त्रिष्टुप् जाति के पाद में यदि इन्द्रवज्रा के लक्षण में प्रथम लघु हो जाय अर्थात् प्रथम, तृतीय, षष्ठ, सप्तम, तथा नवम अक्षर लघु हों, शेष गुरु हो तो 'उपेन्द्रवज्रा' छन्द हो जाता है ॥ ३५ ॥

---

१. ग. लघ्वाढ्यमिह ।

२ ख. श्रिया च वर्णेन विशेषणेन । ग. प्रेम्णा श्रिया वर्णविशेषणेन ।

३. क-भ. यथा च कान्त्या सुकुमारयुक्त्या ।

४. ख रूपगणा ।

५. इतोऽग्रे ग्रन्थान्तरेषु ''षष्ठं च नवम'' मेत्यादिश्लोकद्वयमधिकं वर्तते ।

आद्यं तृतीयमन्त्यं च सप्तमं नवमं तथा।
[1]गुरूण्येकादशे पादे यत्र सा तु रथोद्धता ॥ ३७ ॥

---

उपेन्द्रवज्रा अस्या उपमानत्वेन सा तथा। मत्वर्थीय उपेन्द्रवज्रन्तु इन्द्रधनुष उपमितमुपेन्द्रवज्रमित्युपमितसमासः द्विगुप्राप्ते परवल्लिङ्गनिषेधः। स्मितेन कान्त्या च। इन्द्रधनुषोऽपि वर्णवैचित्र्यं भवति ॥ ४५ ॥

---

उदाहरण जैसे—

I S I S S I I S I S S
प्रिये ! श्रिया वर्णविशेषणेन
स्मितेन कान्त्या सुकुमारभावात्।
अमी गुणा रूपगुणानुरूपा
भवन्ति ते किं त्वमुपेन्द्रवज्रा ॥ ३६ ॥

'हे प्रिये ! शोभा ( कान्ति ), वर्ण-विशेष ( गौर वर्ण ), मुस्कुराहट, कान्ति एवं सुकुमार भावों से युक्त तुम्हारे ये गुण तुम्हारे रूप के अनुरूप है। अतः क्या तुम उपेन्द्रवज्रा ( इन्द्र की वज्र की तरह कठोर ) हो ॥ ३६ ॥

इस छन्द के ग्यारह अक्षर के प्रत्येक पाद में प्रथम, तृतीय, षष्ठ, सप्तम एवं नवम अक्षर लघु हैं और शेष वर्ण गुरु हैं, अतः यहाँ उपेन्द्रवज्रा छन्द है ॥ ३६ ॥

**अभिनव**—उपेन्द्र का वज्र जहाँ पर उपमान के रूप में हो वह उपेन्द्रवज्रा है। मत्वर्थीय अच् प्रत्यय करने पर 'उपेन्द्रवज्रम्' बनता है। इसमें इन्द्रधनुष से उपमा दी गई है, इसलिए उपेन्द्रवज्रम् में उपमित समास है। द्विगु समास होने पर परवत् ( परपद ) लिङ्ग का निषेध होता है। स्मितेन अर्थात् मुस्कुराहट कान्ति से इन्द्र धनुष का भी वर्ण वैचित्र होता है ॥ ३६ ॥

## १८. रथोद्धता ( एकादशाक्षरावृत्तिः )

**अनुवाद**—'ग्यारह अक्षर के पाद वाले जिस छन्द के प्रत्येक पाद में प्रथम, तृतीय, सप्तम, नवम तथा अन्तिम अर्थात् एकादश वर्ण गुरु हो और शेष लघु हो तो 'रथोद्धता' छन्द कहलाता है ॥ ३७ ॥

---

१. क. गुर्वेकादशके ।

यथा—

किं ? त्वया [1]सुभट ! [2]दूरवर्जितं नात्मनो न [3]सुहृदां प्रियं कृतम् ।
यत्पलायनपराणस्य ते याति धूलिरधुना रथोद्धता ॥ ३८ ॥

यथा—

[4]किं ? त्वया कुमतिसङ्गया सदा नाज्ञयेव सुहृदां प्रियं कृतम् ।
यद् गृहाद्वचनरोषकम्पिता याति तूर्णमबला रथोद्धता ॥

---

दूरवर्जितं प्रियं न कृतम् । हे सुभट, किं त्वया कृतम् ( दूरत्यक्तमित्यर्थः ?) कुत इत्याह यत्पलायनेति ॥ ३८ ॥

---

उदाहरण जैसे—

S IS III SISIS
किं त्वया सुभट ! दूरवर्जितं
नात्मनो न सुहृदां प्रियं कृतम् ।
यत्पलायनपरायणस्य ते
याति धूलिरधुना रथोद्धता ॥ ३८ ॥

'हे सुभट ! तुमने दूर से ही युद्धभूमि को छोड़ कर क्या किया ? युद्धभूमि छोड़कर तुमने न अपना भला किया और न मित्रों का हित किया। क्योंकि युद्धभूमि से पलायन करने वाले तुम्हारे रथ से उद्धत धूलि उड़ रही है'' ॥ ६८ ॥

यहाँ प्रत्येक पाद का प्रथम, तृतीय, सप्तम, नवम तथा अन्तिम वर्ण गुरु है, शेष लघु है। अतः यहाँ पर 'रथोद्धता' छन्द है।

अभिनव—हे सुभट ! तुमने युद्ध को दूर से ही छोड़कर अच्छा नहीं किया। तुमने दूर से ही युद्ध को त्यागकर, यह क्या किया ? कैसे, जो कि डरकर युद्ध से भाग गये ॥ ३८ ॥

---

१. क. (टि०) सुभग ।
२. क. (टि०) दरवर्जितात्मना ।
३. क. (टि०) सुहृदः ।
४. ख. ग. पुस्तकयोरयं श्लोको नास्ति ।

आद्यं तृतीयमन्त्यं च सप्तमं दशमं गुरु।
[1]यस्यास्तु त्रैष्टुभे पादे विज्ञेया स्वागता हि सा ॥ ३९ ॥

यथा—

अद्य मे सफलमायतनेत्रे ! जीवितं मदनसंश्रयभावम्[2]।
आगतासि भवनं मम यस्मात्स्वागतं तव वरोरु ! निषीद ॥ ४० ॥

---

मदनसंश्रयो भावो यस्य कामफलमिति यावत् ॥ ४० ॥

---

दूसरा उदाहरण जैसे—

S I S I I I S I S I S
किं त्वया कुमति सङ्गया सदा
नाज्ञयेव सुहृदां प्रियं कृतम्।
यद् गृहाद्वचनरोषकम्पिता
याति तूर्णमबला रथोद्धता ॥ ३९ ॥

'हे अबले ! अज्ञा ( मूर्खा ) के समान सदा कुमति का सङ्ग करने वाली तुमसे क्या लाभ ? तुमने कभी भी मित्रों का हित नहीं किया। जो अबला होकर भी थोड़े से वचन कहने पर क्रोध से काँपती हुई रथ से उद्धत धूलि की तरह घर से बाहर जा रही हो।'

यहाँ रथोद्धता छन्द है।

## १९. स्वागता ( एकादशाक्षरा वृत्तिः )

अनुवाद—त्रिष्टुप् जाति के जिस छन्द के प्रत्येक पाद में प्रथम, तृतीय, सप्तम, दशम तथा एकादश अक्षर गुरु हो, शेष लघु हों तो 'स्वागता' वृत्त होता है ॥ ३९ ॥

उदाहरण जैसे—

S I S I I I S I I S S
अद्य मे सफलमायतनेत्रे
जीवितं मदनसंश्रयभावम्।
आगतासि भवनं मम यस्मात्
स्वागतं ते वरोरु निषीद ॥ ४० ॥

---

१. ग. गुरूणि त्रैष्टुभे पादे। क (टि०) तथा गुरूणि त्रैष्टुभे पादे यत्र सा स्वागता यथा।

२. क. (टि०) मदनसंश्रितभावम्।

[1]षष्ठं च नवमं चैव लघुनी त्रैष्टुभे यदि ।
गुरूण्यन्यानि पादे तु सा ज्ञेया शालिनी, यथा ॥ ४१ ॥
दुःशीलं वा निर्गुणं वापरं वा लोके धैर्यादप्रियं न ब्रवीषि ।
तस्माच्छीलं साधुहेतोः सुवृत्तं माधुर्यात्स्यात्सर्वथा शालिनी त्वम् ॥४२॥

' हे आयतलोचने ! कामदेव के आश्रित ( अधीन ) मेरा जीवन आज सफल हो गया । क्योंकि आप मेरे घर पधारी हैं । हे वरोरु ! आपका स्वागत है, बैठिये ।

यहाँ पर एकादशाक्षर पाद वाले छन्द में प्रत्येक पाद में पहला, तीसरा, सातवाँ दसवां ग्यारहवां अक्षर गुरु है । अतः यहाँ 'स्वागता' छन्द है ॥ ४० ॥

**अभिनव**—जिसका भाव कामदेव के संश्रित ( अधीन ) है, अर्थात् काम फल है ॥ ४० ॥

## २०. शालिनी ( एकादशाक्षरा वृत्ति )

**अनुवाद—त्रिष्टुप् जाति के जिस छन्द के प्रत्येक पाद में छठा, नौवां अक्षर लघु हो, शेष दीर्घ हो तो वहाँ 'शालिनी' वृत्त होता है ॥ ४१ ॥**

उदाहरण जैसे—

ऽ ऽऽ ऽ ऽ । ऽ ऽ । ऽ ऽ
दुःशीलं वा निर्गुणं वापरं वा
लोके धैर्यादप्रियं न ब्रवीषि ।
तस्माच्छीलं साधुहेतोः सुवृत्तं
माधुर्यात् स्यात् सर्वथा शालिनी त्वम् ॥ ४१ ॥

"हे देवि ! धैर्यशालिनी होने के कारण तुमने कभी किसी को दुःशील अथवा गुणहीन अथवा अन्य कोई अप्रिय शब्द नहीं कहती हो, इसलिए साधुता के कारण तुम्हारा शील ( स्वभाव ) सुवृत्त है, और मधुरता के कारण तुम सर्वथा शालिनी हो ॥ ४२ ॥

यहाँ प्रत्येक पाद में छठा, नौवाँ अक्षर लघु और शेष गुरु है, अतः यहाँ 'शालिनी' वृत्त है ।

१. ग. पुस्तकेऽयं श्लोको नास्ति ।

तृतीयं चैव षष्ठं च नवमं द्वादशं तथा ।
गुरूणि जागते पादे यत्र तत्तोटकं भवेत्[1] ॥ ४३ ॥

यथा—

किमिदं कपटाश्रयदुर्विषहं [2]बहुशाठ्यमथोल्वणरूक्षकथम् ।
स्वजनप्रियसज्जनभेदकरं ननु तोटकवृत्तमिदं कुरुषे[3] ॥ ४४ ॥

---

किमिदमिति तोटकस्य छेदकस्य वृत्तं चेष्टितम् ॥ ५५ ॥

---

## २१. तोटक वृत्त ( जगती जाति, द्वादशाक्षरा वृत्ति )

अनुवाद—जगती जाति के द्वादशाक्षर पाद के जिस छन्द के प्रत्येक पाद में तीसरा, छठां, नौवाँ तथा बारहवां अक्षर गुरु हो, शेष ह्रस्व हों तो वहाँ 'तोटक' वृत्त होता है ॥ ४३ ॥

उदाहरण जैसे—

।। ऽ ।।ऽ।।ऽ।।ऽ
किमिदं कपटाश्रयदुर्विषहं
बहुशाठ्यमथोल्वणरूक्षमथम् ।
स्वजनप्रियसज्जनभेदकरं
ननु तोटकवृत्तमिदं कुरुषे ॥ ४४ ॥

"धोखेबाजी के आश्रय से असह्य, धूर्तता से पूर्ण, अत्यन्त रूखे वचन से युक्त, स्वजन और प्रिय सज्जनों में भेद करने वाले इस तोड़ने वाले आचरण को क्यों कर रहे हो।"

यहाँ पर प्रत्येक पाद में तीसरा, छठा, नौवां तथा बारहवां अक्षर गुरु हैं, शेष लघु। अतः 'तोटक' छन्द है ॥ ४४ ॥

अभिनव—तोटक अर्थात् छेदक का वृत्त आचरण ॥ ४४ ॥

---

१. इतः परं क. पुस्तकेऽयं अधिकं दृश्यते —
यदि सोऽत्र भवेत्तु समुद्रसमस्त्रिषु चापि तथा नियमेन यतिः ।
सततं जगतीविहितं हि ततं गदितं खलु तोटकवृत्तमिदम् ॥

२. ख. बहुगर्जमिवोद्गणरूक्षकथम् । ग. बहुगण्डमिवोल्वणरूक्षपथम् ।

३. ग. प्रकुरु ।

[1]आद्यं तृतीयमन्त्यं च पञ्चमं षष्ठमेव च।
तथोपान्त्यं जगत्यां च गुरु चेत्कुमुदप्रभा[2] ॥ ४५ ॥

यथा—

[3]मन्मथेन विद्धा सललितभावा नृत्तगीतयोगा प्रविकसिताक्षी।
निन्द्यमद्य किं ? त्वं विगलितशोभा चन्द्रपादयुक्ता कुमुदवती च ॥४६॥

---

विशेष—गायकवाड़ संस्करण में तोटक का निम्नलिखित लक्षण अधिक पाया जाता है—

यदि सोऽत्र भवेत्तु समुद्रसमस्त्रिषु चापि तथा नियमेन यतिः।
सततं जगती विहितं हि ततो गदितं खलु तोटकवृत्तमिदम् ॥

"यदि जगती जाति के द्वादशाक्षर पाद वाले वृत्त के प्रत्येक चरण में चार सगण हो और नियमानुसार तीन अक्षरों पर 'यति' हो तो 'तोटक' नामक वृत्त होता है"

जैसे—रगण सगण स।ण सगण
।।ऽ ।।ऽ ।।ऽ ।।ऽ
किमिदं कपटा श्रयदुर्विषहं

## २२. कुमुदप्रभा ( द्वादशाक्षरा वृत्ति )

अनुवाद—जगती जाति के जिस छन्द के प्रत्येक पाद में प्रथम, तृतीय, पञ्चम, षष्ठ, एकादश, और द्वादश अक्षर गुरु हों और शेष वर्ण लघु हों तो 'कुमुदप्रभा' नामक छन्द कहलाता है ॥ ४५ ॥

---

१. 'ग' पुस्तकेऽयं श्लोको नास्ति।

२. इतः परं क. पुस्तकेऽयं अधिकं दृश्यते—

यौ त्रिकौ तथा न्यौ यदि खलु पादे षड्भिरेव वर्णैर्यदि च यदि स्यात्।
नित्यसंनिविष्टा जगतिविधाने नामतः प्रसिद्धा कुमुदनिभा सा ॥

३. क. (टि०) कामबाणविद्धा किमसि नतभ्रू।
शीतवातदग्धा नवनलिनीव।
पाण्डुवक्त्रशोभा कथमसि जाता ॥
अग्रतः सखीनां कुमुदनिभा त्वम्।

मतान्तरे—

यदि लघु पादे न्यौ द्विकौ यथा यौ यतिरपि वर्णैः षड्भिरेव चेत्स्यात् ।
जगति विधाने नित्यसंनिविष्टा कुमुदनिभा सा नामतः प्रसिद्धा ॥४७॥

यथा—

कुमुदनिभा त्वं कामबाणविद्धा किमिति ? नतभ्रूः शीतवातदग्धा ।
मृदुनलिनीवापाण्डुवक्त्रशोभा कथमपि जाता ह्यग्रतः सखीनाम् ॥ ४८ ॥

---

मन्मथेनेति नृत्तगीतयुक्ता भवतीति सम्बन्धः ॥ ४६ ॥

---

उदाहरण जैसे—

SISI SS IIII SS
मन्मथेन विद्धा, सललित भाषा
नृत्यगीतयोगा, प्रविकसिताक्षी ।
निन्द्यमद्य किं त्वं, विगलितशोभा
चन्द्रपादयुक्ता कुमुदवती च ॥ ४६ ॥

इस श्लोक के प्रत्येक पाद में प्रथम, तृतीय, पञ्चम षष्ठ, सप्तम, एकादश और द्वादश अक्षर गुरु हैं, शेष वर्ण लघु हैं। अतः यहाँ कुमुदप्रभा छन्द है ॥ ४६ ॥

**अभिनव**—मन्मथ अर्थात् कामदेव के उद्रेक से नृत्य एवं गीत से युक्त नहीं हो सकती ॥ ४६ ॥

**विशेष**—गायकवाड़ संस्करण में कुमुदवती का निम्नलिखित लक्षण अधिक दिया गया है—

यौं त्रिकौ तथा न्यौ यदि खलु पादे
षड्भिरेव वर्णैर्यदि च यतिः स्यात् ।
नित्यसंनिविष्टा जगतिविधाने
नामतः प्रसिद्धा कुमुदनिभा सा ॥

"जिस वृत्त के प्रत्येक पाद में रगण, यगण, नगण, यगण त्रिक हों और छः वर्णों पर यति हो तो जगती छन्द अर्थात् द्वादशाक्षरा छन्द के विधान में 'कुमुदनिभा' वृत्त होता है।"

द्वादशाक्षरके पादे सप्तमं दशमं लघु ।
[1]आदौ पञ्चाक्षरच्छेदश्चन्द्रलेखा सा यथा ॥ ४९ ॥

यथा—

वक्त्रं सौम्यं ते पद्मपत्रायताक्षं कामस्यावासं सुनासोच्चप्रहासम् ।
[2]कामस्यापीदं काममाहर्तुकामं कान्ते ! कान्त्या त्वं चन्द्रलेखेव भासि ॥५०॥

---

जैसे—रगण यगण नगण यगण
SISI SS IIII SS
मन्मथेन विद्धा, सललितभाषा

यहाँ पर रगण, यगण, नगण, यगण है, और छ अक्षरों पर यति है अतः कुमुदनिभा छन्द है।

## अन्यमतानुसार कुमुदनिभा का लक्षण—

अनुवाद—यदि जगती वृत्त के द्वादशाक्षर पाद में नगण, यगण, रगण, यगण का त्रिक हो और छ अक्षरों पर यति हो तो 'कुमुदनिभा' वृत्त होता है ॥४७॥

उदाहरण जैसे—

नगण यगण रगण यगण
III ISS SIS ISS
कुमुदनिभात्वं कामबाणविद्धा ।
किमिति ! नतभ्रूः शीतवातदग्धा ।
मृदुनलिनीव पाण्डुवक्त्रशोभा
कथमपि जाता ह्यग्रतः सखीनम् ॥ ४८ ॥

यहाँ पर प्रत्येक पाद में नगण, यगण, रगण, यगण और छः अक्षरों पर यति है। अतः यहाँ 'कुमुदनिभा' छन्द है ॥ ४८ ॥

## २३. चन्द्रलेखा ( द्वादशाक्षरा वृत्तिः )

अनुवाद—द्वादशाक्षर पाद वाले छन्द में यदि सातवाँ दसवाँ अक्षर लघु हो और शेष गुरु हो तथा पाँच अक्षरों पर यति हो तो 'चन्द्रलेखा' नामक वृत्त होता है ॥ ४९ ॥

---

१. क. (टि॰) यत्रान्यानि दीर्घाणि ।
२. क. कामस्यावासं ।

तृतीयमन्त्यं नवमं पञ्चमं च यदा गुरु।
द्वादशाक्षरके पादे यत्र सा प्रमिताक्षरा ॥ ५१ ॥

यथा—

स्मितभाषिणो[1] ह्यचपलापरुषा निभृतापवादविमुखी[2] सततम्।
अपि कस्यचिद्युवतिरस्ति सुखा प्रमिताक्षरा स हि पुमाञ्जयति[3] ॥५२॥

---

उदाहरण जैसे—

ऽ ऽ ऽऽऽ ऽ।ऽऽ। ऽ ऽ
वक्त्रं सौम्यन्ते पद्मपत्रायताक्षं
कामस्यावासं सुनासोच्चप्रहासम्
कामस्यापीदं कामाहर्त्तृकामं
कान्ते ! कान्त्या त्वं चन्द्रलेखेव भासि ॥ ५० ॥

"हे कान्ते ! तुम्हारा सौम्य मुख कमलदल के समान विशाल नेत्रों वाला, कामदेव का आवास, उच्च नासिका और प्रहास युक्त, कामदेव को भी कामना को आहरण करने वाला है। हे देवि ! तुम अपनी कान्ति से चन्द्रलेखा के समान लग रहो हो" ॥ ५० ॥

यहाँ पर पाद का सातवाँ और दसवाँ अक्षर लघु और शेष अक्षर गुरु हैं, अतः यहाँ 'चन्द्रलेखा' छन्द है ॥ ५० ॥

## २४. प्रमिताक्षरा ( द्वादशाक्षर वृत्ति )

अनुवाद—जिस द्वादशाक्षर पद वाले छन्द के प्रत्येक पाद में तृतीय, पञ्चम, नवम तथा अन्तिम ( बरहवाँ ) अक्षर गुरु हो, शेष लघु हो तो 'प्रमिताक्षरा' नामक वृत्त होता है ॥ ५१ ॥

उदाहरण जैसे—

। । ऽ । ऽ ।।।ऽ।।ऽ
स्मितभाषिणी ह्यचपलापरुषा
निभृतापवादविमुखी सततम्।
अपि कस्यचिद्युवतिरस्ति सुखा
प्रमिताक्षरा स हि पुमान् जयति ॥ ५२ ॥

---

१. ख. ग. स्थितहासिनी। भ. स्मितभासिनी।
२. ग. विमुखा। क. (टि०) वशवर्तिनी मधुरवाङ्निभृता।
३. ग. जगति।

द्वितीयमन्त्यं दशमं चतुर्थं पञ्चमाष्टमे ।
गुरुणि द्वादशे पादे वंशस्था जगती[1] तु [2]सा ॥ ५३ ॥
न मे प्रिया त्वं बहुमानवर्जितां प्रियं प्रिया ते परुषाभिभाषिणी ।
तथा च पश्याम्यहमद्य विग्रहं ध्रुवं हि [3]वंशस्थगतिं करिष्यति ॥५४॥

स्मितेति । प्रमिताक्षरा भण्यते, सा स्मितभाषित्वादिगुणयुक्ता सा तादृशी सुमुखी युवतिरपि कस्यचिद्भवेदिति शेषः ॥ ६४ ॥

"मुसुकरा कर बात करने वाली चञ्चलता और कठोरता से रहित, शान्त तथा निरन्तर अपवाद से रहित सुख देने वाली तथा कम बोलने वाली जिस किसी की युवति नारी है वह पुरुष सबसे श्रेष्ठ है" ॥ ५२ ॥

यहाँ पर प्रत्येक पाद का तृतीय, पञ्चम, नवम और द्वादश अक्षर गुरु है, शेष लघु । अतः यहाँ 'प्रमिताक्षरा' छन्द है ।

**अभिनव**—स्मितभाषित्व आदि गुणों से युक्त वह नारी प्रमिताक्षरा कही जाती है, ऐसी सुमुखी युवति जिस किसी को हो, वह सर्वोत्कृष्ट है ॥ ५२ ॥

## २५. वंशस्थ ( द्वादशाक्षरावृत्तिः )

**अनुवाद**—जगती जाति के द्वादशाक्षर वाले पाद में यदि द्वितीय, चतुर्थ, पञ्चम, अष्टम, दशम एवं द्वादश अक्षर गुरु हो, शेष लघु हो तो वहाँ 'वंशस्थ' वृत्त होता है ॥ ५३ ॥

उदाहरण जैसे—

I S I S S I I S I S I S
न मे प्रिया त्वं बहुमानवर्जिता
प्रियं प्रिया ते परुषाभिभाषिणी ।
तथा च पश्याम्यहमद्य विग्रहं
ध्रुवं हि वंशस्थगतिं करिष्यति ॥ ५४ ॥

---

१. क. (टि०) गदिता तु सा ।
२. क. इतः परं पुस्तकेऽधिकं दृश्यते—
यदि त्रिकौ ज्तौ भवतस्तु पादतस्तथैव च ज्रावसानसंस्थितौ ।
तदा हि वृत्तं जगतीप्रतिष्ठितं वदन्ति वंशस्थमितीह नामतः ॥
३. ख. ग. न मे प्रियं यद्बहुमानवर्जिता,
कृता प्रिये ते परुषाभिभाषणैः ।
तथा च पश्याम्यहमद्य विक्रमं
ध्रुवं स वंशस्थगतिः करिष्यति ।

चतुर्थमन्त्यं दशमं सप्तमं च यदा गुरु।
[1]भवेद्धि जागते पादे तदा स्याद्धरिणप्लुता[2]॥ ५५ ॥
परुषवाक्यकशाभिहता[3] त्वया [4]भयविलोकनपार्श्वनिरीक्षणा।
वरतनुः प्रततप्लुतसर्पणैरनुकरोति[5] गतैर्हरिणप्लुतम्[6] ॥ ५६ ॥

---

यहाँ पर प्रत्येक पाद में बारह अक्षर हैं और प्रत्येक पाद का द्वितीय, चतुर्थ, पञ्चम, अष्टम, दशम, एवं द्वादश वर्ण गुरु है, शेष लघु है, अतः यहाँ 'वंशस्थ' छन्द है ॥ ५४ ॥

विशेष—गायकवाड़ संस्करण में वंशस्थ का निम्नलिखित लक्षण अधिक पाया पाया जाता है—

यदि त्रिकौ ज्तौ भवतस्तु पावत-
स्तथैव च ज्रावसानसंस्थितौ।
तथा हि वृत्तं जगतीप्रतिष्ठितं
वदन्ति वंशस्थमितीह नामतः॥

"जगती जाति के जिस वृत्त के प्रत्येक पाद में जगण, तगण, जगण और रगण त्रिक हों उसे 'वंशस्थ' नामक वत्त समझना चाहिए।" जैसे—

| जगण | तगण | जगण | रगण |
|---|---|---|---|
| । ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |
| न मे प्रि | या त्वं ब | हु मान | वर्जिता |

## २६. हरिणप्लुता ( द्वादशाक्षरा वृत्तिः )

अनुवाद—जिस जगती जाति के द्वादशाक्षर पाद वाले वृत्त के प्रत्येक पाद में चतुर्थ, सप्तम, दशम एवं द्वादश वर्ण गुरु हो, शेष वर्ण लघु हो, उसे 'हरिणप्लुता' छन्द कहते हैं ॥ ५५ ॥

---

१. क ( भ. ) यस्यास्तु जागते पादे सा ज्ञेया हरिणप्लुता।
२. ग. हरिणीप्लुता।
३. ग. परुषवाचककथाभिहिता।
४. क ( भ. ) भयनिरीक्षणपार्श्वविलोकनैः।
५. क ( भ. ) प्रकुरुते प्रगतं हरिणप्लुता।
६. म. हरिणीप्लुतम्।

[1]सप्तमं नवमं चान्त्यमुपान्त्यं च यदा गुरु ।
द्वादशाक्षरके पादे कामदत्तेति सा यथा[2] ॥ ५७ ॥

---

परुषेत्यादि । भवत्परुषवाक्यरूपया कशया अभिहता वरतनुर्हरिणप्लुतमिव करोति ॥ ५६ ॥

---

उदाहरण जैसे—

नगण भगण भगण रगण
।।। ऽ।। ऽ।। ऽ।ऽ
परुष वाक्यक शाभिह ता त्वया
भयविलोकनपार्श्वनिरीक्षणैः ।
वरतनुः प्रततप्लुतसर्पणै-
रनुकरोति गतैर्हरिणप्लुतम् ॥ ५६ ॥

"तुम्हारे कठोर वचन रूपी कशा ( कोड़े ) से ताड़ित वह सुन्दरी अपनी चाल से भय से चकित अगल-बगल देखते हुए, सतत उछल-उछल कर भागते हुए हरिण की गति का अनुसरण कर रही है ॥ ५६ ॥

यहाँ पर द्वादशाक्षरपाद में चतुर्थ, सप्तम, दशम एवं द्वादश अक्षर गुरु है, और शेष लघु । अतः यहाँ पर 'हरिणप्लुता' वृत्त है ।

**अभिनव—परुषवचनेति**—आपके कठोर वचन रूपी कशा ( कोड़े ) से अभिहत ( ताड़ित ) हुई वह वरतनु हरिण की उछाल को तरह उछल रही है ॥ ५५-५६ ॥

**विशेष**—पिङ्गल तथा अन्य आचार्यों ने इसे 'द्रुतबिलम्बित' नाम से अभिहित किया है ॥ ५५ ॥

## २७. कामदत्ता

**अनुवाद**—जिसके बारह अक्षर के पाद में सातवाँ, नौवां, ग्यारहवाँ तथा बारहवाँ अक्षर गुरु हो और शेष अक्षर लघु हो तो 'कामदत्ता' नामक वृत्त कहलाता है ॥ ५७ ॥

---

१. क-भ. सप्तमं नवमं चैव ह्यन्तोपान्ते गुरूण्यथ ।
यत्र स्युर्जागते पादे कामदत्ता तु सा मता ॥
२. ख. स्मृता ।

करजपदविभूषिता यथा त्वं
[1]सुदति ! दशनविक्षताधरा च ।
गतिरपि [2]चरणावलग्नमन्दा
त्वमसि [3]मृगनिभाक्षि ! कामदत्ता ॥५८॥

आद्यं चतुर्थं दशमं सप्तमं च यदा [4]लघु ।
[5]पादे तु जागते यस्या अप्रमेया तु सा यथा ॥ ५९ ॥

उदाहरण जेसे—

नगण नगण रगण रगण
। । । ।।। ऽ।ऽ ।ऽऽ
करज पदवि भूषिता यथा त्वं
सुदति ? दशानाविक्षताधरा च ।
गतिरपि चरणावलग्नमन्दा
त्वमसि मृगानिभाक्षि ! कामदता ॥ ५८ ॥

अनुवाद—हे सुदति ! तुम जिस प्रकार नखक्षत से विभूषित हो और अधर दन्तक्षत से युक्त हैं, तथा तुम्हारी गति भी पैरों के लड़खड़ाने से मन्द है, इससे प्रतीत होता है कि हे मृगनयनो ! तुम कामदत्ता हो, अर्थात् काम के लिए प्रदान की गई हो ॥ ५८ ॥

यहाँ पर प्रत्येक पाद में सातवाँ, नौवाँ, ग्यारहवाँ और बारहवाँ अक्षर गुरु है, शेष लघु है और अतः यहाँ 'कामदत्ता' छन्द है ॥ ५८ ॥

## २८. अप्रमेया ( भुजङ्गप्रयात )

अनुवाद—जिस जगती जाति के बारह अक्षर के पाद में प्रथम, चतुर्थ, सप्तम एवं दशम अक्षर लघु हों, शेष गुरु हों तो 'अप्रमेया' नामक वृत्त होता है ॥ ५९ ॥

१. क. ( भ ) सुतनु । २. ग. चरणारविन्दमन्दा ।
३. ख. त्वमसि मृगसमाक्षि काममत्ता । ४. क. ( भ. ) लघून्यथ ।
५. ख. द्वादशाक्षरके पादे ।

न ते काचिदन्या समा दृश्यते स्त्री
[1]नृलोके विशिष्टा गुणैरद्वितीयैः ।
[2]त्रिलोक्यां गुणज्यान् समाहृत्य सर्वान्
जगत्यप्रमेयाऽसि सृष्टा[3] विधात्रा ॥ ६० ॥

---

उदाहरण जैसे—

। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ
न ते का चिदन्या समा दृ श्यते स्त्री
नृलोके विशिष्टा गुणैरद्वितीयैः ।
त्रिलोक्यां गुणाग्रधान् समाहृत्य सर्वान्
जगत्यप्रमेयाऽसि सृष्टा विधात्रा ॥ ६० ॥

इस मानव लोक में अद्वितीय गुणों से विशिष्ट तुम्हारे समान अन्य कोई स्त्री दिखाई नहीं देती, क्योंकि विधाता ने त्रिलोको में सभी श्रेष्ठ गुणों को इकट्ठा करके जगत् में अप्रमेय तुम्हें बनाया है ॥ ६० ॥

इस श्लोक के प्रत्येक पाद में प्रथम, चतुर्थ, सप्तम एवं दशम अक्षर लघु है और शेष गुरु हैं, अतः यहाँ 'अप्रमेया' छन्द है ॥ ६० ॥

विशेष—इसे ही पिङ्गल तथा अन्य आचार्यों ने 'भुजङ्गप्रयात' नामक छन्द कहा है। 'भुजङ्गप्रयात' छन्द का लक्षण अन्य आचार्यों ने **"भुजङ्गप्रयातं चतुर्भिर्यकारैः"** लिखा है अर्थात् जिस जगती छन्द के प्रत्येक पाद में चार यगण (। ऽ ऽ) हों उसे भुजङ्गप्रयात छन्द कहते हैं। जैसे—

यगण यगण यगण यगण
। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ
न ते का चि द न्या स मा दृ श्य ते स्त्री

इस पाद में चार यगण हैं अतः यह भुजङ्गप्रयात छन्द है।

---

१. ख. ग गुणैर्वाद्वितीया तृतीयापि चास्मिन् ।
२. ख. ग. ममेयं मतिर्लोकमालोक्य सर्व ।
३. क. दृष्टा ।

द्वितीयं पञ्चमं चैव ह्यष्टमैकादशे[1] तथा ।
पादे यत्र लघूनि स्युः पद्मिनी नाम सा यथा[2] ॥ ६१ ॥

देहतोयाशया वक्त्रपद्मोज्ज्वला
नेत्रभृङ्गाकुला दन्तहंसस्मिता ।
केशपाशच्छदा चक्रवाकस्तनी
पद्मिनीव प्रिये भासि मे सर्वदा ॥ ६२ ॥

## २९. पद्मिनी

अनुवाद—बारह अक्षर के पाद वाले जिस छन्द के प्रत्येक पाद में द्वितीय, पञ्चम, अष्टम तथा एकादश अक्षर लघु हों और शेष वर्ण गुरु हों, उसे 'पद्मिनी' नामक वृत्त कहते हैं ॥ ६१ ॥

विशेष—अन्य आचार्यों ने 'पद्मिनी' को ही 'स्रग्विणी' नामक छन्द कहा है ॥ ६१ ॥

उदाहरण जैसे—

| रगण | रगण | रगण | रगण |
|---|---|---|---|
| ऽ।ऽ | ऽ।ऽ | ऽ।ऽ | ऽ।ऽ |

देहतो याशया वक्त्रप द्मोज्ज्वला
नेत्रभृङ्गाकुला दन्तहंसस्मिता ।
केशपाशच्छदा चक्रवाकस्तनी
पद्मिनीव प्रिये भासि मे सर्वदा ॥ ६२ ॥

"हे प्रिये ! तुम्हारा शरीर जलाशय है, मुख विकसित कमल है, नेत्र आकुल भौंरे हैं, मुस्कराहट युक्त तुम्हारे दन्त हंस है, केशपाश छद ( सेवार ) हैं और स्तन चक्रवाक हैं, इस प्रकार पद्मसर को भाँति शोभित हो रही हो ॥ ६२ ॥

इस श्लोक के प्रत्येक पाद में द्वितीय, पञ्चम, अष्टम, एवं एकादश अक्षर लधु हैं और शेष गुरु है । अतः यह 'पद्मिनी' नामक वृत्त का उदाहरण है ।

---

१. ख अष्टमैकादशं यथा ।
२. इतः परं 'क' पुस्तकेऽधोलिखितं पद्मिनीलक्षणमधिकं दृश्यते—
रास्त्रिकाः सागराख्या निविष्टा यदा स्यात् त्रिके च त्रिके युक्तरूपा यतिः ।
सन्निविष्टा जगत्यास्ततस्सा बुधैर्नामतश्चापि संकीर्त्यते पद्मिनी ॥

उदाहरणान्तरं यथा—

[1]फुल्लपद्मानना त्वं द्विरेफेक्षणा
केशपत्रच्छदा चक्रवाकस्तनी ।
पीततोयावली बद्धकाञ्चीगुणा
पद्मिनीव प्रिये ! भासि नोरे स्थिता ॥ ६३ ॥

अन्य उदाहरण—

| रगण | रगण | रगण | रगण |
|---|---|---|---|
| S I S | S I S | S I S | S I S |
| फु ल्ल प | द्मानना | त्वं द्वि रे | फे क्ष णा |

केशपत्रच्छदा चक्रवाकस्तनी ।
पीततोयावली बद्धकाञ्चीगुणा
पद्मिनीव प्रिये ! भासि नोरे स्थिता ॥ ६३ ॥

"हे प्रिये! जल में स्थित तुम खिले हुए कमल रूपी मुखवाली, भ्रमर रूप नेत्र वाली, पीत जल रूप बाँधी हुई करधनी वाली पद्मिनी ( पद्मसर ) के समान लग रही हो ॥ ६३ ॥

यहाँ पर प्रत्येक चरण में द्वितीय, पञ्चम, अष्टम एवं एकादश अक्षर लघु हैं, शेष गुरु है। अतः यहाँ 'पद्मिनी' का 'स्रग्विणी' छन्द हैं।

विशेष—गायकवाड़ संस्करण में 'पद्मिनी' वृत का निम्नलिखित लक्षण अधिक पाया जाता है—

रास्त्रिकाः सागराख्या निविष्टा यदा
स्यात् त्रिके च त्रिके युक्तरूपा यतिः ।
सन्निविष्टा जगत्यास्ततस्सा बुधै—
र्नामतश्चापि संकीर्त्यते पद्मिनी ॥

अनुवाद—जिस वृत्त के प्रत्येक पाद में चार रगण सन्निविष्ट हों और तीन-तीन अक्षरों पर यति हो, विद्वान् लोग उसे जगती जाति का 'पद्मिनी' या 'स्रग्विणी' नामक वृत्त कहते हैं। जैसे—

१. ख. पुस्तके इतः परं श्लोकद्वयं नास्ति ।

आदौ षट्दशमं चैव पादे यत्र लघून्यथ ।
शेषाणि तु गुरूणि स्युर्जागते पुटसंज्ञिता ॥ ६४ ॥
[1]उपवनसलिलानां [2]बालपद्मैर्भ्रमरपरभृतानां कण्ठनादैः[3] ।
[4]मदनमदविलासैः कामिनोनां कथयति [5]पुटवृत्तं पुष्पमासः ॥ ६५ ॥

---

| रगण | रगण | रगण | रगण |
|---|---|---|---|
| S I S | S I S | S I S | S I S |
| देहतो | याशया | पद्मव | वत्रोज्ज्वला |

यहाँ पर पाद में चार रगण हैं, अतः 'पद्मिनी' नामक छन्द है।

## ३०. पुट

अनुवाद—जिस बारह अक्षरों वाले पाद में प्रत्येक पाद का प्रथम छः वर्ण एवं दशम अक्षर लघु हों और शेष गुरु हों, तो 'पुट संज्ञक' वृत्त होता है ॥ ६४॥

उदाहरण जैसे—

I I I I I I S S S I S S
उ प व न स लि ला नां बा ल प द्मै-
भ्रंमरपरभृतानां कण्ठनादैः ।
मदनमदविलासैः कामिनीनां
कथयति पुटवृत्तं पुष्पमासः ॥ ६५ ॥

---

१. ख. पुस्तकेऽधोलिखितं पुष्पवृत्तलक्षणमधिकं दृश्यते—
यदि चरणनिविष्टौ नौ तथा म्यौ यतिविधिरपि युक्त्याष्टाभिरिष्टः ।
भवति च जगतीस्थः सर्वदा स इह हि पुटवृत्तं नामतस्तु ॥

२. क. (टि०) बालपद्मे ।

३. क. (टि०) कण्ठनादे ।

४. क. (टि०) समदगतिविलासे ।

५. क. (टि०) कथयति पट्टलवृत्तं ।

[1]द्वितीयान्त्ये चतुर्थं च नवमैकादशे गुरु।
[2]विच्छेदोऽतिजगत्यां तु चतुर्भिः सा प्रभावतो ॥ ६६ ॥

---

उपवनेति। पुटस्य युगलस्य वृत्तं तथा चोपवनं सलिलं चेति युग्मम्, एवमन्यत् ॥ ६५ ॥

---

**अनुवाद**—यह पुष्पमास उपवन के जलाशय में उत्पन्न नूतन कमलों से, भौंरे और कोयल के कण्ठनादों से, कामिनी नारियों के काम मद से उत्पन्न विलासों के द्वारा यह पुष्पमास पुटवृत्त ( युगल वृत्त ) को कह रहा है ॥ ६५ ॥

यहाँ पर प्रत्येक पाद आदि के छः अक्षर और दशम वर्ण लघु हैं और शेष गुरु हैं। अतः यहाँ 'पुटवृत्त' छन्द है।

**अभिनव**—उपवनेति—पुटवृत्त का अर्थ है युगल का वृत्त और यहाँ उपवन तथा सलिल युगल हैं। इसी प्रकार अन्य भो भ्रमर-कोयल आदि युग्म हैं ॥ ६५ ॥

**विशेष**—गायकवाड़ संस्करण में पुटवृत्त का निम्नलिखित लक्षण अधिक पाया जाता है।

यदि चरणनिविष्टौ नौ तथा म्यौ
यतिविधिरपि युक्त्याऽष्टाभिरिष्टः।
भवति च जगतीस्थः सर्वदासौ
य इह हि पुटवृत्तं नामतस्तु ॥

**अनुवाद**—यदि जगती जाति के छन्द के प्रत्येक पाद में दो नगण, मगण यगण हों और आठ अक्षरों पर यति हो तो 'पुटवृत्त' नामक छन्द होता है। जैसे—

| नगण | नगण | मगण | यगण |
|---|---|---|---|
| । । । | । । । | ऽ ऽ ऽ | । ऽ ऽ |
| उ प व | न स लि | ला नां बा | ल प द्मै— |

भ्रमरपरभृतानां कण्ठनादैः।

यहाँ पर पाद में दो नगण, मगण और यगण हैं। अतः यहाँ 'पुटवृत्त' नामक छन्द हैं ॥

---

१. ख. ग. द्वितीयं च चतुर्थं च।
२. क. भ. पादे तु जगतीसंस्थे यत्र सा तु प्रभावती।

[1]कथं न्विदं कमलविशाललोचने !
गृहं [2]घनैः पिहितकरे दिवाकरे[3] ।
[4]अचिन्तयन्त्यभिनववर्षविद्युत-
स्त्वमागता[5] सुतनु ! यथा प्रभावती ॥ ६७ ॥

---

## ३१. प्रभावती ( अतिजगती जाति, त्रयोदशाक्षरावृत्ति )

अनुवाद—यदि अतिजगती जाति के वृत्त के प्रत्येक पाद का द्वितीय, चतुर्थ, नवम, एकादश तथा द्वादश अक्षर गुरु हों, शेष लघु हों तथा चार-चार अक्षरों पर यति हो तो 'प्रभावती' नामक वृत्त होता है ॥ ६६ ॥

जैसे—

I S I S I I I I S I S I S
कथं न्वि दं क म ल वि शा ल लो च ने
गृहं घनैः पिहितकरे दिवाकरे ।
अचिन्तयन्त्यभिनववर्षविद्युत—
स्त्वमागता सुतनु यथा प्रभावती ॥ ६७ ॥

अनुवाद—हे कमल के समान विशाल नेत्रों वाली सुन्दरि ! बादलों के द्वारा सूर्य के ढक जाने पर अर्थात् अंधेरा हो जाने पर, नूतन वर्षा तथा बिजली की परवाह न करती हुई तुम प्रभावती के समान मेरे घर कैसे चली आई ? ॥ ६७ ॥

इस श्लोक में प्रत्येक पाद का द्वितीय, चतुर्थ, नवम, एकादश तथा द्वादश वर्ण गुरु है, शेष वर्ण लघु है । अतः 'प्रभावती' नामक वृत्त है ॥ ६७ ॥

---

१. क. (भ.) अदः कथं ।
२. क. (भ.) गृहं गता ।
३. ख. ग. निशाकरे ।
४. क. (भ.) न मानसे भयमतिवृष्टिसम्भवं पराक्रमैस्त्वमसि ।
५. क. (प.) समागता ।

त्रीण्यादावष्टमं चैव दशमं नैधनद्वयम्[1] ।
[2]गुरूण्यतिजगत्यां तु त्रिभिश्छेदैः प्रहर्षिणी ॥ ६८ ॥

भावस्थैर्मधुरकथैः[3] सुभाषितैस्त्वं
साटोपस्खलितविलम्बितैर्गतैश्च ।
[4]शोभाढ्यैर्हरसि मनांसि [5]कामुकानां
सुव्यक्तं ह्यतिजगती प्रहर्षिणी च[6] ॥ ६९ ॥

## ३२. प्रहर्षिणी ( त्रयोदशाक्षरावृत्ति )

अनुवाद—अतिजगती जाति के जिस वृत्त के प्रत्येक पाद में आदि के तीन वर्ण तथा अष्टम, दशम एवं अन्त के दो वर्ण अर्थात् बारहवाँ और तेरहवाँ अक्षर गुरु हों, शेष लघु हो तथा तीन-तीन अक्षरों पर यति हो तो, प्रहर्षिणी' नामक वृत्त होता है ॥ ६८ ॥

उदाहरण जैसे—

ऽ ऽ ऽ । । । । ऽ । ऽ । ऽ ऽ
भा व स्थै मं धु र क थैः सु भा षि तै स्त्वं
साटोपस्खलितविलम्बितैर्गतैश्च ।
शोभाढ्यैर्हरसि मनांसि कामुकानां
सुव्यक्तं ह्यसि जगति प्रहर्षिणी ॥ ६९ ॥

अनुवाद—हे युवति ! तुम भावपूर्ण मधुर कथाओं वाले सुभाषितों से और गर्व के साथ लड़खड़ाती हुई विलम्बित ( मन्द ) गति से कामुकों के मन को हर लेती हो, अतः इस संसार में तुम प्रहर्षिणी ( हर्षित करने वाली ) हो, यह स्पष्ट है ॥ ६९ ॥

इस श्लोक के प्रत्येक पाद का आदि के तीन अक्षर तथा अष्टम, दशम, द्वादश एवं त्रयोदश वर्ण गुरु हैं, शेष लघु हैं, और तीन-तीन अक्षरों पर यति है, अतः 'प्रहर्षिणी' नायक वृत्त है ॥ ६९ ॥

---

१. ख. ग. नैधनं तथा ।
२. क. (भ.) गुरूणि पादे ह्यत्रैव यस्याः सा प्रहर्षिणी ।
३. क. (टि०) मधुरसकैः । मधुरतरैः ।
४. क. (टि०) नानाङ्गैः । ५. क. (टि०) मानवानां । ६. क. (टि०) त्वम् ।

षष्ठं च सप्तमं चैव दशमैकादशे लघु[1] ।
[2]त्रयोदशाक्षरे पादे ज्ञेयं मत्तमयूरकम् ॥ ७० ॥
विद्युन्नद्धाः [3]सेन्द्रधनूरञ्जितदेहा
वातोद्धूताः श्वेतबलाकाकृतशोभाः[4] ।
एते मेघा गर्जितनादोज्ज्वलचिह्नाः[5]
प्रावृट्कालं मत्तमयूराः[6] कथयन्ति ॥ ७१ ॥

---

## ३३. मत्तमयूरक

अनुवाद—त्रयोदशाक्षर पाद वाले जिस छन्द के प्रत्येक पाद में छठां, सातवाँ, दशवाँ और ग्यारहवाँ अक्षर लघु हों और शेष वर्ण दीर्घ हों तो 'मत्तमयूर' नामक वृत्त कहलाता है ॥ ७० ॥

उदारण जैसे—

S S S S S । । S S । । S S
विद्युन्नद्धाः से न्द्र ध नू र ञ्जि त दे हा—
वातोद्धूताः श्वेतबलाकाकृतशोभाः ।
एते मेघा गर्जितनादोज्वलचिह्नाः
प्रावृट्कालं मत्तमयूरं कथयन्ति ॥ ७१ ॥

"बिजली की चमक से युक्त, इन्द्रधनुष से रञ्जित देह वाले, वायु के द्वारा उड़ाये जाते हुए, सफेद बगुलों की कतार से सुशोभित और गरजते हुए नाद से उज्ज्वल ये मेघ मतवाले मयूरों को वर्षाकाल की सूचना दे रहे हैं" ॥ ७१ ॥

इस श्लोक के पाद में षष्ठ, सप्तम, दशम एवं एकादश अक्षर लघु और शेष गुरु है । अतः यहाँ 'मत्तमयूर' वृत्त है ॥ ७१ ॥

---

१. क. (टि०) तथा ।
२. क. (भ.) लघूनि यस्य पादे तु गच्छेन्मत्तमयूरताम् ।
३. ख. सेन्द्रधनुर्द्योतितदेहा ।
४. क. (टि०) कृतचिह्नाः ।
५. क. (भ.) गर्जितगम्भीरनिनादैः ।
६. क. मत्तमयूरं ।

आदौ द्वे चतुर्थं चाष्टमैकादशे गुरु ।
अन्त्योपान्त्ये च शक्वर्या वसन्ततिलका[1] यथा ॥ ७२ ॥

चित्रैर्वसन्तकुसुमैः कृतकेशहस्ता
स्रग्दाममाल्यरचनासुविभूषिताङ्गी ।
नानावतंसकविभूषितकर्णपाशा[2]
साक्षाद्वसन्ततिलकेव विभाति नारी ॥ ७३ ॥

---

चित्रैरिति । वसन्तस्य यस्तिलकस्तस्यास्ति उपमानं त्वनेनेति । साक्षादिति । छन्दानुवर्तिनीत्यर्थः ॥ ७३ ॥

---

३४. वसन्ततिलका ( शक्वरी जाति, चतुर्दशाक्षरा वृत्तिः )

अनुवाद—चतुर्दशाक्षरा शक्वरी जाति के वृत्त के प्रत्येक चरण में यदि प्रारम्भ के दो तथा चौथा, आठवाँ, ग्यारहवाँ, तेरहवाँ तथा चौदहवाँ वर्ण गुरु हों, शेष लघु हों तो 'वसन्ततिलका' नामक वृत्त कहलाता है ॥ ७२ ॥

उदाहरण जैसे—

S S ।S।।।S ।।S।SS
चित्रैः वसन्तकुसुमैः कृतकेशहस्ता—
स्रग्दाममाल्यरचनासुविभूषिताङ्गी ।
नागावतंसकविभूषितकर्णपाशा
साक्षाद्वसन्ततिलकेव विभाति नारी ॥ ७३ ॥

अनुवाद—नाना प्रकार के वासन्तिक फूलों से केशपाश को सजाये हुए, फूलों से गुथी हुई मालाओं से शरीर को विभूषित किये हुए, नाना प्रकार के कर्णाभूषणों से ( अथवा नागकेसर के फूलों से ) विभूषित कर्णपाश वाली नारी साक्षात् वसन्ततिलका के समान सुशोभित हो रही है ॥ ७३ ॥

इस पद्य के प्रत्येक चरण में आदि के दो अक्षर तथा चौथा, आठवाँ, ग्यारहवाँ, तेरहवाँ एवं चौदहवाँ वर्ण गुरु हैं, और शेष लघु हैं । अतः यहाँ 'वसन्ततिलका' छन्द है ॥ ७३ ॥

अभिनव—वसन्त का जो तिलक है, उसका इसके साथ उपमानत्व है । 'साक्षात्' का अर्थ है, अभिप्राय का अनुसरण करने वाली ।

---

१. क. (टि०) वसन्ततिलका, उद्धर्षिणीति सैतवाचार्येण, सिंहोन्नतेति काश्यपेन, मधुमाधवीति गोमानसेन, चेतोहितेति रामकीर्त्तिना लक्षिता "इन्दुमुखो सैतवस्य" जनाश्रय्यामुक्तम् । "उद्धर्षिणी सैतवस्य" इति पिङ्गलः ।

२. ख.ग. विभूषितगण्डपाली ।

[1]पञ्चादौ शक्वरी पादे गुरूणि त्रीणि नैधने[2] ।
पञ्चाक्षरादौ च यतिरसंबाधा तु सा यथा[3] ॥ ७४ ॥

यथा—

मानी लोकज्ञः सुतबलकुलशीलाढ्यो
[4]यस्मिन्सम्मानं न सदृशमनु पश्येद्धि[5] ।
गच्छेत्तं त्यक्त्वात्तं द्रुतगतिरपरं देशं
कीर्णा नानार्थैरवनिरियमसंबाधा ॥ ७५ ॥

---

### ३५. असम्बाधा ( चतुर्दशाक्षरा वृत्ति )

अनुवाद—चौदह अक्षर वाले शक्वरी जाति के प्रत्येक पाद में यदि आदि के पांच अक्षर और अन्त के तीन अक्षर गुरु हों, शेष लघु हों, और पांच अक्षरों पर यति हो तो 'असम्बाधा' नामक वृत्त होता है ॥ ७४ ॥

उदाहरण जैसे—

ऽ ऽ ऽऽऽ ।।।।।। ऽऽऽ
मानी लोकज्ञः श्रुतबलकुलशीलाढ्यो
यस्मिन् सम्मानं न सदृशमनु पश्येद्धि ।
गच्छेत्तं त्यक्त्वा तं द्रुतगतिरपर देशं
कीर्णा नानार्थैरवनिरियमसम्बाधा ॥ ७५ ॥

अनुवाद—लोकवृत्त को जानने वाला, शास्त्र, बल, कुल और शील से सम्पन्न मानी पुरुष जहाँ पर अपने अनुकूल सम्मान को नहीं पाये, उसे उस स्थान को छोड़कर शीघ्र ही दूसरे स्थान पर चला जाना चाहिए। क्योंकि नाना अर्थों से पूर्ण यह पृथ्वी सङ्कीर्ण नहीं है ॥ ७५ ॥

यहाँ पर प्रत्येक पाद के आदि के पांच और अन्त के तीन वर्ण गुरु हैं और शेष लघु है। अतः यहाँ 'असम्बाधा' नामक वृत्त है ॥ ७५ ॥

---

१. क. (भ) चतुर्दशाक्षरे पादे पञ्चादौ त्रीणि नैधने ।
यस्या गुरूण्यसम्बाधा नाम्ना ज्ञेया तु सा बुधैः ॥

२. ख. ग. चान्ततः    ३. ख. ग. स्मृता ।

४. क. (भ) यस्मिन्सामान्यं ।    ५. क. (भ.) पश्येत्तं ।

[1]चत्वार्यादौ गुरूणि स्युर्दशमैकादशे तथा ।
अन्त्योपान्त्ये च शक्वर्याः पादे तु शरभा यथा ।। ७६ ।।

यथा—

एषा कान्ता व्रजति ललिता वेपमाना
[2]गुल्मैश्छन्नं वनमभिनवैः संप्रविद्धम् ।
[3]हा हा कष्टं किमिदमिति नो वेद्मि मूढो
[4]व्यक्तं कान्ते ! शरभललितात्वं करोषि ।। ७७ ।।

---

३६. शरभा ( चतुर्दशाक्षरा वृत्तिः )

अनुवाद—यदि चौदह अक्षर वाले शक्वरी जाति के प्रत्येक पाद में आदि के चार वर्ण तथा दशवाँ, ग्यारहवा, तेरहवाँ और चौदहवाँ अक्षर गुरु हों और शेष लघु हों तो 'शरभा' नामक वृत्त होता है ।। ७६ ।।

उदाहरण जैसे—

S S S S　I I I　I I S S I S S
एषा कान्ता व्रजति ललितं वेपमाना
गुल्मैश्छन्नं वनमभिनवैः संप्रविद्धम् ।
हा हा कष्टं किमिदमिति नो वेद्मि मूढ़ो
व्यक्तं कान्ते शरभललिता त्वं करोषि ।। ७७ ।।

अनुवाद—यह कान्ता अभिनव गुल्मों से आच्छन्न वन में ललित गति से कांपती हुई जा रही है । हा हा बड़ कष्ट की बात है कि मूर्ख मैं नहीं समझ पा रहा हूँ कि यह क्या है ? हे कान्ते ! स्पष्ट है कि तुम हाथी के बच्चे की तरह चेष्टाएँ कर रही हो ।। ७७ ।।

इस श्लोक के प्रत्येक पाद में आदि के चार तथा दशम, एकादश, त्रयोदश तथा चतुर्दश वर्ण गुरु हैं और शेष लघु है, अतः यहाँ 'शरभ' नामक वृत्त है ।। ७७ ।।

---

१　ख. आदौ चतुर्गुरूणि स्युर्दशमैकादशे तथा ।
　　क. (भ) चत्वार्यादौ हि दशमं ततोऽन्यच्च भवेद्गुरु ।
२. क. (टि०) गुल्मच्छन्नं वनमुरुनागैः प्रवृद्धम् ।
३. क. (टि०) अहो कष्टं किमिदमिति संविग्नचेष्टा ।
४. ख. ग. व्यक्तं क्रोधाच्छरभललितं कर्तुकामा ।
　　क. (टि०) व्यक्तं क्रोडाच्छरभललितं हतु'कामा ।

आदौ षट् दशमं चैव लघु चैव त्रयोदशम्[1] ।
[2]यत्रातिशक्वरे पादे ज्ञेया नान्दीमुखी तु सा ॥ ७८ ॥

यथा—

न खलु तव[3] कदाचित्क्रोधताम्रायताक्षं
[4]भ्रुकुटिवलितभङ्गं दृष्टपूर्वं मयास्यम्[5] ।
किमिह बहुभिरुक्तैर्या ममेच्छा हृदिस्था
त्वमसि मधुरवाक्या देवि ! [6]नान्दीमुखीव ॥ ७९ ॥

## ३७. नान्दीमुखी ( अतिशक्वरी जाति, पञ्चदशाक्षरा वृत्ति )

अनुवाद—यदि अतिशक्वरी जाति के पञ्चदश अक्षरों वाले पाद में आदि के छः वर्ण और दसवाँ एवं ग्यारहवाँ अक्षर लघु हो और शेष वर्ण गुरु हों तो वहाँ 'नान्दीमुखी' नामक जाति होती है ॥ ७८ ॥

उदाहरण जैसे—

। ।। ।। । ऽऽ ऽ।ऽ ऽ।ऽ ऽ
न खलु तव कदाचित् क्रोधताम्रायताक्षं
भृकुटिवलितभङ्गं दृष्टपूर्वं मयास्यम् ।
किमिह बहुभिरुक्तैर्या ममेच्छा हृदिस्था
त्वमसि मधुरवाक्या देवि नान्दीमुखीव ॥ ७९ ॥

अनुवाद—हे देवि ! मैंने कभी भी तुम्हारे मुख को क्रोध से लाल नेत्रों वाला तथा भृकुटियों के वक्र विलास से युक्त नहीं देखा था। अब और अधिक कहने से क्या लाभ ? हे देवि ! तुम हृदय में बसने वाली मेरी अभिलाषा नान्दीमुखी की तरह मधुरभाषिणी हो ॥ ७९ ॥

---

१. ख. लघूनि स्युस्त्रयोदश ।
२. ख. यत्र पञ्चदशे पादे ज्ञेया नान्दीमुखीति सा ।
३. क. (टि०) वद । ४. क. (टि०) भ्रुकुटिपुटतरङ्ग ।
५. क. (टि०) तवास्यम् ।
६. क. (टि०) वेद्मि नान्दीमुखा त्वम् ।

आद्यं चतुर्थं षष्ठं च नैधनं च यदा गुरु[1] ।
षोडशाक्षरके पादे [2]'यत्रेभललितं तु तत्'[3] ॥ ८० ॥
यथा—
तोयधरैः[4] सुघोरघनपटुपटहरवैः[5]
सर्जकदम्बनीपकुटजकुसुमसुरभिः ।
कन्दलसेन्द्रगोपकरचितमवनितलं[6]
वीक्ष्य करोत्यसौ वृषभगजविलसितम्[7] ॥ ८१ ॥

---

नान्दीमुखीति नान्द्यां मङ्गलदुन्दुभेरिव मुखं यस्याः ॥ ७८ ॥

---

यहाँ पर प्रत्येक पाद में आदि के छः वर्ण तथा दशम एवं त्रयोदश वर्ण लघु हैं, शेष गुरु हैं, अतः यहाँ 'मान्दीमुखी' नामक वृत्त है ॥ ७९ ॥

अभिनव—नान्दीमुखीति—नान्दी पाठ के समय बजाये जाने वाले दुन्दुभि की तरह जिसका मुख हो, वह नान्दीमुखी है ॥ ७८ ॥

विशेष—अन्य आचार्यों ने 'नान्दीमुखी' को 'मालिनी' वृत्त कहा है ।

## ३८. गजविलसितम् ( शोडशाक्षरा वृत्ति )

अनुवाद—यदि सोलह अक्षर वाले पाद में पहला, चौथा, छठाँ और अन्तिम वर्ण गुरु हो और शेष लघु हों तो 'गजविलसितम्' वृत्त कहलाता हैं ॥ ८० ॥

---

१. क. (टि०) गुरूण्यथ ।
२. ख. गज विलसितं तु तत् ।
३. इतः परं 'क' पुस्तकेऽधिकमिदं दृश्यते—
अो यदि नाश्च नित्यमिह विरचितचरणा
गश्च तथा च वै भवति निधनमुपगतः ।
स्यादपि चाष्टिमेव यदि सततमनुगतं
तत्खलु वृत्तमग्रवृषभगजविलसितम् ॥
४. ग. वरः ।
५. ख. पटुपटहरवः । क. (टि०) पटुविशदनिनदितैः ।
६. क-भ. मत्तगजविलसितकम् ।
७. ग. अन्त्ये द्वे यत्र दीर्घाणि प्रवरं ललितं हि तत् ।

तोयधरैरिति गज एव, वा गजोचितं विलासं करोति । इदमिदं वीक्ष्य ॥८१॥

उदाहरण जैसे—

S I I S  I S I I I I I II I S

तो य ध रैः  धु धो र घ न प ट ह र वैः

सर्जकदम्बनीपकुटजकुसुमसुरभिः ।

कन्दलसेन्द्रगोपकरचितमवनितलं

वीक्ष्य करोत्यसौ वृषभगजविलसितम् ॥ ८१ ॥

अनुवाद—घन नगाड़े की आवाज के समान गम्भीर ध्वनि वाले मेघों से व्याप्त, सर्ज कदम्ब, नीप एवं कुटज के फूलों से सुगन्धित, कन्द (कन्दली) एवं इन्द्रगोप ( लाल रङ्ग की कीड़े ) से रञ्जित पृथ्वी तल को देख कर वह वृषभगज की तरह चेष्टाएँ कर रहा है ॥ ८१ ॥

यहाँ पर प्रत्येक पाद का प्रथम, चतुर्थ, षष्ठ एवं अन्तिम वर्ण गुरु है और शेष वर्ण लघु हैं । अतः यहाँ 'गजविलसितम्' छन्द है ॥ ८१ ॥

अभिनव—तोयधरैरिति—गज ही, अथवा गज के सदृश विलास करता है । इसको देखकर ऐसा करता है ॥ ८१ ॥

विशेष—गायकवाड़ ( बड़ौदा ) संस्करण में इसे 'वृषभगजविलसितम्' कहा गया है । वहाँ इसका लक्षण निम्नलिखित प्रकार दिया गया है—

भ्रौ यदि नाश्च नित्यमिह विरचितचरणः

गश्च तथा च वै भवति निधनमुपगतः ।

स्यादपि चाष्टिमेव यदि सततमनुगतं

तत्खलु वृत्तमग्रवृषभगजचेष्टितम् ॥

"जिसके प्रत्येक पाद में भगण, रगण और तीन नगण हो और अन्त में एक गुरु हो तो 'अष्टि' का निरन्तर अनुगमन करने वाला 'वृषभगजचेष्टित' नामक वृत्त होता है ॥"

इसका उदाहरण उपर्युक्त है ॥

आद्यात्पराणि वै पञ्च द्वादशं सत्रयोदशः ।
[1]अन्त्योपान्त्ये च दीर्घाणि ललितप्रवरं हि तत्[2] ॥ ८२ ॥

यथा—

नखालीढं गात्रं [3]दशनखचित्तं चोष्ठगण्डं
शिरः पुष्पोन्मिश्रं प्रविलुलितकेशालकान्तम्[4] ।
गतिः खिन्ना[5] चेयं वदनमपि संभ्रान्तनेत्रं[6]
अहो श्लाघ्यं वृत्तं प्रवरललितं कामचेष्टम्[7] ॥ ८३ ॥

---

## ३९. प्रवरललित ( षोडशाक्षरा वृत्ति )

**अनुवाद—जिस वृत्त के प्रत्येक पाद का प्रथम अक्षर के बाद पांच अक्षर तथा बारहवाँ, तेरहवाँ, पन्द्रहवाँ एवं सोलहवाँ अक्षर दीर्घ हों और शेष लघु हों तो 'प्रवरललित' वृत्त होता है ॥ ८२ ॥**

---

१. ग. अन्त्ये हि यत्र दीर्घाणि प्रवरं ललितं हि तत् ।

२. इतः परं 'क' पुस्तके प्रवरललितलक्षणमित्थमधिकं दृश्यते—
यदा य्मौ पादस्थौ भवत इह चेत्स्तौ तथा गौ ।
तथा षड्भिश्चान्त्यैर्यतिरपि च वर्णैर्यथा स्यात् ॥
तदप्यष्टौ नित्यं समनुगतमेवोक्तमन्यैः ।
प्रयोगज्ञैर्वृत्तं प्रवरललितं नामतस्तु ॥

३. ख. दशननिहितं । क. (टि०) दशनविहतं । विकचवशनं ।

४. क. (टि०) केशाग्रकान्तं ।

५. क. (टि०) गतिर्मन्दा चेयं । गतिः मन्दायामा ।

६. क. (टि०) यद् भ्रान्तनेत्रं ।

७. क. (टि०) कामवेषम् ।

उदाहरण जैसे—

ıs s s ss ıııııss ıss

न खा ली ढ़ं गात्रं दशन खचित ञ्चो ष्ठ गण्डं
शिरः पुष्पोन्मिश्रं प्रविलुलितकेशालकान्तम् ।
गतिः छिन्ना चेयं वदनमपि सम्भ्रान्तनेत्रं
अहो श्लाध्यं वृत्तं प्रवरललितं कामचेष्टम् ॥ ८३ ॥

"नायिका का शरीर नखक्षत से युक्त है, ओष्ठ तथा कपोलों पर दन्तक्षत हैं, शिर पर फूल मिश्रित हैं, मस्तक पर केश इतस्ततः बिखरे हुए हैं, गति ( चाल ) मन्द है अर्थात् लड़खड़ा रहो है, और मुख भ्रान्त नेत्रों से युक्त है, अहो ! उसका काम चेष्टाएँ ललित एवं श्लाधनीय है ।" ॥ ८३ ॥

इस छन्द के प्रत्येक पाद में द्वितोय, तृतोय, चतुर्थ, पञ्चम, षष्ठ, द्वादश, त्रयोदश, पञ्चदश एवं सोलहवाँ अक्षर गुरु है और शेष लघु । अतः यहाँ 'प्रवरललित' वृत्त है ॥

विशेष—गायकवाड़ संस्करण में प्रवरललित का निम्नलिखित लक्षण अधिक पाया जाता है—

यदा य्मौ वादस्यौ भवत इह चेत् स्तौ गौं
तथा षड्भिश्चान्यैर्यतिरपि च वर्णैर्यथा स्यात् ।
तदप्यष्टौ नित्यं समनुगतमेवोक्तमन्यैः
प्रयोगज्ञैर्वृत्तं प्रवरललितं नामतस्तु ॥

"जहाँ अष्टि जाति के वृत्त के प्रत्येक पाद में यगण, भगण, नगण, सगण, रगण और अन्त में एक गुरु हो तथा छः छः अक्षरों पर यति हो, तो उसे आचार्यो ने 'प्रवरललित' नामक वृत्त है ।"

जैसे—

| यगण | मगण | नगण | सगण | रगण | गुरु |
|---|---|---|---|---|---|
| ı s s | s s s | ı ı ı | ı ı s | s ı s | s |
| नखाली | ढ़ं गात्रं | दशन | ख चित | ञ्चोष्ठ | गण्डं |

आद्यात्पराणि पञ्चाथ द्वादशं सत्रयोदशम् ।
अन्त्यं सप्तदशे पादे शिखरिण्यां गुरूणि[1] च ॥ ८४ ॥

यथा—

[2]महानद्या भोगं पुलिनमिव ते भाति जघनं
तथास्यं [3]नेत्राढ्यं भ्रमरसहितं पङ्कजमिव ।
[4]तनुस्पर्शच्छायं सुतनु सुकुमारो न पुरुषः
स्तनाभ्यां ताभ्यां त्वं शिखरिणि [5]सुपोनासि वनिते ॥ ८५ ॥

---

### ४०. शिखरिणी ( सप्तदशाक्षरा वृत्ति )

अनुवाद—जहाँ पर सत्तरह अक्षर के पाद में पहिले के बाद के पांच अक्षर अर्थात् द्वितीय, तृतीय, चतुर्थ, पञ्चम, षष्ठ तथा द्वादश, त्रयोदश और अन्तिम वर्ण गुरु हों, शेष लघु हों तो 'शिखरिणी' नामक छन्द होता है ॥ ८४ ॥

उदाहरण जैसे—

ISSS SS IIIII S SI IIS
महानद्या भोगं पुलिनमिव ते भाति जघनं
तथास्यं नेत्राढ्यं भ्रमरसहितं पङ्कजमिव ।
गतिर्मन्दा चेयं सुतनु ! तव चेष्टा सुललिता-
स्तनाभ्यां ताभ्यां त्वं शिखरिणि सुपोनासि वनिते ॥ ८५ ॥

---

१. क. (भ.) गुरुस्मृतम् ।
इतः परं 'क' पुस्तकेऽधोलिखितं लक्षणमधिकं दृश्यते—
चतुर्भिस्तस्यैव प्रवरललितस्य त्रिकगणै—
यदा लौ गश्चान्ते भवति चरणेऽत्यष्टिगदिते ।
यदा षड्भिश्छेदो भवति यदि मार्गेण विहित—
स्तदा वृत्तेष्वेषा खलु शिखरिणी नाम गदिता ॥
२. ख. ग. महानद्या भोगे । ३. क. (टि०) नेत्रास्यं ।
४. क. (भ.) गतिर्मन्दा चेयं सुतनु ! तव चेष्टा सुललिता ।
५. क. ख. निभाभासि दयिते । ममाभासि दयिते ।

यत्र पञ्च लघून्यादौ त्रयोदशचतुर्दशे ।
षोडशैकादशे चैव तत्स्याद् वृषभचेष्टितम्[1] ॥ ८६ ॥

---

अनुवाद—हे सुतनु ! तुम्हारी जङ्घाएँ महानदी के पुलिन के समान दीर्घ है, और नेत्रों के सहित तुम्हारा मुख भ्रमरयुक्त कमल के समान है, तुम्हारी गति मन्द है और चेष्टाएँ सुललित है। हे वनिते ! तुम पीन स्तनों से युक्त शिखरिणी ( पहाड़ी ) जैसी सुशोभित हो रही हो ॥ ८५ ॥

यहाँ पर प्रत्येक पाद में द्वितीय, तृतीय, चतुर्थ, पञ्चम, षष्ठ, द्वादश, त्रयोदश तथा अन्तिम वर्ण गुरु है और शेष लघु है। अतः यहाँ शिखरिणी नामक वृत्त है ॥८५॥

विशेष—गायकवाड़ संस्करण में शिखरिणी का निम्नलिखित लक्षण अधिक पाया जाता है—

चतुर्भिस्तस्यैव प्रवरललितस्य त्रिकगणै-
र्यदा लौ गश्चान्ते भवति चरणेऽत्यष्टिगदिते ।
यदा षड्भिश्छेदो भवति यदि मार्गेण विहित-
स्तदा वृत्तेष्वेषा खलु शिखरिणी नाम गदिता ।

"यदि अत्यष्टि जाति के प्रत्येक पाद में उसी प्रवरललित चार त्रिक गण अर्थात् यगण, मगण, नगण, सगण और एक भगण, एक लघु एवं अन्त में गुरु हों तो 'शिखरिणी' नामक वृत्त होता है।"

| यगण | मगण | नगण | सगण | भगण | | |
|---|---|---|---|---|---|---|
| ISS | SSS | III | IIS | SII | I | S |

महान द्या भोगं पुलिन मिव ते भाति ज घनं

---

१. इतः परं 'क' पुस्तकेऽधोलिखितं दृश्यते—

यदि हि चरणे न्सौ स्लौ गः क्रमाद्विनिवेशिताः
यदि खलु यतिः षड्भिर्वर्णैस्तथा दशभिः पुनः ।
यदि विहितं स्यादत्यष्टि प्रयोगसुखाश्रयं
वृषभललितं वृत्तं ज्ञेयं तथा हरिणीति वा ॥

यथा—

[1]जलधररवं श्रुत्वा श्रुत्वा मदोच्छ्रयदर्पितो[2] ।
विलिखितमही शृङ्गाक्षेपैर्वृषः प्रतिनद्यं च ॥
स्वयुवतिवृतो [3]गोष्ठाद्गोष्ठं प्रयाति च निर्भयो ।
वृषभललितं चित्रं वृत्तं करोति च शाद्वले ॥ ८७ ॥

## ४१. वृषभचेष्टितम् ( सप्तदशाक्षरा वृत्ति )

अनुवाद—जिस वृत्त के पाद के आदि के पांच अक्षर तथा ग्यारहवाँ, तेरहवाँ, चौदहवाँ एवं सोलहवाँ अक्षर लघु हो और शेष अक्षर गुरु हों, उसे 'वृषभ चेष्टित' वृत्त कहते हैं ॥ ८६ ॥

उदाहरण जैसे—

। । । । । S S S S S । S । । S । S
ज ल ध र र वं श्रुत्वा श्रुत्वा मदोच्छ्रय दर्पितो
विलिखति महीं शृङ्गाक्षेपैर्वृषः प्रतिनद्यं च ।
स्वयुवतिवृतो गोष्ठाद्गोष्ठं प्रयाति च निर्भयो
वृषभललितं चित्रं वृत्तं करोति च शाद्वले ॥ ८७ ॥

"मेघ के गर्जन को सुन-सुन कर मद के उद्रेक से गर्वित यह वृषभ ( सांड़ ) प्रतिगर्जन करके सीगों के टक्कर से पृथ्वी को खोद रहा है और अपनी युवति गायों के साथ एक गोष्ठ से दूसरे गोष्ठ में निर्भय होकर विचरण करता है तथा हरी घास पर वृषभ की ललित एवं चित्र-विचित्र चेष्टाओं को कर रहा है ॥ ८७ ॥

इस पद्य के प्रत्येक चरण में आदि के पांच अक्षर तथा ग्यारहवाँ, तेरहवाँ, चौदहवाँ एवं सोलहवाँ अक्षर लघु हैं और शेष गुरु है। अतः यहाँ 'वृषभचेष्टित' वृत्त है ॥ ८७ ॥

१. ख. जलदनिनदं श्रुत्वा गर्जन् मदोच्चयदर्पितो ।
२. ग. दोप्तस्मरोत्सवलालितो ।
३. ख. गोष्ठोपगोष्ठं ।

चत्वार्यादौ च दशमं गुरु यत्र त्रयोदशम् ।
चतुर्दशं तथान्त्ये द्वे चैकादशमथापि च ॥ ८८ ॥
यदा सप्तदशे पादे शेषाणि च लघून्यथ ।
भवन्ति [1]यस्मिन्सा ज्ञेया श्रीधरो नामतो यथा ॥ ८९ ॥

---

विशेष—गायकवाड़ संस्करण में 'वृषभचेष्टित' का निम्नलिखित लक्षण अधिक पाया जाता है—

यदि हि चरणे न्लौ स्लौ स्लौ गः क्रमाद्विनिवेशिताः
यदि खलु यतिः षड्भिर्वर्णैस्तथा दशभि पुनः ।
यदि च विहितं स्यादत्यष्टिप्रयोगसुखाश्रयं
वृषभललितं वृत्तं ज्ञेयं तथा हरिणीति वा ।।

"यदि सप्तदशाक्षर वृत्त के प्रत्येक पाद में नगण, सगण, मगण, रगण, सगण, लघु और गुरु हों, और पहिले छः अक्षरों पर फिर दस अक्षरों पर यति हो तो अत्यष्टि जाति का 'वृषभललित' वृत्त होता है अथवा 'हरिणी' नामक वृत्त कहा जाता है।"

इसका उदाहरण है—

| नगण | सगण | मगण | रगण | सगण | ल० | गु० |
|---|---|---|---|---|---|---|
| ।।। | ।।ऽ | ऽऽऽ | ऽ।ऽ | ।।ऽ | । | ऽ |
| जलध | र र वं | श्रुत्वाश्रु | त्यामदो | च्छ्रयद | पि | तो |

यहाँ पर पाद में नगण, सगण, मगण, रगण, सगण, लघु एवं गुरु हैं, अतः 'वृषभललित' अथवा 'हरिणी' वृत्त है ।

नोट—पिंगल आदि आचार्यों ने इसे 'हरिणी' कहा है ।

## ४२. श्रीधरा ( मन्दाक्रान्ता ) ( सप्तदशाक्षरा वृत्तिः )

अनुवाद—यदि सप्तदश अक्षर के पाद में प्रारम्भ के चार अक्षर तथा दशम, एकादश, त्रयोदश, चतुर्दश और अन्त के दो वर्ण अर्थात् सोलहवाँ, सत्तरहवाँ वर्ण गुरु हों और शेष अक्षर लघु हों तो 'श्रीधरा' नामक वृत्त होता है ॥ ८८ ॥

विशेष—पिङ्गलादि आचार्यों ने 'श्रीधरा' को ही 'मन्दाक्रान्ता' कहते हैं ।

---

१. यत्र-यत्र ।

स्नानैश्चूर्णैः सुखसुरभिगंन्धवासैश्च धूपैः[1]
पुष्पैश्चान्यैः[2] शिरसि रचितैर्वस्त्रयोगैश्च तैस्तैः ।
नानारत्नैः कनकखचितैरङ्गसंभोगसंस्थै—
र्व्यक्तं कान्ते! कमलनिलया[3] श्रीधरीवातिभाति[4] ॥ ९० ॥

---

उदाहरण जैसे—

ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ
स्नानैश्चूर्णैः सुख सु र भि भि गं न्ध वासै श्च धूपैः
पुष्पैश्चान्यैः शिरसि रचितैर्वस्त्रयोगैश्च तैस्तैः ।
नानारत्नैः कनकखचितैरङ्गसम्भोगसंस्थै-
र्व्यक्तं कान्ते कमलनिलया श्रीधरेवातिभासि ॥ ८९ ॥

"सुखद एवं सुरभित चूर्णों से स्नान, सुगन्धित धूप, शिर में गुथे हुए पुष्प, विविध रङ्ग-विरङ्गे वस्त्र और नाना प्रकार रत्नों से जड़े हुए स्वर्णभूषणों से स्पष्ट हो रहा है कि हे कान्ते ! तुम कमल में निवास करने वाली लक्ष्मी ( सौन्दर्य की देवी ) सी लग रही हो ॥ ८९ ॥

इस पद्य के प्रत्येक पाद में आदि के चार वर्ण तथा दशम, एकादश, त्रयोदश, चतुर्दश और अन्तिम दो वर्ण गुरु हैं और शेष लघु हैं। अतः यहाँ 'श्रीधरा' या 'श्रीधरी' नामक वृत्त है ॥ ८९ ॥

---

१. ख. पुस्तके श्रीधरीलक्षणमित्थं वर्तते—

मो म्नो च स्युश्चरणरचितास्तौ गुरू च प्रविष्टा
छेदः श्लिष्टो यदि च दशभिः स्यात्तथान्यैश्चतुर्भिः ।
अत्यष्टौ च प्रतिनियमिता वर्णतः स्पष्टरूपा
सा विज्ञेया द्विजमुनिगणैः श्रीधरी नामतस्तु ॥
'क' पुस्तके इदं लक्षणमधिकं दृश्यते ।

२. ख. गण्डुलेपैः सुधूपैः । ग. गन्धसारैश्च धूपैः । क. (टि०) गन्धवासैः सुधूपैः ।

३. ख. पुष्पैः माल्यैः । ४. ग. निलये ।

५. क. (टि०) श्रीधरा त्वं विभासि । श्रीधरेवावभासि ।

आद्यं चतुर्थं षष्ठं च दशमं नैधनं गुरु।
[1]तद्वंशपत्रपतितं दशभिः सप्तभिर्यतिः ॥ ९१ ॥

यथा—

एष गजोऽद्रिमस्तकतटे कलभपरिवृतः[2]
क्रीडति वृक्षगुल्मगहने कुसुमभरनते।
मेघरवं निशम्य मुदितः पवनजवसमः[3]
सुन्दरि ! वंशपत्रपतितं पुनरपि कुरुते ॥ ९२ ॥

विशेष—गायकवाड़ संस्करण में श्रीधरी वृत्त का निम्नलिखित लक्षण अधिक पाया जाता है—

मो भ्नौ च स्युश्चरणरचितास्तौ गुरु च प्रविष्टा-
श्छेदः श्लिष्टो यदि च दशभिः स्यात्तथान्यैश्चतुर्भिः।
अत्यष्टौ च प्रतिनियमिता वर्णतः स्पष्टरूपा
सा विज्ञेया द्विजमुनिगणैः श्रीधरी नामतस्तु ॥

"जिस वृत्त के प्रत्येक पाद में मगण, भगण, नगण, दो तगण और अन्त में दो गुरु हो तथा दश एवं चार अक्षरों पर यति हो तो अत्यष्टि जाति का 'श्रीधरी' नामक वृत्त होता है।

उदाहरण जैसे—

मगण भगण नगण तगण तगण गु० गु०
S S S S I I I I I S I I S S I S S
स्नानैश्चू र्णैः सुख सुरभि भिर्गन्ध वासैश्च धू पैः

यहाँ पर पाद में मगण, भगण, नगण, तगण, तगण और अन्त में दो गुरु हैं, अतः यहाँ 'श्रीधरी' छन्द है ॥ ८९ ॥

## ४३. वंशपत्रपतितम्

अनुवाद—जिस वृत्त के प्रत्येक पाद में प्रथम, चतुर्थ, षष्ठ, दशम और अन्तिम वर्ण गुरु हो तथा दस और सात अक्षरों पर यति हो, उसे 'वंशपत्रपतित' वृत्त कहते हैं ॥ ९१ ॥

१. क. (भ०) यत्र सप्तदशे पादे वंशपत्राह्वयं तु तत्।
२. क. (भ.) युवतिपरिवृतः।
३. ख. मुदितपवनजववशात्। क. (टि०) पवनजवशात्।

पथ्या च विपुला चैव चपला मुखतोऽपरा ।
जघने चपला चैव आर्याः पञ्च प्रकीर्तिताः[1] ॥ १६४ ॥
आसां तु [2]संप्रवक्ष्यामि यतिमात्राविकल्पनम् ।
[3]लक्षणं नियमं चैव विकल्पगुणसंश्रयम् ॥ १६५ ॥
यतिश्छेदस्तु विज्ञेयश्चतुर्मात्रो गणः स्मृतः ।
द्वितीयान्त्यौ युजौ पादावयुजौ त्वपरौ स्मृतौ[4] ॥ १६६ ॥
गुरुमध्यविहीनस्तु चतुर्गणसमन्वितः ।
अयुग्गणो विधातव्यो युग्गणस्तु[5] यथेप्सितः ॥ १६७ ॥

---

## आर्यावृत्त

अनुवाद—पथ्या, विपुला, चपला, मुखचपला, और जघनचपला—ये पांच आर्याएँ कही गई हैं ॥ १६४ ॥

अनुवाद—अब मैं इन आर्याओं के लक्षण, यति एवं मात्राएँ, उनके भेद तथा विकल्प के गुण के आश्रित नियमों को कहूँगा ॥ १६५ ॥

अनुवाद—पाद के विभाग को यति कहते हैं। गण चार मात्राओं का होता है। द्वितीय और चतुर्थ पाद को युज् (सम-पाद) कहते हैं तथा प्रथम और तृतीय पाद को अयुज् अर्थात् विषम पाद कहते हैं ॥ १-६ ॥

अनुवाद—मध्य गुरु अर्थात् जगण से रहित चार गणों वाले अयुज् गणों का विधान करना चाहिए और युज् गण का इच्छानुसार प्रयोग करना चाहिए ॥ १६७ ॥

---

१. ख. पञ्चविधाः स्मृताः । २. क. (टि०) चैव प्रवक्ष्यामि ।
३. क. (टि० लक्षणे नियतांश्चैव विकल्पान् गुणसंश्रितान ।
४. क. (टि०) शेषौ चैव युजौ स्मृतौ ।
५. क. (टि०) युग्गणः पञ्च चैव तु ।

[1]षष्ठो वै द्विविकल्पस्तु नैधनो ह्येकसंस्थितः ।
[2]पाश्चादर्धे तु षष्ठः स्यादेकमात्रस्तु केवलः ॥ १६८ ॥
द्विविकल्पस्तु षष्ठो[3] यो गुरुमध्यो भवेत्तु सः ।
[4]तथा सर्वलघुश्चैव यतिसंज्ञासमाश्रिता ॥ १६९ ॥
[5]द्वितीयादिलघुर्ज्ञेयः सप्तमे पञ्चमे यतिः[6] ।
[7]प्रथमादिरथान्त्ये च पञ्चमे वा विधीयते ॥ १७० ॥
गणेषु त्रिषु पादस्य यस्याः पथ्या तु सा भवेत् ।
[8]अतश्च विपुलान्या तु विज्ञेया यतिलक्षणा ॥ १७१ ॥

---

अनुवाद—षष्ठ गण के दो विकल्प ( भेद ) हैं और अन्तिम अर्थात् अष्टम गण एक भेद वाला होता है। उत्तरार्द्ध में षष्ठ गण केवल एक मात्रा से निर्मित होता है ॥ १६८ ॥

अनुवाद—जो षष्ठ गण दो विकल्पों वाला होता है। वह मध्य गुरु वाला होता है तथा वह सर्व लघु भी होता है। वे यति संज्ञा के आश्रित होते हैं ॥ १६९ ॥

अनुवाद—जब द्वितीय चतुर्थ आदि अलघु (गुरु) हो तो पञ्चम-सप्तम अक्षर पर यति होती है और यदि प्रथम, तृतीय अक्षर लघु हो तो पञ्चम एवं अन्तिम अक्षर पर यति होती है ॥ १७० ॥

अनुवाद--जिस वृत्त में तीन गणों के पर यति होती है वहाँ 'पथ्या' आर्या होती है। इससे भिन्न 'विपुला' आर्या होती है, विपुला में कोई यति नहीं होती ॥ १७१ ॥

---

१. ख. षष्ठस्य । ग. षष्ठश्च ।
२. क-प. पश्चार्धे यो गणः षष्ठः एकमात्रः स उच्यते ।
३. क. (टि०) षष्ठोऽत्र ।
४. क. (टि०) सर्वयतिश्चैव यदि संज्ञां समाश्रितः ।
५. क. (टि०) सद्वितीया द्विलघुनी सप्तमे सप्तमाद्यदि ।
६. क-भ. सप्तमे वा यतिस्तथा । ७. ख. प्रथमादि तथान्ते च ।
८. क. (टि०) प्रथमे द्वितीये च सा त्वन्या विपुला मता ।
द्वितीयश्च चतुर्थश्च जकारो गुरुमध्यगौ ॥

अयुजः सर्वगुरवो गुरुमध्या गणा युजः ।
यस्याः स्युः पादयोगे तु विज्ञेया चपला[1] हि सा ॥ १७२ ॥
[2]त्रिंशदाद्ये तु विज्ञेयाः सप्तविंशतिः चापरे ।
उभयोरर्धयोर्ज्ञेयो मात्रापिण्डो विभागशः ॥ १७३ ॥
[3]त्रिंशत्तस्याश्च यदि स्युरेतानि द्विगुणानि तु ।
[4]त्रीण्यक्षराणि चान्यानि न्यस्य संख्याविभागशः ॥ १७४ ॥
एतानि लघुसंज्ञानि निर्दिष्टानि समासतः ।
[5]सर्वेषां चैवमार्याणामक्षराणां यथाक्रमम् ॥ १७५ ॥

---

अनुवाद—जिसके विषम ( प्रथम एवं तृतीय ) पाद सर्व गुरु हों और सम पाद ( द्वितीय-चतुर्थ ) मध्य गुरु वाले गणों से युक्त हो तो उसे 'चपला' आर्या वृत्त समझना चाहिए ।। १७२ ।।

अनुवाद—जिसके आदि में तीस मात्राएँ हो और अन्य सत्ताइस मात्राओं वाला हो। दोनो अर्धों के विभाग के अनुसार मात्राओं के पिण्ड को समझना चाहिए ।। १७३ ।।

अनुवाद—उसके पाद में यदि तीस अक्षर हों तो उसे द्विगुणित कर दे और संख्या के विभाग के अनुसार तीन अक्षर और जोड़ दे। संक्षेप में इसे लघु संज्ञक समझना चाहिए। इसी क्रम के अनुसार आर्याओं के सभी अक्षरों को समझने चाहिए ।। १७५-१७६ ।।

---

१. ख. विपुला च सा ।

२. ख. त्रिंशन्मात्रास्तु पूर्वार्द्धे विंशतिः सप्त चापरे ।

३. ख. अधिकानि यानि त्रिंशद्भ्यस्तानि द्विगुणितानि तु ।

४. ख. अक्षरत्रययुक्तानि ज्ञेयान्यत्र लघूनि तु ।

५. ख. सर्वासामेव चार्याणामक्षराणि यथाक्रमम् ।

अर्धाष्टमगणार्धा च सर्वैवार्या प्रकीर्तिता ।
षष्ठश्च द्विविकल्पस्तु नैधने ह्येकसंस्थितः ॥ १७६ ॥
पश्चाद्वा यो गणः षष्ठ एकमात्रः स उच्यते ।
द्विविकल्पस्तु यः षष्ठो गुरुमध्यो भवेत्तु सः ॥ १७७ ॥
यथा सर्वलघुश्चैव यतिः संख्यासमाश्रिता ।
सा द्वितीया द्विलघुका सप्तमे प्रथमे यतिः ॥ १७८ ॥

---

अर्धोऽष्टमो गणः । अतः सार्धाः सप्त गणाश्च । चतुर्मात्रा यस्मात्तावृगर्धः यः स्यात् । षष्ठो गणो द्विभेदः । तस्य एकभेदमाह पाश्चात्यर्धौ यः षष्ठो गणस्तस्मिन् कर्तव्ये लघुरेकः कर्तव्यस्तस्य स्थाने गुरुमध्यो ज इत्यर्थः । सर्वलघुः चतुर्लघुस्तत्र च द्वितीयाद्वारभ्य लघोर्यतिरर्धे तदनन्तरं पादारम्भः कर्तव्यः, अन्ते च प्रथमाद्विर्यतिः, पञ्चमे च गणे समाप्ते यतिः १७७-१७९ ॥

---

अनुवाद—सभी आर्याएँ प्रारम्भ में साढ़े सात गणों वाली होती है । षष्ठ गण दो विकल्पों वाला होता है अर्थात् उसके दो भेद होते हैं । तथा अष्ठम गण एक भेद वाला होता है । उत्तरार्द्ध में षष्ठ गण एक मात्रा वाला कहा जाता है । दो भेदों वाला जो षष्ठ गण है वह गुरुमध्य अर्थात् जगण होता है । और दूसरा रूप सर्व लघु वर्ण वाला होता है । ये यति संख्या पर आश्रित रहते हैं । वह द्वितीय दो लघु वाला होता है तो सप्तम और प्रथम पर यति होती है ॥ १७७-१७९ ॥

अभिनव—आठवाँ गण आधा होता है अतः आर्या में साढ़े सात गण होते हैं । आर्या में चार मात्राओं का एक गण होता है अतः उसका आधा गण । षष्ठ गण के दो भेद होते हैं । उसके एक भेद को कहते हैं । आधा जो षष्ठ गण है उसके करने के समय एक लघु करना चाहिए । उसके स्थान में मध्य गुरु जगण होना चाहिए । सर्व लघु अर्थात् चार लघु जहाँ हों, वहाँ द्वितीय लघु से आरम्भ करके आधे में यति करे उसके बाद का आरम्भ करना चाहिए । अन्त में प्रथम लघु पर यति करनी चाहिए और पञ्चम गण की सम्प्राप्ति पर यति करनी चाहिए ॥ १७७-१७८ ॥

गुरुमध्यविहीनस्तु चतुर्गणसमन्वितः ।
अयुग्गणो विधातव्यः युग्गणस्तु[1] स एव च ॥ १७९ ॥
प्रथमतृतीयौ पादौ द्वादशमात्रौ भवेत्तु सा पथ्या ।
विपुलान्या खलु गदिता पूर्वोदितलक्षणोपेता ॥ १८० ॥

---

अयुग्गण इति विषमः प्रथमतृतीयपञ्चमसप्तमरूपः । युग्गणः समः । स एव चेति जगणस्तत्र न वर्ज्यं इति यावत् ॥ १७९ ॥

अर्धद्वयेऽपि गणत्रये छेदः कर्तव्यः सैव पाद उच्यते तदाह—प्रथमतृतीयौ पादौ द्वादशमात्राविति ।

प्रथमेऽर्धे गणत्रयं प्रथमः पादः । द्वितीयेऽर्धे चान्यद् गणत्रयं तृतीयपादः ॥१८०॥

---

अनुवाद—मध्य गुरु अर्थात् जगण से रहित चार गणों से युक्त विषम ( प्रथम तृतीय ) गण का विधान करना चाहिए और उसी प्रकार सम गण वाले पाद भी होना चाहिए ॥ १७९ ॥

अभिनव—अयुग्गण का अर्थ होता है विषम गण अर्थात् प्रथम, तृतीय, पञ्चम, सप्तम गण । युग्गण का अर्थ है सम गण अर्थात् द्वितीय, चतुर्थ, षष्ठ, अष्टम गण । स एव का अभिप्राय है जहाँ जगण वर्जित नहीं है ॥ १७९ ॥

अभिनव—दोनों आधों अर्थात् पूवार्ध और उत्तरार्द्ध में तीन गणों पर छेद ( यति ) करना चाहिए । उसे पाद कहते हैं ।—इसी को कहते—

अनुवाद—यदि प्रथम और तृतीय पाद में बारह मात्राएँ हों तो उसे 'पथ्या' वृत्त कहते हैं और पूर्व-कथित लक्षणों से युक्त विपुला आर्या भिन्न होती है ॥ १८० ॥

अभिनव—प्रथमार्ध में तीन गणों का प्रथम पाद होता है । द्वितीयार्ध में तीन गणों का तृतीय पाद है ॥ १८० ॥

---

१. ख. ग. प्रमाणश्चैव पञ्चमः ।

पथ्या यथा—

रक्तमृदुपद्मनेत्रा सितदीर्घबहुलमृदुकेशी ।

कस्य तु पृथुमृदुजघना तनुबाह्वंसोदरी पथ्या ॥ १८१ ॥

विपुला यथा—

विपुलजघनवदनस्तननयनैस्ताम्राऽधरोष्ठकरचरणैः ।

आयतनासागण्डैर्ललाटकर्णैः शुभा कन्या ॥ १८२ ॥

---

पथ्येति पथिसाध्वित्यर्थः ॥ १८१ ॥

---

पथ्या का उदाहरण जैसे—

S I I I S I S S I I S I I I I I I S S

रक्त मृ दु प द्म ने त्रा, सितदीर्घबहुलमृदुकेशी ।

S I I I I I I I I S I I S S S I S S S

कस्य तु पृ थु मृ दु ज घ ना, तनुबाह्वंसोदरी पथ्या ॥ १८१ ॥

अनुवाद—रक्त एवं कोमल कमल के समान नेत्र वाली, काले, लम्बे और अत्यन्त कोमल बालों वाली, विशाल एवं कोमल जांघों वाली और पतले बांह, अंस और उदर वाली कन्या किसे प्रिय नहीं होती ॥ १८१ ॥

अभिनव—पथ्या अर्थात् मार्ग में साधु ( पथि साधु पथ्या )। अर्थात् व्यवहार में साधु ( सुन्दर ) पथ्या है ॥ १८१ ॥

विपुला का उदाहरण जैसे—

I I I I I I I I I S I I I I S S S I S I I I I I S

वि पु ल ज घ न व द न स्तन न य नै स्ताम्राधरोष्ठकरचरणैः ।

S I I S S S S I S S S S I S S S

आ यत ना सा गण्डैर्ल लाटकर्णैः शुभा कन्या ॥ १८२ ॥

अनुवाद—जिसके नितम्ब, बदन, स्तन, नेत्र विशाल हों, तथा अधरोष्ठ, हाथ और पैर ताम्रवर्ण के हो, नासिका, कपोल, ललाट और कान आयत हो वह कन्या शुभ होती है ॥ १८२ ॥

द्वितोयश्च चतुर्थश्च गुरुमध्यगतो भवेत् ।
उभयोरर्धयोर्यत्र विज्ञेया चपला यथा ॥ १८३ ॥

यथा—

उद्भटगामिनी परुषभाषिणी कामचिह्नकृतवेषा ।
जानाति मांसयुक्ता सुराप्रिया सर्वतश्चपला ॥ १८४ ॥

पूर्वार्धे लक्षणं ह्येतदस्याः[1] स च मुखेन तु ।
[2]पश्चिमार्धे तु चपला यस्याः सा जघनेन तु ॥ १८५ ॥

मुखचपला यथा—

आर्यामुखे तु चपला तथापि चार्या न मे यतः सा किम् ।
दक्षा गृहकृत्येषु तथा दुःखे भवति दुःखार्ता ॥ १८६ ॥

---

## चपला आर्या

अनुवाद—जहाँ दोनों अर्धभाग में द्वितीय और चतुर्थ गण मध्य गुरु ( जगण ) हों, उसे 'चपला' आर्या कहते हैं ॥ १८३ ॥

उदाहरण जैसे—

S I I S I S I I I S I S S I S I I I S S
उद्भट गामिनी परुष भाषिणी कामचिह्नकृत वेषा ।
S S I S I S S I S I S S I S I I S
जानाति मांस युक्ता सुराप्रिया सर्वतश्चपला ॥ १८४ ॥

अनुवाद—उद्धत चाल वाली, कठोर वचन बोलने वाली उपभोग के चिह्न से युक्त वेष वाली, अधिक मांस युक्ता, मदिरा-प्रिया नायिका सब प्रकार से 'चपला' होती है ॥ १८४ ॥

अनुवाद—यदि चपला का यह लक्षण पूर्वार्द्ध में हो तो 'मुखचपला' और यदि उत्तरार्द्ध में लक्षण दिखाई दे तो जघनचपला होती है ॥ १८५ ॥

---

१. क. (न) यस्याः सा चपलामुखे ।
२. क. (न) पश्चिमार्द्धे भवेद्यत्र जघने चपला तु सा ।

जघनचपला यथा—

वरमृगनयने ! चपलासि वरोरु ! शशाङ्कदर्पणनिभास्ये ! ।
कामस्य [1]सारभूते ! न पूर्वमदचारुजघनेन ॥ १८७ ॥

सर्वचपला यथा—

[2]उभयोरर्धयोरेतल्लक्षणं दृश्यते[3] यदि ।
वृत्तज्ञैः सा तु विज्ञेया सर्वतश्चपला सखि ! ॥ १८८ ॥

---

मुखचपला का उदाहरण जैसे—

S S I S I I I S I S I S S I S I S S S
आर्या मुखे तु चपला तथापि चार्या न मे यतः सा किम् ।
S S I I S S I I S S S I I I S S S
दक्षा गृह कृत्येषु तथा दुःखे भवति दुःखार्त्ता ॥ १८६ ॥

अनुवाद—मेरी स्त्री मुख से चपला ( वाचाल ) है, फिर भी वह चपला नहीं है, क्योंकि वह गृह कार्य में दक्ष है और मेरे दुःख में दुःखित हो जाती है ॥ १८७ ॥

जघनचपला का उदाहरण जैसे—

I I I I I I S I I S I I S I I S I S I S I I I S S
वरमृगनयने ! चपलासि वरोरु ! शशाङ्क दर्पण निभास्ये ।
S S I S I S S I S I I I S I I I S S
कामस्य सारभूते ! न पूर्वं मद चारुजघनेन ॥ १८८ ॥

अनुवाद—हे वरोरु ! हे मृगाक्षि ! हे चन्द्रमा एवं दर्पण के समान मुख वाली, सुन्दरि ! काम के सारभूत पूर्ण मदमस्त सुन्दर जङ्घाओं से तुम चपला हो ॥ १८८ ॥

अनुवाद—यदि पूर्वार्द्ध और उत्तरार्द्ध में चपला का लक्षण दिखाई दे तो हे सखि ! वृत्त वेत्ता लोग उसे 'सर्वचपला' कहते हैं ॥ १८९ ॥

---

१. अतः परं काशीमुद्रितपुस्तके सार्धचतुष्टयपद्यमधिकम् ।
२. ख. ग. सारभूतेन ।
३. क-भ. यत्रैव लक्षणं भवेत् ।

कार्यौ द्वादशमात्रौ च पादावाद्यौ तृतीयकौ ।
अष्टादश द्वितीयं च तथा पञ्चदशोत्तमा ॥ १८९ ॥

चतुःपञ्चप्रकाराणां चतुष्काणां विशेषतः ।
प्रस्तारयोगमासाद्य बाहुल्यं संप्रदर्शयेत् ॥ १९० ॥

पञ्चपञ्चाशदाद्या तु त्रिंशदाद्या तथैव च ।
आर्या त्वक्षरपिण्डेन विज्ञेयात्र प्रयोक्तृभिः ॥ १९१ ॥

---

आर्याणां भेदं दर्शयितुं तत्प्रस्तारमाह—

चतुः पञ्चप्रकाराणां चतुष्काणां विशेषतः ।
प्रस्तारयोगमासाद्य बाहुल्यं संप्रदर्शयेत् ॥ इति ॥

अयुक्स्थानगतानां चतुष्प्रकाराश्चतुर्गणाः । समस्थानगताः पञ्चप्रकारास्तेषां यो विशेषः परस्परसंकीर्णता तत्कृतमार्याणां प्रस्तारबाहुल्यं निरूपयेत् ॥ १९० ॥

---

अनुवाद—यदि प्रथम और तृतीय पाद में बारह मात्राएँ हों और द्वितीय पाद में अठारह तथा चतुर्थ पाद में पन्द्रह मात्राएँ हों तो इसे 'उत्तमा' आर्या कहते हैं ॥ १९० ॥

विशेष—श्रुतबोध में कालिदास ने आर्या का लक्षण इस प्रकार बताया है—

यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥

अभिनव—आर्याओं का भेद दिखलाने के लिए उनके प्रस्तार को कहते हैं—

अनुवाद—विषम स्थान में स्थित चार प्रकार के चार गण हैं और सम स्थान में स्थित पाच प्रकार के होते हैं। प्रस्तार के योग से इसकी बाहुल्य संख्या का निर्देश करे ॥ १९० ॥

अभिनव –विषम स्थान (पाद) में स्थित चार प्रकार के चार गण हों और सम स्थानगत पांच प्रकार के गण होते हैं। उनके परस्पर सङ्कीर्णतारूप जो विशेषता है, उनके कारण आर्या के प्रस्तार-बाहुल्य का निर्देश करे ॥ १९० ॥

अनुवाद—अन्तिम आर्या के पचपन प्रकार है और प्रथम आर्या तीस प्रकार की है। इस प्रकार छन्दप्रयोक्ता विद्वानों को आर्या के अक्षरपिण्ड को समझना चाहिए ॥ १९१ ॥

**त्रिंशतस्त्वथ वर्णेभ्यो लघुवर्णत्रयं भवेत् ।**
**शेषाणि गुरुसंख्यानि ह्येवं सर्वत्र [1]निर्दिशेत् ॥ १९२ ॥**

---

अन्त्या सर्वलघुः कार्या तत्र पञ्चपञ्चाशदक्षराणि, प्रथमार्धे एकात्रिंशत्, द्वितीये षड्विंशतिः ।

शिशिरतरकिरणपरिकरसकलकलविरचितकपिशकचनिचय ! ।
समहृदयतनुविनिहितधरणिधरवरसुत ! जय जय शिव ! ॥ १९१ ॥

लघुद्वयं द्वितीये षष्ठे स्थाने, चतुर्थेऽपि च लघुः तथा च लघुवर्णत्रयमिति ॥ १९२ ॥

---

**अभिनव**—अन्तिम आर्या को सर्वलघु करना चाहिए, उसमें पचपन अक्षर होने चाहिए, उनमें प्रथमार्ध में उनतीस और द्वितीयार्ध में छब्बीस अक्षर होने चाहिए । जैसे—

। । । । । । । । । । । । । । । । । । । । । । । । । । ।
शिशिरतरकिरणपरिकरसकलकलविरचितकपिशकचनियचय ।
। । । । । । । । । । । । । । । । । । । । । । । । । ।
समहृदयतनुविनिहितधरणिधरवरसुत ! जय जय शिव ॥

"अत्यन्त शीतल किरण वाले चन्द्रमा के परिकर रूप सकल कलाओं से जिसके कपिश केशसमूह विरचित हैं, सुशोभित हैं और सम हृदय वाले शरीर में धरणिधर हिमालय का श्रेष्ठ सन्नाम पार्वती को धारण कर रखा है । उस शिव की जय जय हो" ।

**अनुवाद—इन तीस प्रस्तारगत भेदों में तीन लघु वर्ण होने चाहिए और शेष गुरु होने चाहिए । इस प्रकार सर्वत्र निर्देश करना चाहिए ॥ १९२ ॥**

**अभिनव**—द्वितीय और षष्ठ स्थान में दो लघु और चतुर्थ स्थान में भी लघु होने चाहिए । इस प्रकार तीन लघु वर्ण होने चाहिए ॥ १९२ ॥

---

१. इत—परं 'क' पुस्तके सर्वेषामेव चार्याणामक्षराणां यथाकृतम् । इत्यधिकं दृश्यते ।

सर्वेषां जातिवृत्तानां पूर्वमुत्तरसंख्यया ।
[1]विकल्पगणनां कृत्वा संख्यापिण्डेन निर्दिशेत्[2] ॥ १९३ ॥

आर्यागीतिरथार्यैव केवलं त्वष्टभिर्गणैः ।
इतरार्धे तुः षष्ठस्तु न लघुर्गण इष्यते[3] ॥ १९४ ॥

अत्र मात्रावृत्तानां संख्याज्ञानार्थमाह—सर्वेषामेवेति ।

पूर्वं कृत्यो यो विकल्पसंख्याभेदः तस्योत्तरसंख्यया सह गुणसंहननं कृत्वा यो भवति पिण्डस्तेन संख्यां वदेत् ॥ १९३ ॥

तत्र समस्तासां पञ्चभेदः विषमश्चतुर्भेदः षष्ठो द्विभेदः द्वितीयेऽर्धे त्वेकभेदः, अष्टममेकभेदम् । तदत्र पूर्वाङ्केनोत्तराङ्कस्य गुणनं तेनान्याङ्कस्य षोडश स्थानानि । संख्यालाभः तत्र चतुर्भिः पञ्चानां गुणने विंशतिस्तया चतुर्णां गुणने अशीतिस्तया च चतुर्णां गुणने विंशत्युत्तरत्रिंशदित्यादि मन्तव्यम् । तदाह—

आर्याः शतसहस्राणि ज्ञेया ह्येकान्नविंशतिः ।
अष्टौ कोट्यः सहस्राणि विंशतिश्च प्रमाणतः ॥

न लघुरिति । अपि तु प्रथमार्धवदपरार्धेऽपि षष्ठो द्विभेदो गणः आर्यागीतावित्यर्थः ॥ १९४ ॥

**अभिनव** ·अब मात्रिक वृत्तों के संख्या ज्ञान के लिए कहते हैं—

**अनुवाद**—सभी जातियों वृत्तों के पूर्व में विकल्प-भेदों की गणना उत्तर संख्या से करके पिण्ड बनाकर संख्या का निर्देश करे ॥ १९४ ॥

**अनुवाद**—आर्या गीति के इस पूर्व अर्धभाग में केवल आठ गण होते हैं। और उत्तरार्द्ध में षष्ठ गण में एक लघु नगण इष्ट है ॥ १९५ ॥

**अभिनव**—पूर्व में विकल्प के द्वारा जो संख्या-भेद किया गया है उसका उत्तर संख्या के द्वारा गुणन करके जो पिण्ड बनता है, उससे संख्या का निर्देश करे। इनमें जो सम संख्या है, उसके पाँच भेद हैं और विषम के चार भेद होते हैं। षष्ठ के दो भेद और द्वितीय अर्ध में एक भेद होता है तथा अष्टम में भी एक भेद होता है। इस प्रकार यहाँ पूर्ण अङ्क से उत्तर अङ्क का गुणन करे तथा उससे अन्य अङ्क का। इस प्रकार सोलह स्थान होते हैं। इससे संख्या-लाभ होता है।

१. ख. ग. विकल्पं गणयित्वा तु (च)
२. ग. दर्शयेत् ।
३. ख. ग. विकल्पो भवेद्गणः ।

[1]वृत्तैरेवं तु विविधैर्नानाछन्दस्समुद्भवैः ।
काव्यबन्धास्तु कर्त्तव्याः षट्त्रिंशल्लक्षणान्विताः ॥ १९५ ॥

इति भरतीये नाट्यशास्त्रे [2]छन्दोविचितिर्नाम पञ्चदशोऽध्यायः[3] ।

अध्यायार्थमुपसंहरन् भाविनं विषयमासूत्रयति वृत्तैरित्यादि । काव्यबन्धा इत्यनेनेदमाह यथा प्रासादकुड्यादिके कर्तव्ये प्रथमं भूमिः, तद्वत्काव्ये निर्मातव्ये भूमिकल्पः शब्दच्छन्दोविधिः क्षेत्रपरिग्रहं वृत्तसमाश्रयमित्यादि विरचयन् भित्तिस्थानीयं लक्षणयोजनं चित्रकर्मप्रतिममलङ्कारगुणनिवेशनं गवाक्षवातायनादिदेशीयो दशरूपकविभागः उपयोगनिरूपणाप्रख्या काक्वादिप्लुतिः, एवंभूतवाचिकाभिनयस्वरूपं चतुर्दशादिभिः षड्भिरध्यायैरुच्यते । तत्राध्यायद्वयं वृत्तलक्षणविधानं तु भविष्यति ।

उनमें चार से पांच का गुणन करने पर बीस और फिर बीस को चार से गुणा करने पर अस्सी ( ८० ) भेद होते हैं। फिर अस्सी को चार से गुणा करने पर तीन सौ बीस ( ३२० ) भेद होते हैं। इसी प्रकार आगे भी समझना चाहिए। उसी को कहते हैं—

"आर्या शतसहस्राणि ज्ञेया ह्येकान्नविंशतिः ।
अष्टौ कोट्यः सहस्राणि विंशतिश्च प्रमाणतः ॥"

आर्या गीति में प्रथमार्द्ध के समान उत्तरार्द्ध में भी षष्ठ गण के दो भेद होते हैं ॥ १९५ ॥

अब अध्याय का उपसंहार करते हुए भावी विषय को आसूत्रित करते हैं -

**अनुवाद—इस प्रकार नाना छन्दों से समुद्भूत विभिन्न वृत्तों के द्वारा काव्यबन्धों को छत्तीस लक्षणों से युक्त करना चाहिए ॥ १९६ ॥**

इस प्रकार भारतीय नाट्यशास्त्र में 'छन्दो विचिति' नामक पन्द्रहवा अध्याय समाप्त हुआ ॥ १५ ॥

इस पर डा० पारसनाथद्विवेदीकृत हिन्दी व्याख्या में पन्द्रहवां अध्याय समाप्त हुआ ।

१. ग. एवं चतुर्विधंवृत्तैः ।    २. ग. छन्दोवृत्तविधिः ।

३. ख. षोडशोऽध्यायः ।

यद्यपि रूपकविरचनकाले परिपक्वप्रज्ञस्य न क्रमप्रतिभासस्तथाप्यपोद्धारधिया कल्प्यत इत्याहुः। प्रबन्धस्य यो युक्तोऽभ्यासः तन्निष्पत्तिः प्रबन्धाभ्यासः तत्संपत्तिः अभिनेयार्थनिर्वर्तनं तदभिनयोपारोहणमिति स एव क्रम इत्युपाध्यायः यदाहुः—

> महाकवीनां पदवीमुपात्तामारुरुक्षताम् ।
> नासंस्मृत्य पदस्पर्शान्संपत्सोपानपद्धतिः ॥ इत्यादि ॥

---

अभिनव—'काव्यबन्ध' कहने का अभिप्राय यह है कि जिस प्रकार प्रासाद ( महल ) के दीवाल आदि के निर्माण में पहले भूमि की अपेक्षा होती है उसी प्रकार काव्य के निर्माण में भूमि-कल्प छन्दों की विधि होती है। इस प्रकार क्षेत्र के परिग्रह के रूप में वृत्तों का समाश्रयण करते हुए भित्ति-स्थानीय लक्षण की योजना, चित्रकर्म के समान अलङ्कार एवं गुणों का निवेश, गवाक्ष, वातायन के समान दशरूपक का विभाग, प्रयोग के निरूपण के सदृश काकु, स्वर आदि की प्लुति—इस प्रकार के वाचिक अभिनय के स्वरूप को चौदहवें अध्याय से लेकर छः अध्यायों में कहते हैं। उनमें दो अध्यायों में वृत्त-लक्षण का विधान होगा।

यद्यपि रूपक के रचना-काल में परिपक्व बुद्धि वाले सहृदय को क्रम का प्रतिभास नहीं होता, तथापि अपोद्धार बुद्धि से उसकी कल्पना को जाती है, ऐसा कहा जाता है। प्रबन्ध-निर्माण के समय उचित अभ्यास की निष्पत्ति प्रबन्धाभ्यास है। उसकी सम्पत्ति का अभिप्राय है अभिनेय अर्थ का निवर्त्तन अर्थात् अभिनय के लिए आधार तैयार करना। इसी को 'क्रम' कहते हैं, यह उपाध्याय जी का मत है, जैसा कि कहा गया है—

"काव्य-निर्माण में प्राप्त महाकवियों की पदवी पर आरोहण करने की इच्छा रखने वाले विद्वान् जब तक पदों का स्पर्श नहीं करेंगे तब तक सोपान-मार्ग पर आरोहण का क्रम कैसे सम्पन्न होगा ?"

क्रमोल्लङ्घने हि सति नाटकादिविरचयतां महान्तः प्रमादापभ्रंशा भवन्ति। न हि सर्वो वाल्मीकिर्व्यास: कालिदासो भट्टेन्दुराजो वा, तेषामपि प्राग्जन्मार्जितेन क्रमाभ्याससमुदितसंस्कारपाटवोत्पादितः कुलप्रतिभङ्गज्ञानातिशय इति शिवम् ॥ १९५ ॥

इति पञ्चदशाध्याये ध्यायिना परमेश्वरम्।
कृताभिनवगुप्तेन गुप्तार्थं—प्रकटीक्रिया ॥
इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेद-
विवृतावभिनवभारत्यां वृत्तविधिर्नाम
पञ्चदशोऽध्यायः।

●

क्रम का उल्लंघन होने पर नाटक आदि का निर्माण करने वालों का महान् प्रमाद एव क्षति हो सकती है; क्योंकि सभी बाल्मीकि, व्यास, कालिदास अथवा भट्टेन्दुराज की तरह नहीं होते। उनके भी पूर्व जन्म में अर्जित किये गये क्रम पूर्वक अभ्यास से उत्पन्न संस्कार के पाटव से उत्पन्न कुल परम्परागत प्रतिभा के अङ्गभूत ज्ञान को अतिशय रहता है।

"इस प्रकार पन्द्रहवें अध्याय में परमेश्वर का ध्यान करने नाले अभिनवगुप्तपादाचार्य ने गूढ़ अर्थ को प्रकट करने वाली क्रिया को कर दिया।" ॥ १५ ॥

इति डा० पारसनाथद्विवेदिविरचितायामभिनवभारत्या हिन्दी व्याख्यायां पञ्चदशोऽध्यायः समाप्त ॥ १५ ॥

इस प्रकार डॉ० पारसनाथद्विवेदीकृत अभिनवभारती की हिन्दी व्याख्या में पन्द्रहवां अध्याय समाप्त हुआ ॥ १५ ॥

●

# [1]षोडशोऽध्यायः

## अभिनवभारती

विचित्रं रूपकभुवां लक्षणं भूषणं भुवः।
भास्यते येन तं वन्दे प्राच्यधीसाधितं शिवम् ॥

ननु काव्यबन्धास्तु कर्तव्याः इत्युक्तं, तत्र गुणालङ्कारादिरिति वृत्तयश्चेति काव्येषु प्रसिद्धो मार्गो, लक्षणानि तु प्रसिद्धानि। किं च पुरुषस्येव काव्यस्य लक्षणगुणालङ्कारव्यवहारो न युक्तः, पुरुषस्य शरीरचैतन्यभेदात् कटकादीनां ततोऽपि भेदात्। काव्यस्य पुर्नाविरचनकाले प्रतिपत्तिकाले प्रापकसत्तायां तेषामगणितत्वाच्च। दण्डिनापि—

## अभिनव-भारती

इस अध्याय में छत्तीस लक्षणों के निदर्शक अंश के दो पाठ मिलते हैं। उनमें एक पाठ को टीकाकारों ने स्वीकार किया है जिसका अनुसरण कीर्तिधर, धनञ्जय, सर्वेश्वर प्रभृति आचार्यों ने किया है। दूसरा पाठ प्राचीन व्याख्याकारों ने ग्रहण किया है जिसका अनुसरण विश्वनाथ, सिंहभूपाल आदि आचार्यों ने किया है। भोजराज ने दोनों पाठों में समानता और विषमता को ग्रहण कर अन्य बारह को और मिलाकर चौसठ लक्षणों का विवेचन किया है। शारदातनय ने उन्हीं के मत का अनुसरण किया है। अतः वृत्तिकार के प्रथम पाठ के अनुसार अध्याय को समाप्त कर द्वितीय पाठ को निर्वचन और उदाहरण के साथ अध्याय के अन्त में अनुबन्ध में दिया गया है।

**अभिनव**—रूपकादि अलङ्कारों के स्थान काव्य रूपी नायिका के अलङ्कार सदृश विचित्र लक्षण जिसके द्वारा भासित होते हैं उस प्राच्य विद्वानों की बुद्धि से साधित शिव को वन्दना करता हूँ॥

**अभिनव**—पिछले अध्याय के अन्त में छत्तीस लक्षणों से समन्वित काव्य-रचना करनी चाहिए' यह कहा गया है। अब प्रश्न होता है कि गुण, अलङ्कार, रीति, वृत्ति आदि काव्य में प्रसिद्ध मार्ग हैं, किन्तु लक्षण प्रसिद्ध नहीं हैं। व्यवहार में तो पुरुष को लक्षण, गुण, एवं अलङ्कारों से सम्पन्न होना उपयुक्त माना गया है,

१. ख, अथ सप्तदशोऽध्यायः।

"काव्यशोभाकरान्धर्मानलङ्कारान्प्रचक्षते"

इति ब्रुवता गुणमध्य एव तत्र प्रसादादीनभिदधता च गुणालङ्कारविभागोऽप्यसंभवीति सूचितं भवति। सत्यमेतत्, किं तु कवीनां काव्यविरचनविवेचनसामर्थ्यसमर्थनायावश्यं काल्पनिकोऽपि विभाग आश्रयणीयः। तत्र कल्पनायां विप्रतिपत्तयः केचिदाहुः—इह गुणास्तावदात्मनि चिन्मये शृङ्गारादौ वर्तन्ते शृङ्गारे चावश्यं लक्ष्यत इति पृथक्सिद्धत्वालङ्कारः, शरीरनिष्ठमेव यत्पदं पृथक्सिद्धं तल्लक्षणम्, येन शरीरस्य सौन्दर्यं जायते। तच्च सिद्धरूपं साध्यरूपं वा यथा श्यामेति, 'मदमन्थरगामिनी' इति च। एतदेव लक्षणं, तच्चालंक्रियते। अलङ्कारैर्युक्तं काव्यं लक्षणैर्विना न शोभते। उपमानोपमेयगतक्रियाक्रियरूपधर्मभेदेन तदेतल्लक्षणं द्विधेति—यथा 'श्यामा विशालाक्षी', मत्तमातङ्गगामिनी इति च।

---

किन्तु पुरुष के समान काव्य में लक्षण, गुण एवं अलङ्कारों का व्यवहार युक्त नही है। किन्तु पुरुष का शरीर चेतन आत्मा से भिन्न होने के कारण कटक, कुण्डल आदि का इससे भेद है। किन्तु काव्य के निर्माण काल में या अनुभूति-काल में प्रापक-सत्ता में उसकी गणना नहीं की जाती। दण्डी ने भी—

"काव्य में शोभा बढ़ाने वाले धर्मों को अलङ्कार कहा है"

इस प्रकार कहते हुए गुणों का मध्य में प्रसाद आदि का अभिधान करते हुए यह सूचित किया है कि गुण एवं अलङ्कारों का विभाग करना असंभव है। यह बात सत्य है किन्तु कवियों के काव्य-रचना करने और सहृदयों के विवेचन सामर्थ्य के समर्थन के लिए काल्पनिक विभाग का आश्रयण करना चाहिए। किन्तु उस कल्पना में कुछ आचार्य विप्रतिपत्तियाँ प्रस्तुत करते हैं। उनका कहना है कि गुण तो चिन्मय आत्म-स्वरूप शृङ्गारादि रसों में रहते हैं, अतः शृङ्गारादि में उन्हें अवश्य लक्षित करना चाहिए। इससे अलङ्कारों का पार्थक्य सिद्ध होता है और शब्दार्थ रूप शरीर में जो पद पृथक् सिद्ध हैं वह लक्षण है जिससे शरीर का सौन्दर्य बढ़ता है और वह सिद्ध रूप भी होता हैं और साध्य रूप भी। जैसे—'श्यामा षोडश वार्षिकी' यह सिद्ध रूप है और 'मदमन्थरगामिनी' अर्थात् 'मद से मन्थर-गति वाली' यह क्रियारूप होने से साध्य है। यही लक्षण है। फिर भी वह अलङ्कारों को धारण करती है। प्रकृत में अलङ्कारों से युक्त होने पर भी काव्य लक्षणों के बिना सुशोभित

अन्ये मन्यन्ते—इतिवृत्तखण्ड [ल] कान्येव सन्ध्यङ्गकानि वृत्त्यङ्गकानि लक्षणानीति च व्यपदिश्यन्ते । निमित्तभेदात् पूर्वापरसंबन्धेन बीजरूपेणो पक्षिप्तेऽर्थे निर्वहणे फलतां गते परस्परसन्धायकत्वात् सन्ध्यङ्गतया व्यपदेशः, रस-विशेषोपयोगितया वृत्त्यङ्गवाचोयुक्तिः, काव्यगतख्यातिप्राशस्त्योपयोगितया महा-पुरुषगतपाशध्वजादिपादरेखावल्लक्षणशब्दवाच्यता । तदुक्तं तत्रैव—

लक्षणान्येव बीजार्थक्रमनिर्वाहकानि च ॥ इति ।
प्रतिसन्धितदङ्गानि फलसिद्ध्युपपत्तितः ॥ इति ।

काव्ये धीरोदात्तादिगुणाधानं वस्तुवर्णनाभङ्गिर्वेति केचित् ।

---

नहीं होता । उपमानोपमेयगत क्रिया ( साध्य ) अक्रिया ( सिद्ध ) रूप धर्म भेद से यह लक्षण भी दो प्रकार का होता है जैसे—( श्यामा विशालाक्षी' ( यह श्यामा षोडशवर्षीया विशाल नेत्रों वाली है ) में द्रव्य ( अक्रिया ) रूप धर्म है और 'मत्तमातङ्गगामिनी' में क्रिया रूप धर्म है ।

अन्य आचार्यों का मत है कि इतिवृत्त के अंशों को ही सन्ध्यङ्ग, वृत्यङ्ग एवं लक्षण कहते हैं । निमित्त भेद से पूर्वापर सम्बन्ध से बीज रूप में उपक्षिप्त और निर्वहण में फलरूप में प्राप्त होने वाले अर्थ में परस्पर सन्धायक होने से सन्ध्यङ्गों का व्यपदेश होता है। अर्थात् सन्ध्यङ्ग कहलाता है' और वही अर्थ रस-विशेष के उपयोगी होने से वृत्यङ्ग कहलाता है और वही अर्थ काव्यगत महापुरुष को ख्याति एवं प्रशस्ति के उपयोगी होने से पाश, ध्वज, चक्र आदि पादगत रेखा के समान लक्षण कहलाता है । जैसा कि कहा गया है—'बीज रूप अर्थ का क्रम से निर्वाह करने वाला लक्षण ही है ।'

'फल सिद्धि की उपपत्ति के कारण वहीं प्रत्येक सन्धि का अङ्ग है ।'

कुछ अन्य आचार्यों का मत है कि धीरोदात्त आदि नायकों में गुणों का आधान करने वाले वस्तु का वर्णन-शैली ही लक्षण है ।

तदत्र प्रथमपक्षे वर्णनीयप्रधानभूताधिकारिपुरुषगतगुणादिविभाग एव काव्ये पर्यवसीयते । द्वितीयपक्षे तु वर्णनीयः सकल एवेति । वृत्तिलक्षणोऽर्थः काव्य-भेदात् त्रिधा विभज्यते । एकेषां तु दर्शनं—कवेर्यः प्रतिभात्मा प्रथमपरिस्पन्दः तद्व्यापारबलोपनता गुणाः, प्रतिभावत एव हि रसाभिव्यञ्जनसामर्थ्यं माधुर्यादिरुप-निबन्धनसामर्थ्यं न सामान्यकवेः । अनेन शब्देनेदं तु वर्णयामीत्येवंभूतवर्णनापर-पर्यायद्वितीयव्यापारसंपाद्यास्त्वलङ्काराः ।

शब्दानमीभिः शब्दैरर्थानमीभिरर्थैः संघटयामीत्येवमात्मकस्तु यस्तृतीयः कवेः परिस्पन्दः तदधीनात्मलाभादिशब्दार्थात्मककाव्यशरीरसंश्रितानि वक्ष्यमाणश्लेषादि-गुणदशकसमभिव्यञ्जनव्यापाराणि शब्दार्थोपसंस्कारकल्पानि क्रियारूपाणि लक्षणा-नीति, तदुक्तं तत्रैव—

---

इनमें प्रथम पक्ष में वर्णनीय प्रधानभूत अधिकारी पुरुषों में गुणादि का विभाग ही काव्य में पर्यवसित होता है। द्वितीय पक्ष में सभो वर्णनीय है। वृत्ति लक्षण रूप अर्थ काव्य-भेद से तीन प्रकार से विभक्त होता है। एक प्रकार के लोगों का मत है कि कवि का जो प्रतिभा रूप प्रथम परिस्पन्द है, उस प्रतिभारूप व्यापार के बल से गुण उपनत होते हैं। क्योंकि रसादि के अभिव्यञ्जन का सामर्थ्य और माधुर्यादि गुणों के उपनिबन्धन का सामर्थ्य प्रतिभावान् कवि का ही सामर्थ्य है, सामान्य कवि का नहीं। इस शब्द से इस वस्तु का वर्णन करूँगा' इस प्रकार का वर्णनापरपर्याय द्वितीय ब्यापार से संपाद्य अलङ्कार हैं अर्थात् उनसे अलङ्कारों का सम्पादन करना चाहिए।

'इन शब्दों से इन शब्दों की और इन अर्थों के साथ इन अर्थों को संघटना ( रचना ) करूँगा' इस प्रकार का कवि का जो तृतीय परिस्पन्द ( व्यापार ) है, उसी के अधीन शब्दात्मक और अर्थात्मक काव्य-शरीर का लाभ होता है। शब्दार्थोभय संस्कारकल्प ये क्रिया रूप लक्षण वक्ष्यमाण श्लेषादि दस गुणों का अभिव्यञ्जन इनका व्यापार है।

इति शब्दार्थयोर्येयं संश्रितिर्देहभूतयोः ।
काव्ये तया दर्शितानि लक्षणानि विदुर्बुधाः ॥ इति ।
काव्येऽप्यस्ति तथा कश्चित् स्निग्धः स्पर्शोऽर्थशब्दयोः ।
यः श्लेषादिगुणव्यक्तिदक्षः स्याल्लक्षणस्थितः ॥ इति ।
चेष्टालङ्कारदृष्टान्तचिह्नं ‥‥ ‥‥ ॥ इति च

अत्र पक्षे कविव्यापारभेदाद् गुणालंकारलक्षणविभागः ।

अपरे सङ्गिरन्ते—अभिनेयानां काव्यबन्धानां वक्ष्यमाणस्वरूपं च रूपकं समभिदध्यात्, कवेः स्वसामर्थ्याधानाय तावदभ्यासो निर्माणविषयो लक्षणं, यस्तथाऽसंपूर्णश्चादौ, क्रमेण तु तथाभूतोऽभिनेयार्थः काव्यबन्धो लक्षणोन्नीतः तेन च लोकोत्तरहृद्यवर्णनयोगात्, तथा हि किञ्चित् प्रबन्धजातं गुणालङ्कारनिकरप्रधानं, यथा मेघदूताख्यं तद्विभूषणम्, एवमन्यदपि, इति ।

---

जैसाकि कहा है—

"इस प्रकार काव्य के शरीर रूप शब्द और अर्थ का जो यह संश्रयण है, काव्य में उसी प्रकार लक्षण दिखाये हैं, ऐसा विद्वान् लोग जानते हैं ।"

'काव्य में भी शब्द अर्थ का ऐसा कोई स्निग्ध स्पर्श है जो श्लेषादि गुणों की अभिव्यक्ति कराने में दक्ष है, यही लक्षण है"

'चेष्टा, अलङ्कार, दृष्टान्तों में दिखाई पड़ने वाला चिह्न है, लक्षण है ।'

इस पक्ष में कवि-व्यापार भेद से गुण, अलङ्कार एवं लक्षण का विभाग है ।

दूसरे लोग कहते हैं कि अभिनेय काव्य-प्रबन्धों के वक्ष्यमाण स्वरूप रूपक को जो कहे, इस प्रकार रूपक निर्माण में कवि के सामर्थ्य के अभिधान करने के लिए जो आयास है वही लक्षण है । जो लक्षण आदि में असम्पूर्ण है । क्रमशः उस अभ्यास के द्वारा लोकोत्तर हृद्य वर्णन के योग से तथाभूत ( सम्पूर्ण ) अभिनेय अर्थ लक्षणों के द्वारा उन्नत काव्य प्रबन्ध हो जाता है तथा कुछ प्रबन्धों से गुण एवं अलङ्कारों का प्राधान्य रहता है । जैसे मेघदूत काव्य । यह काव्यों का आभूषण है । इसी प्रकार अन्य भी है ।

'प्रबन्धधर्मा लक्षणानि' इति केचित्तु ब्रुवते। कवेरभिप्रायविशेषो लक्षणमितीतरे पुनर्मन्यन्ते। केचिद् यथास्थानविशेषं यद् गुणालङ्कारयोजनं तल्लक्षणमिति।

परे त्वभावन्त—अलङ्कारादिनिरपेक्षेणैव निसर्गसुन्दरो योऽभिनेयविशेषः काव्येषु दृश्यते, अमरुकश्लोकेष्वपि, तत्सौन्दर्यहेतुर्यो धर्मः सुलक्षणः स एव चार्थः काव्यशरीरविशेषरूपो लक्षणम्। उपमादीपकरूपकाणामानन्त्याद् भेदमाहुः। अन्ये तु शब्देन अर्थेन चित्रत्वं लक्षणमिति।

इतरेषां तु मतं यथा तन्त्रप्रसङ्गबाधातिदेशादि मीमांसाप्रसिद्धं वाक्यविशेषव्यवच्छेदलक्षणं तथा काव्यविशेषव्यवच्छेदकं भूषणादिलक्षणजातमिति त्वयं पक्षो द्वितीयपक्षान्न भिद्यते। एतेषु तु पक्षेष्वन्यतमग्रहे विशेषणानि न सङ्गच्छन्ते स्पष्टेन यथा। इदं तु दशपक्ष्यां वस्तु।

'प्रबन्ध के धर्म लक्षण हैं' ऐसा कुछ लोग कहते हैं। 'कवि का अभिप्राय विशेष लक्षण है' ऐसा अन्य लोग कहते हैं। कुछ आचार्य यथा स्थान अर्थात् जिसका जो स्थान है उस स्थान विशेष में जो गुण एवं अलङ्कारों की योजना है वही लक्षण है।

अन्य लोग तो कहते हैं कि अलङ्कारादि की अपेक्षा किये बिना स्वभाव से ही सुन्दर जो अभिनेय विशेष काव्य में दिखाई देता है जैसा कि अमरुक के श्लोकों में। वही सौन्दर्य का हेतु जो धर्म सुलक्षित है, वही काव्य-शरीर विशेष रूप अर्थ लक्षण है। उपमा, रूपक, दीपक आदि अलङ्कारों के अनन्त रूप होने से अनन्त भेद हैं। अन्य लोग तो शब्द और अर्थ से उत्पन्न चित्रत्व ही लक्षण है, ऐसा कहते हैं।

दूसरों का मत है कि जैसे मीमांसाशास्त्र में तन्त्र प्रसङ्ग के बाध एवं अतिदेश आदि वाक्य विशेष के व्यवच्छेदक लक्षण प्रसिद्ध हैं वैसे ही काव्य विशेष के व्यवच्छेदक भूषणादि लक्षण हैं, यह पक्ष द्वितोय से भिन्न नहीं है। यदि इन पक्षों में से एक पक्ष के ग्रहण करने पर विशेषण स्पष्ट सङ्गत नहीं होंगे, यह दश पक्षों की वस्तु है।

इह काव्यार्थी रसा इत्युक्तं प्राक् । उक्तं च वर्णनीयं शब्दनीयं कवेः कर्मेति च व्युत्पत्तित्रयं कविमिति काव्यमिति च । अनेनाभिधेयम्, अभिधानम्, अभिधाञ्च स्वीकृत्यावस्थीयते, अपि च शब्दव्यापारोऽभिधातृव्यापारः प्रतिपाद्यव्यापारश्चेति त्रिगतः । तत्र शब्दस्य रसाभिव्यक्तिक्षमार्थप्रतिपादकत्वं स्वतः च श्रोत्रे च संक्रान्ति-मात्रं नान्तरीयकतया, तद्रसदर्शनयोग्यतापादनसामर्थ्याद् गुणवाच्यम्, आवर्तमानो द्वितीयो वर्णः पदं वा प्राक्तनवर्णपदशोभाहेतुरलङ्कारः । एवमर्थस्यापि, यद्रसाभि-व्यक्तिहेतुत्वं सोऽर्थगुणः । यस्तु वस्त्वन्तरं वदनस्येव चन्द्रः सोऽलङ्कारः, यस्तु त्रिविधोऽप्यभिधाव्यापारः स लक्षणानां विषयः ।

तथाहि—इदमनेन शब्देनानयेतिकर्तव्यतयाऽमुनाशयेनेत्थंभूतबुद्धिजननाय ब्रुवे इति कविः प्रवर्तते, स यथा—भूतः रसवत्काव्यं विधत्ते । तत्र चित्त-वृत्यात्मकं रसं लक्षयंस्तत्तद्रसोचितविभावादिवैचित्र्यासम्पादकस्त्रिविधोऽभिधा-व्यापारो लक्षणशब्देनोच्यते । इत्येषां सामान्यलक्षणम् । यथा च पीवरत्वं स्तनयोर्लक्षणं, मध्यस्य तु कुलक्षणं, एवं किञ्चिदभिधीय मानं केनचिद्रूपेण रसोचितेन विभावादिरूपेण तमेव पदार्थक्रमं लक्षयल्लक्षणम्, अन्यत्र तु तत्कुलक्षणं, तेन सर्वेऽङ्कारा गुणाश्च तत्समुदायाद्विलक्षणा भवन्ति ।

---

यहाँ काव्यार्थ ही रस है, यह पहिले कहा जा चुका है और यह भी कहा है कि वर्णनीय अर्थ वाला काव्य है, और 'कु' धातु से निष्पन्न शब्दनीय काव्य है तथा 'कवेः कर्म' इस विग्रह में अण् प्रत्यय होकर 'कवि' बनता है और काव्य भी । इस प्रकार तीन व्युत्पत्तियाँ है । इससे अभिधेय अर्थ, अभिधान शब्द और अभिधा को स्वीकार करके अवस्थित होता है। और भी शब्द का व्यापार शब्द में, अभिधा का व्यापार अभिधा में और प्रतिपाद्य का व्यापार अर्थ में, यह तीन प्रकार का व्यापार है। उनमें शब्द रसाभिव्यक्ति में सक्षम अर्थ का प्रतिपादक है और स्वतः ही श्रोत्र में सङ्क्रमण करता है। वह रस-दर्शन की योग्यता के प्रतिपादन सामर्थ्य से गुण पद का वाच्य है वही आवर्त्तमान द्वितीय वर्ण अथवा पद रूप शब्द पूर्ववर्त्ती वर्ण और पद की शोभा का हेतु शब्दालङ्कार है। इसी प्रकार अर्थ के सम्बन्ध में भी समझना चाहिए, जो रसाभिव्यक्ति का हेतु है वह अर्थ गुण है । जो दूसरी वस्तु को अलङ्कृत करता है, जैसे चन्द्रमा मुख को, वह अलङ्कार है। जो तीन प्रकार का अभिधा व्यापार है वह लक्षण का विषय है ।

तथा क्वचिदर्थमात्रं क्वचिदलङ्कारोऽर्थः क्वापि चित्रतः। क्वचिदलङ्कारादिप्रक्रियाविहीनोऽपि स्वयं सुन्दरस्वभावोऽर्थः कुत्रचिच्छन्द, इति त्रिविधव्यापारगामी, तद्द्वारेणाभिधानाभिधेयतद्गुणालङ्काराद्यनुग्रहः शब्दानां शब्दैरर्थानामर्थैः शब्दानामर्थैस्तथापरैः संघटनां विचित्रां कारयमाणाभिधाव्यापारवती ह्युक्तिनिर्वाणप्रधानधुराधिरोही लक्षणाख्य एव। अत एव पूर्वं "काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लणान्विताः" इति लक्षणान्येव हि प्रधानं तत्प्रसङ्गेन गुणालङ्कारा इति तात्पर्यम्। विशेषलक्षणव्याख्याने चैतत्स्फोटयिष्यामः।

---

और भी इस शब्द से, इस इतिकर्त्तव्यता से, इस आशय से इस प्रकार की बुद्धि उत्पन्न करने के लिए इस अर्थ को कहता हूँ, इसलिए जो कवि प्रवृत्त होता है, वह कवि उस प्रकार का रस-विशिष्ट काव्य की रचना करता है। वहाँ जो चित्तवृत्यात्मक रस को लक्षित करता हुआ उन उन रसों के योग्य विभावादि-वैचित्र्य का सम्पादन करता है वह त्रिविध अभिधा-व्यापार लक्षण शब्द से कहा जाता है। यह इनका सामान्य लक्षण है, जैसे पीनत्व स्तनों का लक्षण है किन्तु वह कटिभाग का कुलक्षण है। इस प्रकार किसी रूप से अभिधीयमान वस्तु रस के उचित विभावादि रूप से उसी पदार्थ के क्रम लक्षित करती है, वह लक्षण है, अन्यत्र वही कुलक्षण है, इसलिए सभी अलङ्कार और सभी गुण उस समुदाय से विलक्षण होते हैं।

और स्वार्थ भी कहीं अर्थतः केवल अर्थ रूप है तथा कहीं पर चित्रतः अलङ्कार है। कहीं पर अलङ्कारादि की प्रक्रिया से रहित भी अर्थ स्वयं स्वभाव से सुन्दर होता है और कहीं पर छन्द है। इस प्रकार त्रिविध व्यापारगामी है। उसी के द्वारा अभिधान, शब्द एवं अभिधेय अर्थ और उनके गुण, अलङ्कारों का अनुग्रहण होता है। शब्दों का शब्दों के साथ, अर्थों का अर्थों के साथ और शब्दों का अर्थों के साथ विचित्र संघटना को करा देने वाली अभिधा व्यापारवती उक्ति ही निर्वाण प्रधान धुराधिरोही लक्षण ही है। इसलिए पहिले कहे गये 'काव्यबन्धास्तु कर्त्तव्याः षट्त्रिंशल्लक्षणान्विताः' लक्षण ही प्रधान है, गुण और अलङ्कार तो उसके प्रसङ्ग से प्राप्त होते हैं। विशेष लक्षणों के व्याख्यान के अवसर पर इसे स्पष्ट करेंगे।

[1]विभूषणं चाक्षरसंहतिश्च शोभाभिमानौ गुणकीर्तनं च।
प्रोत्साहनोदाहरणे निरुक्तं गुणानुवादोऽतिशयश्च हेतुः ॥ १ ॥

---

तत्र लक्षणान्युद्देष्टुं तावदाह विभूषणमित्यादि यथारसं त्वित्यन्तेन श्लोक-चतुष्टयेन।

---

अब पहिले लक्षणों को नाम मात्र से कथन करने के लिए 'विभूषणम्' इत्यादि से लेकर 'यथारसं' पर्यन्त चार श्लोकों से कहते हैं।

---

१. इतः प्रारम्भ श्लोकचतुष्टं ग्रन्थान्तरेषु सर्वथा पाठो भिद्यते यथा—
भूषणाक्षरसंघातौ शोभोदाहरणो तथा।
हेतुसंशयदृष्टान्ताः प्राप्तभिनय एव च ॥ १ ॥
निदर्शनं निरुक्तं च सिद्धिश्चाथ विशेषणम्।
गुणातिपातातिशयौ तुल्यतर्कः पदोच्चयः ॥ २ ॥
दृष्टं चैवोपदिष्टं च विचारस्त द्विपर्ययः।
अंशश्चानुनयो माला दाक्षिण्यं गर्हणं तथा ॥ ३ ॥
अर्थापत्तिः प्रसिद्धिश्च पृच्छा सारूप्यमेव च।
मनोरथश्च लेशश्च क्षोभोऽथ गुणकीर्त्तनम् ॥ ४ ॥
ज्ञेयान्यनुक्तसिद्धिश्च प्रियं वचनमेव च।
षट्त्रिंशल्लक्षणान्येवं काव्यबन्धेषु निर्दिशेत् ॥ ५ ॥

क. (टि०) अस्मिन्नध्यायेषट्त्रिंशल्लक्षणसमुद्देशनिर्देशयोगुंणदशकस्य लक्षणे च द्विविधः पाठो दृश्यते। तत्र वृत्तिकारेणैकः पाठो गृहीतः।
कीर्तिधरधनञ्जयसर्वेश्वरादिभिश्च स एव प्रमाणीकृतः। भिन्नः पाठश्चिरन्तनैः कश्चिद् व्याख्यातृभिः पठितः। स च विश्वनाथसिंहभूपालादिभिरनुसृतः। वृत्तिकारस्तेषां वैषम्यपरिहरणाय नामनिर्वचनयोर्भिन्नानास्थापयत्।
भोजदेवस्तूभयोः पाठयोः समानानि भिन्नानि च गृहीत्वान्यानि द्वादश संकलय्य चतुष्षष्टिलक्षणानि नामनिर्देशनाभ्यां प्रापञ्चयत्। तन्मतमेव शारदातनयेनानुसृतम्। अतः प्रथमं वृत्तिकारपाठविलसितमध्यायं समाप्यानुबन्धरूपेण पाठान्तरभागो निर्वचनोदाहरणसहितो महामतीनां चित्तबिलासोद्योतनाय सूक्ष्मविषयाविवेचनलालसानां हिताय च सम्प्रयोजितोऽध्यायान्ते यथा लब्धग्रन्थपरिकरः। (अभिनवभारती टिप्पणी)

सारूप्यमिथ्याध्यवसायसिद्धिपदोच्चयाक्रन्दमनोरथाश्च ।
आख्यानयाच्ञाप्रतिषेधपृच्छादृष्टान्तनिर्भासनसंशयाश्च ॥ २ ॥
आशीः प्रियोक्तिः कपटः[1] क्षमा च ।
प्राप्तिश्च पाश्चात्तपनं तथैव[2] ॥
[3]अर्थानुवृत्तिर्ह्युपपत्तियुक्तौ ।
कार्योऽनुनीतिः परिदेवनं च ॥ ३ ॥
षट्त्रिंशदेतानि हि लक्षणानि ।
प्रोक्तानि वै भूषणसंमितानि ॥
काव्येषु [4]भावार्थगतानि तज्ज्ञैः ।
सम्यग् प्रयोज्यानि यथारसं तु[5] ॥ ४ ॥

---

अनुवाद—१. विभूषण, २. अक्षर संहति, ३. शोभा, ४. अभिमान, ५. गुण-कीर्त्तन, ६. प्रोत्साहन, ७. उदाहरण, ८. निरुक्त, ९. गुणानुवाद, १०. अतिशय, ११. सहेतु, १२. सारूप्य, १३. मिथ्याध्यवसाय, १४. सिद्धि, १५. पदोच्चय, १६. आक्रन्द, १७. मनोरथ, ६८. आख्यान, १९. याच्ञा, २०. प्रतिषेध २१. पृच्छा, २२. दृष्टान्त, २३. निर्भासन, २४. संशय, २५. आशी, २६. प्रियोक्ति, २७. कपट, २८. क्षमा, २९. प्राप्ति, ३०. पाश्चात्ताप ३१. अथानुवृत्ति, ३२. उपपत्ति, ३३. सूक्ति, ३४. कार्य, ३५. अनुनीति, ३६. परिदेवन: ये छत्तीस लक्षण भूषण (अलङ्कार) के सदृश कहे गये है। काव्यों में भावार्थगत रसो के अनुसार इनका प्रयोग करना चाहिए ॥ १-४ ॥

---

१. क. (टि०) कपटक्षमे । २. क. (टि०) ग्रहश्च ।

३. क. (टि०) अर्थानुवृत्ती उपपत्तियुक्तो ।

४. क. टि०) सोदाहरणेषु ।

५. क. (टि०) यथारक्षानि ।

यथारसं ये भावा विभावानुभावव्यभिचारिणः, तेषां योऽर्थः तं स्थायि-भावरसीकरणात्मकं प्रयोजनान्तरं गतानि प्राप्तानि, यदभिधाव्यापारोपसंक्रान्ता उद्यानादयोऽर्थास्तद्रसविशेषभावाविभावं प्रतिपद्यन्ते तानि लक्षणानीति सामान्य-लक्षणम् । अत एव काव्ये सम्यक्प्रयोज्यानीति विषयस्तेषामुक्तः ।

भट्टनायकेनापि तानेव शिक्षित्वा अभिधाव्यापारप्रधानं काव्यमित्युक्तं—

शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत् ॥ इति ॥

भामहेनापि—

"सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते" (२-७५) इत्यादि ।

---

अभिनव—यथारसमिति—जो भाव, विभाव अनुभाव, व्यभिचारीभाव है, उनके जो अर्थ हैं वे स्थायीभाव को रस रूप में परिणत करने रूप प्रयोजनान्तर को प्राप्त होते हैं और जो अभिधा-व्यापार से उपसङ्क्रान्त उद्यान आदि अर्थ हैं और जो रस विशेष के विभावादि भाव को प्राप्त होते हैं, वे लक्षण हैं, यह सामान्य लक्षण है । इसलिए काव्य में उनका सम्यग् रूप से प्रयोग करना चाहिए । इस प्रकार उनके विषय को कह दिया है ।

भट्टनायक ने भी उन्हीं की शिक्षा देकर अभिधा-प्रधान व्यापार को काव्य कहा है—

"जहाँ शब्द की प्रधानता होती है उसे विद्वान् लोग औरों से पृथक् शास्त्र कहते हैं ।"

"जहाँ अर्थ की प्रधानता होती है, उसे आख्यान कहते हैं ।"

"और जहाँ पर शब्द और अर्थ दोनों गुणीभूत होते हैं तथा व्यापार की प्रधानता होती है, उसे 'काव्य' कहते हैं ।"

भामह ने भी कहा है—

"यह वक्रोक्ति ही सर्वत्र है, इसी के द्वारा अर्थ विभावित होते हैं ।"

तेन च परमार्थतः व्यापार एव लक्षणं, स तु विषयद्वारेण विशेषलक्षणे तु निरूप्यत इति तत्स्वीकृतत्वादर्थोऽपि लक्षणं, व्यापारोऽपि च तद्विदां तु तदभ्यासपराणां च तथाभूतकाव्यात्मकविषयावलोकने झटित्येव प्रतिभाति। तदन्यत्रानुमानेन प्रतिभया स्वसंवेदना इत्यनेन प्रयोजनम्। कुशलशिक्षितव्यापारो हि तत्काव्यज्ञदृशि भात्येव ॥ १।२।३ ॥

षट्त्रिंशदिति च नान्यदिति वारणपरं कविहृदयवर्तिनामपराणामरिसंख्येयत्वात्। किं तु बाहुल्येन तावदियता लक्ष्यं व्याप्तम्, इयति च कविनावधातव्यमिति संख्यानिरूपणम्।

तथा च मतान्तरेण भरतमुनिरेवान्यथाप्युद्देशलक्षणेन नामान्तरैरपि च व्यवहारं करोति, तत एत पुस्तकेषु भेदो दृश्यते तं च दर्शयिष्यामः। पठितोद्देशक्रमस्त्वस्मदुपाध्यपरम्परागतः ॥ १-४ ॥

---

इस प्रकार परमार्थ रूप में व्यापार ही लक्षण है और वह विषयों के द्वारा विशेष रूप से निरूपण किया जाता है, यह मत स्वीकृत होने के अर्थ की लक्षण है। और व्यापार भी उसके अभ्यास में तत्पर उसके जानकार लोगों में तथाभूत काव्य रूप विषयों के अवलोकन में शीघ्र ही प्रतीत हो जाता है। वे अन्यत्र भी अनुमान से, प्रतिभा से स्वयं समझ जाते हैं। यह प्रयोजन है। क्योंकि कुशल विद्वानों के द्वारा शिक्षित व्यापार काव्य ज्ञाताओं की दृष्टि में प्रतिभासित होता है।

'षट्त्रिंशत्' अर्थात् ( लक्षण छत्तीस ही हैं ) ऐसा कहने का तात्पर्य है लक्षण छत्तीस ही है, उससे भिन्न नहीं। इस प्रकार 'षट्त्रिंशत्' लक्षण का निर्देश वारण परक है। क्योंकि कवियों के हृदय में रहने वाले अन्य लक्षण अपरिसंख्येय हैं। किन्तु बाहुल्येन इतने में ही लक्ष्य व्याप्त हैं, इतने में ही कवि को सावधान रहना चाहिए। इस प्रकार संख्या का निरूपण हुआ।

और भी स्वयं भरत मुनि ने भी मतान्तर से लक्षणों का नाम से कथन करते हैं और अन्य नामों से भी व्यवहार करते हैं। इसीलिए पुस्तकों में भेद दिखाई देता है। उसे आगे दिखायेंगे। प्रकृत पाठ में जो लक्षणों के नाम का क्रम है वह हमारे उपाध्यायनी की परम्परा से हमें प्राप्त हुआ है ॥ १-४ ॥

**अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम् ।**
**भूषणैरिव [1]विन्यस्तैस्तद् भूषणमिति स्मृतम् ॥ ५ ॥**

तत्र विभूषणं लक्षितुमाह—अलङ्कारैरिति ।

भूषणैः कटकादिभिः विभज्य स्थानदेशकालदशापुरुषादिविभागं विचार्य न्यस्तैरिव गुणालङ्कारैर्यदलङ्करणं तद् भूषणं नाम लक्षणं, कविव्यापारः, तद्द्वारेण शब्दार्थव्यापारावपि ।

एतदुक्तं भवति—इह गुणा अलङ्काराश्च विषया इत्यनेन निबद्धाः काव्यार्थीकृतानामभिधेयानां रसविशेषविषयं विभावादिभावं विवरीतुं समर्था । तथा हि हास्यरसप्रधाने प्रहसनादौ शुष्कश्रोत्रिये वक्तरि प्रयोक्तरि श्रोतरि वा गुणविनिवेशितं तु लक्षणं भजत्यलङ्कारश्च । तथा हि पादताडितके श्रोत्रियं श्रोतारमभिप्रेत्य विटस्यापि निर्गुणपुरुषस्यैवोक्तिः "मा मुसलेनापकार्षीः, मा कुसूलाग्निना धाक्षीः" इति शोभां पुष्णाति । अनौचित्यनिबन्धस्तु करुणविप्रलम्भादौ यमकस्य, यथा—

## १. विभूषण

अब विभूषण का लक्षण करते हैं—

**अनुवाद—भूषणों अर्थात् अलङ्कारों के यथोचित विन्यास के समान बहुत से अलङ्कारों एवं गुणों से अलङ्कृत लक्षण 'भूषण' कहा गया है ॥ ५ ॥**

**अभिनव**—अभिनव गुप्त का कथन है कि भूषण अर्थात् कटक, कुण्डल आदि आभूषणों को विभक्त करके स्थान, देश, काल, दशा और पुरुष आदि के विभाग का विचार करके न्यस्त अर्थात् धारण किये गये गुण और अलङ्कारों के द्वारा जो अलङ्करण है वह 'भूषण' नामक लक्षण है, यह कवि का व्यापार है। उसके द्वारा ही शब्द और अर्थ भी व्यापार हैं।

ऐसा कहा गया है कि यहाँ गुण और अलङ्कार विषय हैं। इनके द्वारा निबद्ध विषय काव्यार्थीकृत अभिधेय अर्थ तथा रस-विशेष के विषय विभाव आदि भावों के। विवरण प्रस्तुत करने में समर्थ हैं। जैसे कि हास्य रस प्रधान प्रहसन आदि में जहाँ वक्ता, श्रोता, प्रयोक्ता नीरस है वहाँ पर निविष्ट गुण लक्षण बन जाता है और अलङ्कार भी। जैसा कि 'पादताड़ितक' नाटक में श्रोत्रिय को श्रोता मानकर "मुझे मुसल से मत मारो" "कुसल को अग्नि से मत जलाओ" इत्यादि निर्गुण पुरुष की तरह विट की उक्ति शोभा को बढ़ाती है॥ अनौचित्य का निबन्धन तो करुण विप्रलम्भ आदि में यमक का उपनिबन्ध होता है। जैसे—

१. ब. चित्रार्थैस्तद् ।

विना प्रियतमेनाद्य विरहानलतापिता ।
वह्नेश्च्चूतस्य विच्छेदं किन्तु हाऽनलतापिता ॥

स्थाने निवेशस्तु यथा—

लीनेव प्रतिबिम्बितेव लिखितेवान्तर्निखातेव च
प्रोत्कीर्णेव च वज्रलेपघटितेव" इति (मालतीमाधवात्)

अत्रापि लोके उत्प्रेक्षापरम्परैव ह्येयं सातिशयकामावेशावस्थासमुद्द्योतित-प्रियतमाविषयविचित्रसंकल्पगर्भसंभावानामुख्यप्राणत्वाद् विप्रलम्भस्य कामावस्थानां च माधुर्यप्रसादोपेते च काव्ये श्रोत्रपथमवतरत्येवेति प्रतिपाद्यते । सुकुमारचित्त-वृत्तिसुभगोऽयमुत्तमश्चेत्येवं समस्तस्य गुणालङ्कारवर्गस्यानुग्राहकमिदं कविव्यापार-रूपं तद्वशाच्च शब्दार्थतद्व्यापाराद्यपि स्पृशद्विभूषणाख्यं लक्षणम् । एतमेवार्थं सम्यगानन्दवर्धनाचार्योऽपि विविच्य न्यरूपयत्—

---

"प्रियतम के बिना आज बिरहानल से संतप्त नायिका आम के विच्छेद को को जला सकती है, किन्तु हाय ! अनल से संतप्त वह क्या करे ?"

यहाँ करुण-विप्रलम्भ में यमक का निबन्धन अनुचित है।

स्थान—निवेश का उदाहरण, जैसे –

"वह प्रियतमा हृदय में लीन हुए के समान, प्रतिविम्बित हुए के समान, लिखित के समान, भीतर खुदे हुए के समान, उत्कीर्ण किये गये के समान, वज्रलेप से घटित के समान मेरे हृदय में बसी है।"

यहाँ पर लोक में यह उत्प्रेक्षा परम्परा ही अतिशय कामोद्रेक को अवस्था से समुद्योतित प्रियतमा विषयक विचित्र संकल्पों से मिश्रित सम्भावनओं का मुख रूप से प्राणन करने के कारण विप्रलम्भ और कामावस्थाओं में माधुर्य एवं प्रसाद से युक्त काव्य में सुनाई देता है। यह सुकुमार चित्तवृत्ति से सुभग एवं उत्तम है, इस प्रकार समस्त गुणालङ्कार वर्ग का अनुग्राहक कवि-व्यापार रूप है और उसके कारण शब्द और अर्थ तथा उसके व्यापार को स्पर्श करता हुआ 'विभूषण' नामक लक्षण है। इसी को आनन्दवर्धनाचार्य ने भी विवेचन के साथ निरूपण किया है।

[1]यत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते ।
तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् ॥ ६ ॥

---

ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः ।
रूपकादिरलङ्कारवर्ग एति यथार्थताम् ॥

इत्युक्त्वा क्रमेण—

विवक्षातत्परत्वेन नाङ्गित्वेन कदाचन ।
काले च ग्रहणत्यागौ नातिनिर्वहणैषिता ॥ (ध्वन्यालोके २)

इत्यादिना ग्रन्थसन्दर्भेण सोदाहरणेन । तच्चास्माभिः हृदयालोकलोचने तद्विवरणे विस्तरतो व्याख्यातमिति तत्कुतूहलस्तत्रैव गृह्णीयात् । इह तु प्रसक्तया ग्रन्थभूयस्त्वादुद्विजते लोक इति विस्तारितम् ॥ ५ ॥

अथाक्षरसंहतिमाह यत्राल्पैरिति ।

---

'ध्वनि के आत्मभूत शृङ्गार रस में समीक्षा करके विन्यस्त विनिवेशित किया गया है । रूपकादि अलङ्कार वर्ग यथार्थता को प्राप्त करता है ।'

ऐसा कहकर क्रम से—

'रूपकादि की विवक्षा रस परक करनी चाहिए, अङ्गी अर्थात् प्रधान रूप में नहीं करनी चाहिए । समय के अनुसार इनका ग्रहण और त्याग हों, किन्तु दूर तक निर्वाह करने की इच्छा न हो' ॥

इत्यादि ग्रन्थ सन्दर्भ के द्वारा सोदाहरण विवेचन किया गया है । उसको हमने सहृदयालोकलोचन में नायक उसके विवरण में हमने विस्तार से व्याख्या की है । अतः इस कुतूहल का ग्रहण वहीं करनी चाहिए । यहाँ तो प्रसक्ति के साथ लिखने पर ग्रन्थ के विस्तार से लोग ऊब न जाय इसलिए उसका विस्तार नहीं किया गया है ॥ ५ ॥

## २. अक्षरसंहति

अब अक्षरसंहति को कहते हैं —

**अनुवाद—जहाँ पर श्लेष युक्त अल्प अक्षरों से विचित्र अर्थ का वर्णन किया जाता है, उसे 'अक्षरसंघात' नामक लक्षण समझना चाहिए ॥ ६ ॥**

---

१. क. (टि०) यत्रार्थरक्षरैः श्लिष्टैर्विचित्रैरुपवर्णितम् ।

अक्षरशब्देन यदृच्छाशब्दप्राधान्यं, यदृच्छाशब्देषु स्वरूपस्यैव प्रवृत्तिनिमित्तत्वात् । तेनाल्पैरेवाक्षरैः श्लिष्टैः प्रवृत्तिनिमित्तभूतस्वस्वरूपलक्षितत्वेनैव विचित्रं तत्रोचितविभावादिभावं प्राप्यमाणोऽर्थं उपवर्ण्यते श्रोतॄणां हृदयमुपसंक्रामयितुं तत्तस्मिन् कविव्यापारोऽक्षरसङ्घातस्तत्कारणत्वात् ।

तथाहि मानिनीत्यक्षराणि ईर्ष्याविप्रलम्भे, तरुणीत्याभिलाषिके, वरतनुरिति संभोगे विभावतां तामेव प्रापयन्ति । अस्तीतिव्युत्पत्तिस्तथापि पर्यन्ते मानादिशब्दानामन्ततो वा धातुप्रत्ययमात्रादेरवश्यं यदृच्छात्वमित्यक्षराणामेव संघातः प्रधानं यदृच्छाशब्दप्राधान्ये उदाहरणं यथा—

[1]विस्रम्भादुत्तमाङ्गं प्लवगबलपतेः पादमक्षस्य हन्तुः ।
कृत्वोत्सङ्गे सलीलं त्वचि कनकमृगस्याङ्गमाधाय शेषम् ॥
बाणं रक्षःकुलघ्नं प्रगुणितमनुजेनादरात्तीक्ष्णमक्ष्णः ।
कोणेनोद्वीक्षमाणस्त्वदनुजवदने दत्तकर्णोऽयमास्ते ॥

अभिनव—यहाँ अक्षर शब्द से यदृच्छा शब्द का प्राधान्य बतलाया गया है। यदृच्छा शब्दों में स्वरूप को ही प्रवृत्ति-निमित्त माना गया है। अतः श्लेष युक्त अल्प अक्षरों के द्वारा प्रवृत्ति निमित्तभूत स्वस्वरूप से उपलक्षित होने से विचित्र और प्रकृत रस के योग्य विभावादि भाव को प्राप्त होने वाले अर्थ का उपवर्णन किया जाता है जिसके विषय में श्रोताओं के हृदय का उपसङ्क्रान्त करने के लिए जो कवि-व्यापार होता है वह अक्षरसंघात ही, उस व्यापार का कारण है, हेतु है।

जैसे—'मानिनी' आदि अक्षर ईर्ष्या-विप्रलम्भ में, 'तरुणी' आदि अक्षर अभिलाष में, 'वरतनुः' आदि अक्षर सम्भोग में विभावता को प्राप्त कराते हैं। यद्यपि इन अक्षरों के संघात में व्युत्पत्तियाँ है तथापि पर्यन्त में (अन्त में) धातु एवं प्रत्यय आदि में अवश्य ही यदृच्छा शब्दत्व है, इस प्रकार अक्षरों का संघात ही इसमें प्रधान है। यदृच्छा शब्द की प्रधानता का उदाहरण, जैसे—

"वानरों की सेना के अधिपति सुग्रीव के उत्सङ्ग (गोद) में शिर को, अक्षहन्ता हनुमान् के उत्सङ्ग में पैर को और स्वर्णमृग को त्वचा पर शेष अङ्ग को रखकर राक्षसों के कुल का विनाश करने के लिए अपने अनुज लक्ष्मण के द्वारा एकत्रित किये गये तीक्ष्ण बाणों को आँखों के कोण से देखते हुए हे रावण ! तुम्हारे अनुज की मुख की ओर कान लगाये यह रामचन्द्र है।"

१. क. (टि०) अङ्केन्यस्तोत्तमाङ्गं ।

अत्र विस्रम्भावित्यादिना मैत्रीप्राधान्याद् वालिहननपूर्वकसाम्राज्यदातृत्वबलाच्चेत्युक्तम्। अक्षस्य यो हन्तेत्येकाकिनापि येनाशोकवनिकाविप्लोषणं राक्षसबलक्षपणं च कृतं, स यत्र प्रधानकृतिर्भवतीत्युक्तम्। त्वचीति प्रहतमारीचवृत्तान्तः इत्युक्तम्। बाणमित्यादिना तत्रैवास्य बहुमान इत्युक्तम्। राक्षसविषये दैववैगुण्यमित्युक्तम्। अत्र च यत्र यस्य यद्व्यापारस्तत्र प्राधान्यस्य का कथेति। प्रगुणितमिति बहुतररणसंमर्दधुरन्धरतया कुटिलीकृतस्यापि क्षेत्रबहुमाने पुनर्योजनमित्युक्तम्। त्वदनुजवदन इति भेदोपायकृता नीतिसंपत् परपक्षे च विपर्ययम्। दत्तकर्ण इति तदाकर्णनमात्रमेतत्, न तु हृदये निर्व्याजं तेजोजाज्वल्यमानौजसि भेदं प्रति कोऽप्यस्य बहुमानः। अयमिति गम्भीरधीराकृतिः प्रसन्नश्च आस्त इति। यद्यपि प्रकृतेनापि कश्चित्क्षोभोऽत एवोक्तं सलीलमिति। अत्र चार्थस्यालङ्कारघटनाप्रयासमन्तरेणैव सुन्दरत्वं लक्षणकृतमेव।

यहाँ विस्रम्भ आदि के द्वारा मैत्री ( मित्रता ) की प्रधानता और वालि को मारकर साम्राज्य प्रदान करने की शक्ति का वर्णन है। 'अक्ष का जो हन्ता है' इत्यादि के द्वारा अकेले ही जिसने अशोक वाटिका को नष्ट कर दिया और राक्षस बल का विनाश कर दिया, वह जहाँ प्रधान प्रकृति है, ऐसा कहा है। 'त्वचि' पद का कथन मारीच के मारने का वृत्तान्त बतलाता है। 'बाणमित्यादि' के द्वारा राम को बाण पर ही विश्वास है, अतः उसको ओर देख रहे हैं, इससे उनका बहुमान प्रतीत होता है।' यह कहा गया है। राक्षसों के विषय में दैव की प्रतिकूलता है। यहाँ जिसमें जिसका जो व्यापार है उसमें उसकी प्रधानता के विषय में क्या कहना है ?' यह सुस्पष्ट है। 'प्रगुणितं' पद बहुत से युद्धों के समर्थन करने में धुरन्धर होने के कारण कुटिलीकृत का पुनः युद्ध क्षेत्र में बहुमान को योजना को कहता है। 'तुम्हारे अनुज के मुख की ओर' इत्यादि वे द्वारा भेद रूप उपाय के लिए की गई नीतिसम्पत् है और शत्रुओं के विषय में विपरीत अनोति है। 'दत्तकर्ण' पद सूचित होता है कि केवल उसकी बात सुनना मात्र है, निर्व्याज तेज जाज्वल्यमान ओज में भेद के प्रति इसका कोई बहुमान है। 'अयं' पद राम गम्भीर और धीर आकृति वाले राम प्रसन्न होकर बैठे हैं, सूचित करता है। यद्यपि प्रकृत में कोई क्षोभ नही है, अतएव 'सलीलं' कहा गया है। यहाँ पर अलङ्कारों की योजना के बिना ही जो अर्थों का सौन्दर्य है वह लक्षण के द्वारा है।

सिद्धैरर्थैः समं कृत्वा ह्यसिद्धोऽर्थः प्रसाध्यते[1]।
[2]यत्र श्लक्ष्णविचित्रार्था सा शोभेत्यभिधीयते[3] ॥ ७ ॥

---

ननु साभिप्रायमात्रत्वं नामार्थस्य तु गुण ओज इत्युक्तम्। भोः भोः सहृदयाः अर्थो जडस्तस्याभिप्राय इति कथं भाषावक्तृश्रोत्रोः स इति चेत् तद्गोऽर्थस्य गुण इति कथम्।

अथ वस्त्वन्तराक्षेपकत्वमेव तस्य स गुण इत्युच्यते तद्वस्त्वन्तरमाक्षिप्यं वक्त्रभिप्रायरूपमेव, आक्षेपकत्वमपि कविमनीषाव्यापारबलादेव तथाविनिवेशनात् प्रकारान्तरयोगे तथाभावात्। अत एव प्रौढिर्वस्तुतो वक्तृगतैव न त्वर्थे, काममुपचर्यतामित्यलं बहुना।

एतेषां च लक्षणानां संकीर्णत्वेन लक्ष्यं दृश्यते बाहुल्यापेक्षया तूदाहरणं मन्तव्यम् ॥ ६ ॥

अथ शोभा सिद्धैरर्थैरिति। यथा—

---

अब प्रश्न यह होता है कि अर्थ का अभिप्राय मात्र तो ओज नामक गुण कहा गया है। अरे सहृदयो! अर्थ तो जड़ है, उसका अभिप्राय, यह कैसी भाषा है। यदि यह कहा जाय कि वक्ता और श्रोताओं का यह अभिप्राय है तो उनमें रहने वाला अर्थ का गुण कैसे है? यदि यह कहा जाय कि वस्त्वन्तर का आक्षेपकत्व ही गुण है और वह वस्त्वन्तर वक्ता का अभिप्राय रूप है तथा यह आक्षेपकत्व भी कवि की मनीषा से किया जाने वाला व्यापार के कारण होता है, क्योंकि वैसा ही इसका विनिवेश है और यहाँ प्रकारान्तर का योग होने पर उस प्रकार का निषेध नहीं होगा। अतः प्रौढि वस्तुतः वक्ता का गुण है अर्थ में नहीं रहता, किन्तु उपचार से ऐसा मान लिया गया है, अतः अब रहने दिया जाय।

इन लक्षणों का लक्ष्य ( उदाहरण ) सङ्कीर्ण दिखाई देते हैं। अतः बाहुल्य की अपेक्षा से उदाहरण समझना चाहिए ॥ ६ ॥

## ३. शोभा

अब शोभा नामक लक्षण को कहते हैं—

**अनुवाद**—जहाँ पर सिद्ध पदार्थों से तुलना करके असिद्ध पदार्थों को सिद्ध किया जाता है। उस श्लक्ष्ण ( कमनीय ) और विचित्र अर्थ को 'शोभा' कहा जाता है ॥ ७ ॥

---

१. ख. ग. प्रयुज्यते। २. ख. ग. अत्र श्लिष्टं विशिष्टचर्थं।
३. क. शोभेत्यभिसंज्ञिता।

[1]धार्यमाणस्तु बहुभिर्वचनैः कार्ययुक्तिभिः।
[2]न यः पर्यवतिष्ठेत सोऽभिमानस्तु संज्ञितः॥ ८॥

---

मेदश्छेदकृशोदरं लघुभवत्युत्थानयोग्यं वपुः।
सत्त्वानामपि लक्ष्यते विकृतिमच्चितं भयक्रोधयोः॥
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले।
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः॥

अत्र पादत्रयेण प्रसिद्धा एवार्था अभ्यसनीयत्वेन शोभमानास्तैः समविकलं मृगयालक्षणमर्थं कृत्वा अप्रसिद्धोऽनुचितोऽपि सोऽर्थ उचितो विचित्रश्च निरूपितः। न चात्रालङ्कारः कश्चिदपि तु कविव्यापारेण यः शब्दार्थव्यापारादेवार्थघटनात्मा तत्कृतं हृद्यं लक्षणमेव। अशोभनोऽप्यर्थोऽमुना नयेन शोभेत इति शोभेयमुक्ता॥ ७॥

अथाभिमानः—धार्यमाणस्तु बहुभिरिति।

---

जैसे—

अनुवाद—मृगया से मेद के काम हो जाने से उदर पतला हो जाता है और शरीर हलका हो जाने से शीघ्रता से उत्थान के योग्य हो जाता है। प्राणियों के भी भय और क्रोध से युक्त चित्त का विकार परिलक्षत होता है, यदि चल लक्ष्य में बाण का निशाना सफल हो जाता है तो धनुर्धारियों के लिए उत्कर्ष का विषय है। लोग व्यर्थ में ही मृगया को व्यसन कहते हैं। ऐसा विनोद अन्यत्र कहाँ है।

यहाँ पर तीन पादों में प्रसिद्ध अर्थों का ही शोभनीय रीति से अभ्यास किया गया है। अथवा तीन पादों में प्रसिद्ध अर्थ ही अभ्यसनीय रूप से शोभायमान है। उनके द्वारा मृगया रूप अर्थ अविकल रूप में निरूपित करके अप्रसिद्ध और अनुचित भी अर्थ उचित एव विचित्र रूप में निरूपित किया गया है। यहाँ पर कोई अलङ्कार नहीं है। अपितु कवि के व्यापार से जो शब्दार्थ व्यापार से ही अर्थ-घटना रूप अर्थ है। तत्कृत हृद्य ही लक्षण है। अशोभन अर्थ भी इस नीति से सुशोभित होता है अतः इसे 'शोभा' कहा गया है॥ ७॥

## ४. अभिमान

अब अभिमान नामक लक्षण को कहते हैं—

अनुवाद—अनेक वचनों, कार्यों एवं युक्तियों के द्वारा निर्धारित किया गया जो अर्थ हृदय में पर्यवसित नहीं होता, वह अभिमान नामक लक्षण होता है॥ ८॥

---

१. क. (टि०) धार्यमाणस्तु। २. नार्यो यन्नानुतिष्ठन्ति सोऽभिमानः प्रकीर्तितः।

आदौ पादस्य तु यत्र स्यात् समावेशः समाक्षरः ।
पादादियमकं नाम तद्विज्ञेयं बुधैर्यथा ॥ ७७ ॥

विष्णुः सृजति भूतानि विष्णुः [1]संहरते प्रजाः ।
[2]विष्णुः प्रसूते त्रैलोक्यं विष्णुर्लोकाधिदैवतम् ॥ ७८ ॥

पादस्यान्तं पदं यत्र द्विर्द्विरेकमिहोच्यते ।
[3]ज्ञेयमाम्रेडितं नाम यमकं तत्र सूरिभिः ॥ ७९ ॥

विजृम्भितं निःश्वसितं मुहुर्मुहुः
[4]कथं विधेयं स्मरणं पदे पदे ।
यथा च ते ध्यानमिदं पुनः पुन-
[5]र्ध्रुवंगता ते रजनो विना विना ॥ ८० ॥

---

## ७. पादादि यमक

अनुवाद—जहाँ पर प्रत्येक पाद के आदि में समान पदों की आवृत्ति हो, वहाँ विद्वानों को 'पादादि यमक' समझना चाहिए ॥ ७७ ॥

जैसे—

अनुवाद—विष्णु ही समस्त प्राणियों को सृष्टि करते हैं। विष्णु प्रजाओं का संहार करते हैं, बिष्णु ही त्रैलोक्य की रचना करते हैं और विष्णु समस्त लोकों के अधिदेवता हैं ॥ ७८ ॥

विशेष—यहाँ पर प्रत्येक पाद के आदि में 'विष्णुः' समान पद की आवृत्ति हैं, अतः यहाँ 'पादादि यमक' है ।

## ८. आम्रेडित यमक

अनुवाद—जहाँ पर प्रत्येक पाद के अन्तिम पद को दो-दो बार आवृत्ति हो, वहाँ विद्वानों को 'आम्रेडित यमक' समझना चाहिए ॥ ७९ ॥

जैसे—

अनुवाद—पद-पद पर बार-बार श्वांस-प्रश्वांस बढ़ गया है तो उसका स्मरण कैसे किया जाय ? जिस प्रकार तुम्हारा ध्यान मैंने बार-बार किया, इस प्रकार रजनी ( रात्रि ) तुम्हारे बिना बीत गई ॥ ८० ॥

---

१. ख. संहरति । २. ग. विष्णुप्रसूतं ।
३. ख. पादन्त्वाम्रेडितं नाम विज्ञेयं निपुणैर्यथा ।
४. ख. यथाभिधानं । ५. ख. ग. तथागता ।

सर्वे पादाः समा यत्र भवन्ति नियताक्षराः ।
चतुर्व्यवसितं[1] नाम तद्विज्ञेयं बुधैर्यथा ॥ ८१ ॥

यथा—

[2]वारणानामयमेव कालो वारणानायमेव कालः ।
वारणानामयमेव कालो वारणानामयमेव कालः ॥ ८२ ॥

---

वारणपुष्पाणां संबन्ध्यर्थं कालः शरल्लक्षणः । वारणानां हस्तिनाम् । अनामये आमयाभावे सति समदत्वे सति वारणानां वारणं निवारणं विद्यते येषां तेषां शत्रूणामयं कालः कृतान्तोऽथवा समयः । रणानां संग्रामाणां कालः क्षेपः चिन्ताप्रवर्तयितेत्यर्थः ॥ ८२ ॥

---

विमर्श—प्रत्येक पाद के अन्त में क्रमशः 'मुहुर्मुहुः' 'पदे-पदे' 'पुनः पुनः' 'विना-विना' की आवृत्ति है, अतः यहाँ 'आम्रेडित यमक' है ॥ ७९-८० ॥

### ९. चतुर्व्यवसित यमक

अनुवाद—जहाँ पर नियत अक्षरों वाले सभी पाद समान हों, वहाँ बुधों को 'चतुर्व्यवसित यमक' समझना चाहिए ॥ ८१ ॥

जैसे—

अनुवाद—वारण पुष्पों का यही समय है, हाथियों के मद के निगरण का यही काल है, वारणीय शत्रुओं का यही काल है अथवा रण ( युद्ध ) का यही समय है ॥ ८२ ॥

अभिनव—वारण पुष्पों के विकास का यही शरदृतु का समय है, वारण (हस्तियों) के अनामय होने अर्थात् मदोन्मत्त होने का यही समय है। वारणों का निवारण होता है जिनका उन शत्रुओं का यह काल है रण (युद्ध) का यह कालक्षेप है अर्थात् चिन्ता का प्रवर्त्तक है ॥ ८२ ॥

विशेष—इस श्लोक में चारों पाद समान हैं, अतः यहाँ 'चतुर्व्यवसित यमक' है ॥ ८१-८२ ॥

---

१. ख. व्यवसितं ।
२. सावारणानामिति चतुर्ष्वपि पादेषु वर्तते ।

नानारूपैः स्वरैर्यत्र[1] यत्रैकं व्यञ्जनं भवेत् ।
तन्मालायमकं नाम विज्ञेयं [2]पण्डितैर्यथा ॥ ८३ ॥
लली बली हली मालो खेलो माली सली जली ।
खलो बलोऽबलो मालो मुसली त्वाभिरक्षतु ॥ ८४ ॥
असौ हि रामा रतिविग्रहप्रिया
रहः प्रगल्भा रमणं मनोगतम् ।
रतेन रात्रिं रमयेत् परेण वा
न चेदुदेष्यत्यरुणः पुरो रिपुः ॥ ८५ ॥
स पुष्कराक्षः क्षतजोक्षिताक्षः क्षरत्क्षतेभ्यः क्षतजन्दुरीक्षः ।
क्षतैर्गवाक्षैरिव संवृताक्षः साक्षात् सहस्राक्ष इवावभाति ॥ ८६ ॥

लक्षणानां प्राधान्यमित्युक्तपूर्वं तत्तथैवोपसंहरति—एभिर्लक्षणैरिति ।

### १०. माला यमक

अनुवाद—जहाँ पर स्वर नाना रूप हों और व्यञ्जन एक रूप हों, उसे विद्वानों को 'माला यमक' समझना चाहिए ॥ ८३ ॥

जैसे—

लली बली हली माली खेली, मालो, लली, जली, खलो बलोऽबलो मालो मुसली त्वभिरक्षतु, यह माला रूपक का उदाहरण है ॥ ८४ ॥

अनुवाद—यह रामा रतिरूपी विग्रह में रुचि रखने वाली है, एकान्त में प्रगल्भ यह रमणी रात्रि में मनोगत रमण ( प्रिय ) को उत्तम रत से तब तक रिझाती रहेगी तब तक शत्रु अरुण सामने उदित नहीं होगा ॥ ८५ ॥

अनुवाद—पुष्कर कमल के समान नेत्र वाला, रक्त से ( खून से ) नहाये हुए नेत्रों वाला, घावों से बहते हुए खून से दुर्निरीक्ष्य, गवाक्षों ( झरोखों ) के समान घावों से संवृत अङ्गों वाला यह वीर सहस्राक्ष इन्द्र के समान प्रतीत हो रहा है ॥ ८६ ॥

अभिनव—लक्षणों का प्राधान्य है, यह पहिले कहा जा चुका है, अब उसका उसी प्रकार उपसंहार करते हैं—

१. ग. युक्तं । २. ख. पाठकैः ।

एभिरर्थक्रियापेक्षैः[1] कार्यं काव्यं तु लक्षणैः ।
अतः[2] परं प्रवक्ष्यामि काव्ये दोषान् गुणांस्तथा[3] ॥ ८७ ॥

गूढार्थमर्थान्तरमर्थहीनं भिन्नार्थमेकार्थमभिप्लुतार्थम् ।
न्यायादपेतं विषमं विसन्धि [4]शब्दच्युतं वै दश काव्यदोषाः ॥ ८८ ॥

---

अर्थक्रियायां रसचर्वणायां युक्तं योगो येषां, विभावादित्वं ह्येतत् प्रसादादीत्युक्तमवस्तात् । अतः परमिति वक्तव्यान्तरमाह । केषुचित्पुस्तकेषु चैतद्ग्रन्थः पश्चाद्दृश्यते, बाहुल्येन प्रथमं दृश्यत इति तथैव व्याचक्ष्महे ॥ ८७ ॥

---

अनुवाद—अर्थ क्रियाओं से युक्त इन लक्षणों से काव्य का निर्माण करना चाहिए। इसके बाद अब मैं काव्य के गुणों और दोषों का वर्णन करूँगा ॥ ८७ ॥

अभिनव—अर्थ की क्रिया में अर्थात् रस-चर्वणा में योग है जिनका। इस प्रकार ये विभावादि रूप है और प्रसाद आदि भी हैं, यह नीचे कहा जा चुका है, इसके बाद अन्य वक्तव्य को कहते हैं। कुछ पुस्तकों में यह ग्रन्थ पीछे के भाग में दिखाई देता है किन्तु बहुत से ग्रन्थों में यह पहिले दिखाई देता है, उसी प्रकार हम पहिले इसकी व्याख्या करेंगे ॥ ८७ ॥

## काव्य-दोष

भरत ने नाट्यशास्त्र में दोष का लक्षण नहीं दिया है किन्तु उनकी दृष्टि में कोई भी वस्तु सर्वथा दोषहीन नहीं है। (दोषैः परिवर्जितं न वा किञ्चित्)। इसलिए नाट्य में इसका विस्तार से विचार नहीं किया गया है। मम्मट ने इसकी परिपक्व परिभाषा की है। उनके अनुसार दोष रस के अपकर्षक है। मानव-शरीर में काणत्व, बधिरत्व आदि की तरह काव्य के शब्दार्थ-शरीर में गूढ़ार्थ आदि दोष होते हैं। भरत ने दस दोषों का निरूपण किया है।

अनुवाद—गूढ़ार्थ, अर्थान्तर, अर्थहीन, भिन्नार्थ, एकार्थ, अभिलुप्तार्थ, न्यायापेत, विषम, विसन्धि, और शब्दच्युत—ये दश काव्य-दोष हैं ॥ ८८ ॥

---

१. ग. एभिरर्थक्रियायुक्तैः ।
२. क. (टि०) अत ऊर्ध्वं ।
३. ख. काव्यदोषांस्तथाविधान । ग. काव्यदोषाः समासतः ।
४. क. (टि०) च्युतं च शब्दात् । शब्दाच्युतं ।

पर्यायशब्दाभिहितं गूढार्थमभिसंज्ञितम्[1] ।
अवर्ण्यं वर्ण्यते यत्र[2] तदर्थान्तरमिष्यते ॥ ८९ ॥

---

गूढार्थं यथा—पर्यायशब्देति तत्र शब्दानां पदानां वाक्यस्य तदर्थानां च यथा दशरथ इति वक्तव्ये बलात्परिकल्पितेन वस्तुनः पर्याय-शब्देनाभिधानं 'अधिक नवविमान' इति । न हि यदृच्छाशब्दाः पर्यायभाजः ।

अर्थान्तरं यथा—

"चिन्तामोहमनङ्गमङ्ग तनुते विप्रेक्षितं सुभ्रुवः" ।

इति अत्र काम स्वीकृतः चिन्तादिशब्देनावर्णनीयमपि वर्णितम् । यत्तु प्रसक्तानुप्रसक्तिकया बहुतराप्रकृतवर्णनं तत्प्रबन्धदोषरूपं सन्धितदङ्गविधानेन पराकृतमिति नेह निरूपणार्हम् ॥ ८९ ॥

---

## १. गूढार्थ

अनुवाद—जहाँ पर पर्याय-वाचक शब्दों द्वारा किसी विषय को कहा जाय, वहाँ 'गूढार्थ' दोष होता है ॥ ८८ ॥

अभिनव—पद, वाक्य और उसके अर्थ को पर्याय शब्दों से कहना 'गूढार्थ' दोष है । जैसे—'दशरथ' यह कहना है, वहाँ बलात् अर्थ की कल्पना करके पर्याय शब्द से कहना अर्थात् दशरथ के लिए 'एकाधिकनवविमान' पद का प्रयोग करना । क्योंकि यदृच्छा शब्द पर्यायवाचक शब्द नहीं होते हैं ।

## २. अर्थान्तर

अनुवाद—जहाँ पर अवर्णनीय विषय का वर्णन किया जाय उसे 'अर्थान्तर' दोष कहते हैं ॥ ८९ ॥

अभिनव—अर्थान्तर का उदाहरण जैसे—'चिन्तामोहमनङ्गमङ्ग तनुते विप्रेक्षितं सुभ्रुवः' अर्थात् 'सुन्दर भ्रुकुटियों वाली, रमणी का सकटाक्ष निरीक्षण चिन्ता और मोह को उत्पन्न करने वाले कामदेव को उत्तेजित करता है । यहाँ पर कामदेव को स्वीकृत है । किन्तु चिन्ता, मोह आदि अवर्णनीय का भी वर्णन कर दिया है । जो कि प्रसक्तानुप्रसक्ति बहुत से अप्रकृत का वर्णन प्रबन्ध-दोष रूप है । सन्धि और तदङ्ग के विधान से ही पराकृत हो गया, अतः यहाँ वह निरूपण के योग्य नहीं है ॥ ८९ ॥

---

१. क. (टि०) गूढार्थमिव संज्ञितम् । २. क. यत्तु ।

अर्थहीनं [1]त्वसम्बद्धं सावशेषार्थमेव च ।
[2]भिन्नार्थमभिविज्ञेयमसभ्यं ग्राम्यमेव च ॥ ९० ॥

---

अर्थहीन यथा—अद्यापि स्मरसि रसालसं मनो मे मुग्धायाः स्मरचतुराणि । अत्र पूर्वापरव्याघातादसंबन्धता । यथा वा "स महात्मा भाग्यवशान्महापथमुपागतः" इति । अत्र हि सावशेषः प्रकरणापेक्षो वस्तुनिश्चयः, अभाग्यवशादित्यपि संभाव्यत्वात् ॥ ९० ॥

भिन्नार्थं त्रिधा यथा—तत्र मृष्यो दूरसंबन्धव्यवधाने सति यत्रार्थो यथा—

ज्वरं भुञ्जीत सञ्जातमलपाकं चिरस्थितम् ।
अजादुग्धोदनं हन्यात् त्रिदोषोत्कोपसंभवम् ॥ इति ॥

---

### ३. अर्थहीन

**अनुवाद**—जहाँ पर असम्बद्ध अर्थ हो अथवा अवशेष अर्थ हो, वहाँ 'अर्थहीन' दोष होता है ।

**अभिनव**—अर्थहीन जैसे—'हे रस से मन्थर ( अलस ) मेरा मन आज भी तु उस मुग्धा काम के विषय में चतुर वाक्यों को स्मरण कर रहे हैं ।' यहाँ पर पूर्वापर में व्याघात होने से अर्थों में असम्बद्धता है ॥ ९० ॥

अथवा जैसे—'वह महात्मा भाग्यवश महापथ में पहुँच गया' यहाँ पर प्रकरण-सापेक्ष वस्तु निश्चय है, अतः सावशेष होने से 'अर्थहीन' दोष है । 'अभाग्यवशात्' भी हो सकता है ॥ ९० ॥

### ४. भिन्नार्थं

**अनुवाद**—असभ्य एवं ग्राम्य अर्थ के सूचक अर्थ को 'भिन्नार्थं' दोष समझना चाहिए ॥ ९० ॥

**अभिनव**—भिन्नार्थ दोष तीन प्रकार का होता है । जैसे—

(१) जहाँ पर अर्थ दूर का सम्बन्ध होने से व्यवधान के कारण अर्थ मृष्य ( अविज्ञेय ) अर्थात् अर्थ समझने में कठिनाई हो ।

जैसे—"बकरी के दूध के साथ चावल ( भात ) खाया जाय तो चिरकाल से स्थिति जिसमें मल का परिपाक हो गया है, ऐसे त्रिदोष से उत्पन्न ज्वर ( सन्निपात ज्वर ) नष्ट हो जायेगा ।

---

१. क. (टि०) अर्थहीनमसम्बद्धं ।
२. क. (टि०) भिन्नार्थमपि ।

'विवक्षितोऽन्य एवार्थो यत्रान्यार्थेन भिद्यते ।
भिन्नार्थं तदपि प्राहुः काव्यं काव्यविचक्षणाः[2] ॥ ९१ ॥
अविशेषाभिधानं यत् तदेकार्थमिति स्मृतम् ।

---

ग्राम्यं यथा—"भद्रं भजस्व मामिदं ते दास्यामि" इति। तृतीयं भिन्नार्थं यथा—"स्याच्चेदेष न रावणः" इत्युक्त्वा, "क्व नु पुनः सर्वत्र सर्वे गुणाः" इति। उद्दिष्टं ह्यत्र रावणस्यानुपादेयत्वं क्व नु पुनरत्येननान्यथाकरणाद्भेदितम् ॥ ९१ ॥

एकार्थं यथा—कुन्देन्दुहारहरहासमितमिति। एकप्रयोजनं हि सर्वमेतत्। न काव्यं शास्त्रवदुपदेश्यं किञ्चित्कश्चिज्जानीयादिति प्रवर्तते।

---

(२) जहाँ ग्राम्य या असभ्य अर्थ का कथन हो, वहाँ भी 'भिन्नार्थ' दोष होता है। जैसे—'हे भद्रे ! मेरी सेवा करो, मैं तुझे यह वस्तु दूंगा'।

(३) विकसित अर्थ को भिन्न अर्थ का कथन। जैसे--"यदि यह रावण न होता" यह कहकर फिर 'सभी गुण सब जगह नहीं होते'। यहाँ 'रावण का अनुपादेयत्व उद्दिष्ट था' 'क्व नु पुनः' इस कथन से अन्यथा कर दिया। जिससे उद्देश्य से भिन्न हो गया ॥ ९१ ॥

अथवा

**अनुवाद**—जहाँ पर विवक्षित अर्थ अन्य हो और उससे अन्य अर्थ का ( अविक्षित का ) कथन किया जाय वहाँ भो विद्वान् लोग 'भिन्नार्थक' दोष मानते हैं ॥ ९१ ॥

## ५. एकार्थ

**अनुवाद**—अविशेष अर्थात् विलक्षणता-हीन अर्थ का कथन 'एकार्थ' दोष कहलाता है।

**अभिनव**—जैसे, 'कुन्देन्दुहारहरहासहसितम्' यहाँ पर कुन्द, चन्द्र, हार, शिवजी का हास ये सभो राजा के यश को श्वेत ( शुभ्र ) बतलाने के लिए कही गई है, ये सब एक प्रयोजन वाली हैं। अतः यहाँ 'एकार्थ' दोष है। काव्य, शास्त्र की तरह उपदेश्य है। कोई कुछ जान जाय, इसलिए प्रवृत्त नहीं होता।

---

१. क. (टि०) विवक्षितान्य एवार्थों यत्रान्यार्थेन भिद्यते।
२. क. (टि०) काव्यविदो जनाः।

अभिप्लुतार्थं विज्ञेयं यत् पदेन समस्यते[1] ॥ ९२ ॥
न्यायादपेतं विज्ञेयं प्रमाणपरिवर्जितम्[2] ।

---

अभिप्लुतार्थं यथा—

स राजा नीतिकुशलाः, सरः कुमुदशोभितम् ।
सर्वप्रिया वसन्तश्रीर्ग्रीष्मे मालतिकागमः ॥

अत्र प्रतिपादमर्थस्य परिसमाप्तत्वादभिप्लुतत्वं, एकवाक्यत्वेन निमज्जनाभावात् ॥ ९२ ॥

न्यायादपेतं देशकालविरुद्धं कलाशास्त्रादिविरुद्धं च यथा—

सुवीरेष्वस्ति नगरी मथुरा नाम विश्रुता ।
अक्षोटनालिकेराढ्या यस्याः पर्यन्तभूमयः ॥ इत्यादि ।

---

## ६. अभिलुप्तार्थ

अनुवाद—जहाँ पर पाद में अर्थ समाप्त हो जाय, ( एकवाक्यता न रहे ) वहाँ 'अभिलुप्तार्थ' दोष होता है ॥ ९२ ॥

अभिनव—जैसे—'वह राजा नीतिकुशल है। तालाब कुमुदों से सुशोभित है, वसन्त की शोभा सबको प्रिय है। ग्रीष्म में मालती का उद्गम है'।

यहाँ प्रत्येक पाद में अर्थ समाप्त हो जाता है। अतः 'अभिलुप्तार्थ' दोष है। क्योंकि यहाँ पर एकवाक्यता नहीं है ॥ ९२ ॥

## ७. न्यायादपेत

अनुवाद—प्रमाण से वर्जित ( रहित ) विषय का कथन 'न्यायादपेत' नामक दोष समझना चाहिए।

अभिनव—न्याय से अपेत ( प्रमाण रहित ) अर्थात् देश, काल के विरुद्ध और कला एवं शास्त्र के विरुद्ध कथन 'न्यायादपेत' दोष होता है। जैसे—

"सुवीर में मथुरा नाम की एक प्रसिद्ध नगरी है। जिसके पास की भूमियाँ अखरोट और नारियल से समृद्ध हैं"। यह वर्णन देश-काल विरुद्ध है।

---

१. क. (टि०) समाप्यते ।
२. क. (टि०) परिवर्तितम् ।

[1]वृत्तभेदो भवेद्यत्र विषमं नाम तद्भवेत् ॥ ९३ ॥
[2]अनुपश्लिष्टशब्दं यत् तद्विसन्धीति कीर्तितम् ।
[3]शब्दच्युतञ्च विज्ञेयमशब्दस्वरयोजनात् ॥ ९४ ॥

विषमं यथा—"अयि पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम्" इत्यादि ॥ ९३ ॥

विसन्धिदोषोऽनेनैव संगृहीतः। सन्धानं, द्वयोर्नैरन्तर्यं विचारयोगः अन्योन्यलयो वेति त्रिधा। तदनुपारूढमयुक्तं पारुष्याद्युत्पादकं वा यत्रापशब्दः स्मृतो मुनित्रयेणादृतः ।

## ८. विषम

**अनुवाद**—जहाँ पर वृत्तभेद हो, वहाँ 'विषम' नामक दोष होता है ॥ ९३ ॥

**अभिनव**—जैसे—"अये पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम्' इत्यादि में प्रथम पाद में नव अक्षरों से प्रारम्भ किया और दूसरे पाद को बारह अक्षरों पर समाप्त किया। अतः 'वृत्तभेद' होने से 'विषम' दोष है ॥ ९३ ॥

## ९. विसन्धि

**अनुवाद**—जहाँ पर शब्द उपश्लिष्ट न हो वहाँ 'विसन्धि' दोष होता है।

## १०. शब्दच्युतक

**अनुवाद**—जहाँ पर विना शब्दों और स्वरों को योजना हो, वहाँ (शब्दच्युत) दोष समझना चाहिए ॥ ९४ ॥

**अभिनव**—विसन्धि दोष का इसो से संग्रह हो गया। सन्धान तीन प्रकार का होता है—(१) दो वर्णों या पदों का नैरन्तर्य (२) विचार का योग (३) परस्पर एक का दूसरे में लय होना। जहाँ पर शब्द अनुपारूढ़ अर्थात् अयुक्त है अथवा पारुष्य का उत्पादक है वहाँ भो 'विसन्धि' दोष होता है, यह मुनित्रय के द्वारा आदृत है ॥ ९४ ॥

१. ख. ग. वृत्तदोषो ।

२. ख. ग. अनुतिप्रतिष्ठाशब्दं यत् तद्विसन्धोति काशितम् ।
शब्दहीनं च विज्ञेयमशब्दस्य च योजनात् ।
क. (टि०) अनुपारूढशब्दश्च विसन्धिः परिवर्जितः ।

३. क. (टि०) शब्दाच्युतं। ख. शब्दहीनं च विज्ञेयमशब्दस्य योजनात् ।

[1]एते दोषास्तु विज्ञेयाः सुरिभिर्नाटकाश्रयाः ।

पाठान्तरं यथा—

एते दोषास्तु काव्यस्य यथा सम्यक् प्रकीर्त्तिताः ॥ ९५ ॥

---

एते दोषाः, एतन्मध्ये तु केचित् नित्यदोषाः, यथा अपशब्दः। केचिदनित्या यथा—ग्राम्यं, हास्यादौ तस्येष्टतमत्वात्। एतदाह यथा स्थूलमिति आनुपूर्व्यमिति चात्र अव्ययेनाव्ययीभावः। तेनोत्तरोत्तरं स्थूलाः। यथा च गूढार्थं गूढलेखप्रहेलिकादि पताकास्थानकादिषु प्रयोज्यम्, अर्थान्तरमनुवादे, अर्थहीनादि हास्ये, भिन्नार्थं श्रोत्रियादौ वक्तरि, एकार्थं परप्रत्यायने, अभिप्लुतार्थमुन्मादादौ, भिन्नवृत्तं विसन्धि च स्वविषये। एवमेते दोषाः क्रमेणापातविषयाः। इह यतोऽर्थप्रतीतिस्तावदस्ति। अपशब्दस्तु दोष एव ततः कस्याश्चिदर्थप्रतीतिरभावात्। स हि न कांचिद् भाषामनुपतति संकेताभावात्तमर्थं प्रतिपादयेत् ॥ ९५ ॥

---

अनुवाद—विद्वानों को ये दस दोष नाटक के आश्रित समझने चाहिए।

पाठभेद से—

अनुवाद—इस काव्य के दोषों को मैंने अच्छी तरह बतला दिया है॥

अभिनव—एते दोषा इति। ये दस दोष हैं। इनमें कुछ दोष नित्य हैं। जैसे, अपशब्द। कुछ दोष अनित्य हैं, जैसे—ग्राम्यता दोष। किन्तु ग्राम्यता दोष हास्य आदि में अत्यन्त इष्ट है। इसी बात को कहते हैं—यथास्थूलम् अर्थात् आनुपूर्व्यम्। यहाँ अव्यय पद के साथ अव्ययीभाव समास है। इससे उत्तरोत्तर स्थूल है, यह अर्थ होता है। जैसे—गूढ़ार्थ दोष गूढ़लेख वाली प्रहेलिका ( सहेलियों ) आदि में होते हैं, इनका प्रयोग पताकास्थानक आदि में करने चाहिए, अर्थान्तर दोष का प्रयोग अनुवाद में, अर्थहीन का प्रयोग हास्य में, भिन्नार्थ का श्रोत्रिय आदि वक्ता होने पर एकार्थ दोष का दूसरे को समझाने में, अभिलुप्तार्थ दोष का प्रयोग उन्माद आदि की दशा में, भिन्नवृत्त और विसन्धि दोष का अपने विषय में क्रमशः आपात विषय हैं। परिणाम में ये दोष नहीं भी हो सकते हैं, क्योंकि यहाँ अर्थ को प्रतीति है। अपशब्द तो दोष ही है, क्योंकि उससे किसी अर्थ की प्रतीति नहीं होती। वह किसी भाषा का अनुगमन नहीं करता। अतः संकेत के अभाव में कैसे उस अर्थ का प्रतिपादन करें ९५ ॥

---

१. क. एते दोषा हि काव्यस्य मया सम्यक् प्रकीर्तिताः ।

[1]गुणा विपर्ययादेषां माधुर्यौदार्यलक्षणाः ।
श्लेषः प्रसादः समता समाधिः माधुर्यमोजः पदसौकुमार्यम् ।
अर्थस्य च व्यक्तिरुदारता च कान्तिश्च [2]काव्यस्य गुणा दशैते ॥९६॥

---

अथ गुणेषु प्रतिजानीते—एषां विपर्ययाद् गुणा भवन्ति, एतद्दोषविघात एव गुणो भवतीत्यर्थः । किमविशेषेण, नेत्याह—माधुर्यौदार्यलक्षणमङ्गो येषाम् । एतदुक्तं भवति—एतद्दोषविहीनं श्रुतिसुखं दीप्तरसं च यदि भवति तावता गुणान्तरैरलङ्कारैश्च हीनमपि काव्यं लक्षणयोगाव्यभिचारीत्युक्तम् ॥ ९५ ॥

अन्येऽपि गुणाः सन्तीति दर्शयति श्लेषः प्रसाद इत्यादि । काव्यस्येति पदस्य वाक्यस्य तदुभयगतस्यार्थस्य वेत्यर्थः ॥ ९६ ॥

---

**अनुवाद**—इन दोषों के विपर्यय से माधुर्य, औदार्य लक्षण वाले गुण होते हैं ॥ ९५ ॥

**अभिनव**—अब गुणों के सम्बन्ध में प्रतिज्ञा करते हैं—इन दोषों के विपर्यय से गुण होते हैं अर्थात् इन दोषों के विघात से ही गुण होते हैं। क्या ये सामान्य प्रकार से होते हैं ? उत्तर देते हैं नहीं, माधुर्य और औदार्य लक्षण है ( अङ्ग है ) जिनका यह कहा गया है—इन दोषों से रहित, श्रुति-सुखद, प्रदीप्त रस वाला यदि होता है तो गुणों एवं अलङ्कारों से रहित भी काव्य हो सकता है । लक्षणों का योग नियत होने से, ऐसा कहा गया है ॥ ९५ ॥

**विमर्श**—भरत मुनि ने गुणों का कोई विशेष लक्षण नहीं किया है । उन्होंने दोष के विपर्यय के रूप में गुणों का उल्लेख किया है । अभिनवगुप्त ने विपर्यय का अर्थ विघात किया है, अतः दोष-विघातक तत्त्व गुण हैं । भरत के अनुसार दोष काव्य के अपकर्षक हैं तो गुण उत्कर्षक । इस प्रकार उनके मतानुसार गुण काव्य के उत्कर्षक तत्त्व हैं ।

**अभिनव**—इनके अतिरिक्त और भी गुण होते हैं, यह बात 'श्लेषः प्रसाद' इत्यादि के द्वारा दिखते हैं ।

**अनुवाद**—श्लेष, प्रसाद, समता, समाधि, माधुर्य, ओज, सौकुमार्य, अर्थ-व्यक्ति, उदारता, और कान्ति ये दस काव्य के गुण होते हैं ॥ ९६ ॥

**अभिनव**—'काव्यस्य' इस पद के कहने का अभिप्राय है कि ये गुण पद, वाक्य और दोनों के अर्थों में रहते हैं ।

---

१. ख. एत एव विपर्यस्ता गुणा काव्येषु दर्शिताः ।

२. ग. काव्यार्थगुणा ।

[1]ईप्सितेनार्थजातेन सम्बद्धानां परस्परम् ।
श्लिष्टता या पदानां हि श्लेष इत्यभिधीयते ॥ ९७ ॥

---

तत्र श्लेषमाह—ईप्सितेनार्थजातेनेति अर्थभागानां कविसमुत्प्रेक्षिततया परस्पर-संबद्धया योजनया संपन्नं यदीप्सितमर्थजातं तेनोपलक्षितार्थस्योपपद्यमानस्योपपद्य-मानतात्मा गुणः श्लेषः । यथोदाहृतं वामनेन –

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य पिहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकप्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥

---

विशेष—दण्डी ने काव्य के दस गुण बताये हैं और वामन दस शब्द गुण और दस अर्थगुण मानते हैं किन्तु उनके लक्षणादि भरत से भिन्न प्रतीत होते हैं । भोज प्रभृति विद्वानों ने चौबीस गुण प्रतिपादित किये हैं । मम्मट और विश्वनाथ ने गुणों की बढ़ती हुई संख्या को स्वीकार न कर तीन गुणों को ही स्वीकार किया है और उनमें से कुछ गुणों को अपने तीन गुणों में अन्तर्भाव कर लिया है । कुछ को दोषाभाव के रूप में स्वीकार किया है और कुछ को दोषरूप माना है ।

केचिदन्तर्भवन्त्येषु दोषत्यागात्परे श्रिताः ।
अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥

## १. श्लेष

अनुवाद—ईप्सित ( इष्ट ) अर्थों के द्वारा परस्पर सम्बद्ध पदों की जो श्लिष्टता है, उसे 'श्लेष' गुण कहते हैं ॥ ९७ ॥

अभिनव—श्लेष को कहते है—ईप्सितेनार्थजातेनेत्यादि । कवि के द्वारा समुत्प्रेक्षित अर्थों का परस्पर सम्बद्ध योजना से सम्पन्न जो ईप्सित अर्थ है उनसे उपलक्षित अर्थ की उपपद्यमानता ( उपपत्ति ) ही 'श्लेष' गुण है । जैसा कि वामन ने कहा है—

"एक ही आसन पर बैठी हुई अपनी दोनों प्रियतमाओं को देखकर पीछे से आकर आदरपूर्वक क्रीड़ा के व्याज से एक नायिका के आँखों को ढँककर फिर कन्धे को ( ग्रीवा को ) थोड़ा टेढ़ा करके पुलकित एवं उल्लसित मन वाली आन्तरिक मुस्कान से जिसके कपोल फड़क रहे हैं, ऐसी दूसरी नायिका का उस धूर्त ने चुम्बन कर लिया ।

---

१. ख. पद्यमेतत् 'ख' पुस्तके नास्तीति ।

**'विचारगहनं यत्स्यात् स्फुटञ्चैव स्वभावतः ।**
**स्वतः सुप्रतिबद्धञ्च[2] श्लिष्टं तत्परिकीर्त्यते[3] ॥ ९८ ॥**

---

अत्र मनोरथातीतोऽप्येककालनायिकायुगलहृदयग्रहणलक्षणार्थस्तथोपपादितो येनासंभावनास्पदं न भवति। तेन कुटिलोऽप्ययं क्रमो न हृदये उल्वणत्वं भजते। मज्जति हृदये यतः सर्वस्येति ॥ ९७ ॥

अथ शब्दगुणमाह—ईप्सितार्थ योनिः पदानां श्लिष्टता परस्परं सन्धि-बन्धनतयाऽनेकमेकपदमिव भाति तदेव मासृण्यमुच्यते। अतश्च पदान्तरपाठस्या-वश्यापेक्षतायां यथा ब्रह्मसूत्रमिति। उक्तं चैतच्छन्दोऽध्याये। तथा सन्धीय-मानयोस्तथासन्धेः साजात्यं सावर्ण्यं च संपद्यते वस्त्रखण्डयोरिव सूत्रस्येव च।

---

यहाँ पर एक ही समय में एक साथ दोनों नायिकाओं के हृदय को ग्रहण करने के लिए मनोरथ से परे था, फिर भी इस प्रकार उपपादित किया कि जिससे असम्भावना का थोड़ा भी अवकाश नहीं रहा और किसी के हृदय में उल्बणता प्रकट नहीं हुई, अपितु सबके हृदय में यह क्रम पैठ गया ॥ ९७ ॥

**अनुवाद—जो रचना विचार करने पर गहन हो किन्तु स्वभाव से स्फुट हो और परस्पर अच्छी तरह ग्रथित हो, उसे भी 'श्लेष' कहते हैं ॥ ९८ ॥**

**अभिनव**—अब शब्द गुण को कहते हैं—ईप्सित अर्थ के कारणभूत पदों को परस्पर जो श्लिष्टता अर्थात् परस्पर सम्बन्ध होने के कारण अनेक पद एक पद के समान जो प्रतीत होता है, उसे 'मसृणता' कहते हैं। अतः भिन्न-भिन्न पदों के पाद की अपेक्षा में जैसे ब्रह्मसूत्र ( यज्ञोपवीत )। यह बात छन्दोऽध्याय में कही जा चुकी है। जैसे वस्त्र ( कपड़े ) के दो टुकड़ों में सूत्र ( सूत ) के द्वारा सन्धि करने पर उस सन्धि के कारण सूत्र का साजात्य और सावर्ण्य हो जाता है। जैसे—

---

१. ख. विचार्यंग्रहणं वृत्या ।
२. ख. सुप्रतिबद्धश्च ।
३. क. तत्परिकीर्तितम् ।

[1]अप्यनुक्तो बुधैर्यत्र शब्दोऽर्थो वा प्रतीयते ।
[2]सुखशब्दार्थसंयोगात् प्रसादः [3]परिकीर्त्यते ॥ ९९ ॥

---

यथा—

"अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नागाधिराजः" (कुमा० १-१)

इत्यत्र 'अस्ति' शब्दस्योत्तरशब्दस्य सन्धीयमानयोस्तकारस्य तकारेण संयोगे तयोश्च साजात्यं 'स्यान्दिशि' इत्यनयोः सन्धेर्नकारस्य वर्ग्यत्वाद्दकारेण सावर्ण्यं, 'दिशि देवता' इति सान्तर्यसन्धौ दकारेण दकारस्य साजात्यं, इकारैकारयोस्तालव्यांशत्वेन सादृश्यं 'देवतात्मा' इत्यत्र तकारेणाकारोत्तरतकारस्य च । न चानुप्रासमात्रमेतत् एकपदानुप्रासेऽपि प्रामाण्यभावात्—'इन्दिन्दिराणां ललितो निनादः' इत्यनुप्रासे च सावर्ण्यनोपयोगीति ।

अन्ये पठन्ति—विचारगहनं यत्स्यात् स्फुटं चैव स्वभावतः । इत्यर्थश्लेषः । वक्रघटना वेत्यर्थः । सुप्रतिबद्धश्च श्लेष इति पदश्लेषः ॥ ९८ ॥

---

'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ( कु० १।१ )' में 'अस्ति' शब्द और 'उत्तर' शब्द में सन्धि कर देने पर तकार का तकार के साथ संयोग होने पर दोनों में 'दन्तस्थानीयत्वेन' साजात्य है और 'स्यान्दिशि' में सन्धि होने से नकार का दकार के साथ सवर्गीय होने के कारण सावर्ण्य हैं । 'दिशि देवतात्मा' में सान्तर सन्धि में दकार का दकार के साथ साजात्य है । 'दि' में इकार और 'दे' में एकार तालव्यत्वेन सादृश्य है । 'देवतात्मा' में तकार का आकारोत्तर तकार के साथ सावर्ण्य है । यह नहीं कहा जा सकता कि यहाँ अनुप्रास नहीं है । क्योंकि एक पद में भी अनुप्रास होता है । प्रामाण्य का सद्भाव होने से । जैसे—'इदिन्दिराणां ललितो निनादः' यहाँ पर अनुप्रास में सावर्ण्य है ।

अन्य लोग कहते हैं कि 'विचार करने पर गहन है किन्तु स्वभाव से स्फुट है' यह अर्थ श्लेष है अथवा वक्रघटना ? श्लेष तो प्रसिद्ध ही है । इस प्रकार यह पद श्लेष है ॥ ९८ ॥

## २. प्रसाद

**अनुवाद**—जहाँ पर सुखजनक शब्द और अर्थों के संयोग से विना कहे ही शब्द अथवा अर्थ को प्रतीति हो जाय, उसे 'प्रसाद' गुण कहते हैं ॥ ९९ ॥

---

१. ग. अथानुक्तो बुधैर्यत्र शब्दार्थः ।
२. ग. मुख्यशब्दार्थसंयोगात् । ख. सुखशब्दार्थसंबोधात् ।
३. क. स तु कीर्त्यते ।

---

प्रसादमाह—अप्यनुक्तो बुधैरिति। यत्रार्थे अनुक्तेऽपि बुधैः कष्टकल्पनया अव्याख्यातस्याऽप्यर्थस्य प्रयोजनं स्वयं भासते सोऽर्थो वैमल्याश्रयोऽपि वैमल्यमुपचारात् सोऽर्थो वा काव्यस्य वैमल्यं स्वयं जानंश्चानुपयोगिपरिवर्जनात्। वैमल्यशब्द वाच्याज्जलस्येव पांसुभिरसंपर्काद् भवतीति वैमल्यमर्थस्य प्रसादः।

यथा—'सवर्णा कन्यका रूपयौवनारम्भशालिनी' इति विवाह्यत्वं प्रापणीयता हृद्यत्वं संभोगयोग्यता गृहस्थसहधर्मचारिणीत्वमित्युपयोगी सर्वोऽयमर्थः। तेनाबुध्वैतदुदाहरणान्तरं वृथा भ्रमणम्—"आविलपयोधराग्र" मिति (विक्रमो० ५·८)। एतदपि तूदाहरणं, पददूषणं तु सम्यगज्ञाने प्रयुक्तम्।

अप्रसादस्तु "उपास्तां हस्तो मे विमलमणिकाञ्चीपदमिदम्" अत्र विमलमन्यथोपयोगात् पांसुरिव जलेऽप्रसन्नतां करोति। सुख इति न प्रयत्नमपेक्षते यः शब्दो, योऽर्थो, यः संयोगः शब्दविषय इत्यर्थः, कला मात्ररूप एव यत्र सन्धिः, अत एव शैथिल्यात्मा स शब्दगुणः प्रसादः। प्रसन्नता स्फुटत्वं लक्षणीयविभागता पदानाम्।

---

अभिनव—प्रसाद गुण को कहते हैं—जहाँ पर विद्वानों के द्वारा अर्थ बिना बतलाये ही क्लिष्ट-कल्पना से भी जो अर्थ व्याख्यात नहीं है, उस अर्थ का प्रयोजन स्वयं भासित हो रहा है, वह अर्थ विमलता का आश्रय होते हुए भी लक्षणा से वह वेमल्य कहा जाता है। अथवा काव्य का वह अर्थ अनुपयोगी पदार्थों के त्याग देने से उसका वैमल्य स्वयं भासित होता है। जल का धूलिकणों के असम्पर्क से जिस प्रकार वैमल्य अर्थ होता है उसी प्रकार काव्य के अर्थ का अनुपयोगी का परिवर्जन रूप वेमल्य प्रसाद है। जैसे—

'रूप, यौवन के आरम्भ से युक्त ( सुशोभित ) यह कन्या सजातीय है' अतः 'यह विवाह के योग्य, प्रापणीय, हृद्य, सम्भोग के योग्य और गृहस्थ की सहधर्मिणी है' इत्यादि उपयोगी सभी अर्थ स्वतः प्रतिभासित हैं। इसलिए इस बात को न समझकर दूसरा उदाहरण देना वृथा भ्रमण है—'आविलपयोधराग्रं' ( पयोधर का अग्रभाग आविल है ) यह भी तो उदाहरण है। पददूषण तो बिना जाने प्रयुक्त है।

अप्रसाद का तो उदाहरण है—'उपास्तां हस्तो मे विमलमणिकाञ्चीपदमिदम्' ( विमल मणि से घटित काञ्ची के स्थान की उपासना मेरा हाथ करे )। विमल मणि ही काञ्ची (करधनी) में जड़ी जाती है। काञ्ची का मणि में विमलत्व

[1]नातिचूर्णपदैर्युक्ता न च व्यर्थाभिधायिभिः ।
[2]दुर्बोधनैश्च न कृता समत्वात् समता मता ॥ १०० ॥

यथा—

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे ।
नृपतिककुदं दत्त्वा यूने सितातपवारणम् ॥
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये ।
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥

इत्यादि । अत्र निरन्तरतां मुक्त्वा नान्योन्यलयो नान्योन्यापत्तिसन्धिरस्तीति शिथिलता । एकश्च गुणः क्वाऽपि शोभत इति स्वानुभवसिद्धः, तेन व्यावृत्तात्मेति गाढ़ता कृता, ककुदं दत्त्वेति चापरः सवर्णपक्षे ॥ ९९ ॥

---

विशेषण निरर्थक है। जैसे—जल में धूलि अप्रसाद करता है वैसे ही अन्यथा उपयोग के कारण विमल शब्द भी अप्रसन्नता करता है, सुख शब्द प्रयत्न की अपेक्षा नहीं करता। जो शब्द, जो अर्थ, जो संयोग प्रयत्न की अपेक्षा नहीं करता। कलामात्र रूप ही जहाँ सन्धि है। अत एव शैथिल्य रूप शब्द का गुण 'प्रसाद' है। प्रसन्नता का अर्थ स्फुटत्व है।

जैसे—

"सांसारिक विषयों से निवृत्त मन वाले राजा ने अपने युवा पुत्र को विधि के अनुसार राजचिह्न श्वेतच्छत्र को देकर देवी के साथ मुनियों के आश्रम के वृक्षों की छाया ये अपना निवास बनाया। वृद्धावस्था में इक्ष्वाकुवंशीय राजाओं का यही कुलव्रत है।"

यहाँ पर निरन्तरता को छोड़कर न तो एक दूसरे में लय है, न परस्पर मिल जाने रूप सन्धि है। अतः शिथिलता है। एक भी जहाँ कहीं भो हो, शोभित होता ही है। यह अनुभव सिद्ध है। अतः व्यावृत्तात्मा में गाढ़ता गुण है और 'ककुदं दत्त्वा' में अपर गाढ़त्व है ॥ ९९ ॥

## ३. समता

अनुवाद—जो अति समास रहित पदों से युक्त हो और न व्यर्थ का अर्थ प्रकट करने वाले और न दुर्बोध शब्दों से युक्त हो, इस प्रकार समानता के कारण 'समता' नामक गुण कहा जाता है ॥ १०० ॥

---

१. ख. पुस्तकेऽयं श्लोको नास्ति । तत्र टिप्पण्यामुपलभ्यते ।
२. ख. न दुर्बोधातैश्चकृता ।

[1]अन्योन्यसदृशा यत्र तथा ह्यन्योन्यभूषणाः ।
अलङ्काराः गुणाश्चैव समाः[2] स्युः समता [3]मताः ॥ १०१ ॥

समतामाह—नातिचूर्णपदैरिति । शब्दानां समत्वात्समः चूर्णपदैरसमास-सोऽत्यन्तसमासश्च विषमता, तद्विपर्ययेण समता उपक्रान्तमार्गापरित्यागरूपेत्युक्तं भवति । यथा—

गाहन्तां महिषा निपानसलिलैः शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्ति लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ इति ।

अत्र अवान्तरवाक्ये समस्तद्विपदा हि नातिदीर्घा वृत्तिः ।

अनुवाद—जहाँ पर गुण और अलङ्कार परस्पर एक दूसरे के सदृश हो तथा परस्पर शोभा-बर्द्धक हो, उसे 'समता' गुण कहते हैं ॥ १०१ ॥

अभिनव—अब समता को कहते हैं—शब्दों की समानता के कारण 'समता' गुण है । चूर्णपद अर्थात् असमस्त रचना जहाँ पर अतिशय युक्त नहीं होती । यहाँ अतिशय प्रतियोगी की अपेक्षा करता है । रचना दीर्घसमास वाली, अति समास वाली, अल्प समास वाली और समास रहित इस प्रकार चार प्रकार की होती है । इसमें समास-रहिता की अपेक्षा समासा में समासगत दीर्घत्व, अत्यन्तसमासा में समासगत अत्यन्तत्व, अल्पसमासा में समासगत अल्पत्व रूप अतिशय है । इस अतिशय से शून्य रचना यहाँ अपेक्षित है—इसी बात को कहते हैं कि दीर्घ समास और अत्यन्त समास विषमता है और तद्विपरीत समता है । उपक्रान्त मार्ग का अपरित्याग रूप समता है । ऐसा कहा गया है । जैसे—

"भैसे शृङ्गों से बार-बार ताड़ित जलाशय के जल से स्नान करें । छाया में झुण्ड बनाकर बैठे हुए मृग-समूह जुगाली करें, सुअर विश्वस्त होकर छोटे तालाबों में मोथा खाये, मेरा यह धनुष भी प्रत्यञ्चा के उतार देने से विश्राम करें ।'

यहाँ पर अवान्तर वाक्यों द्विपद समास वाली तथा अत्यन्त लम्बे-लम्बे पदों वाली वृत्ति नहीं है ।

१. ख. अन्योन्यसदृशं यत्र तथा ह्यन्योन्यभूषणम् ।
२. क. (टि.) समा स्यात् ।
३. ख. समासाद् समता यथा ।

'प्रसीद चण्डि ! त्यज मन्युमञ्जसा जनस्तवायं पुरतः कृताञ्जलिः' ।

किमित्थं—

इति चूर्णपदैरुपक्रम्यासमाप्त एव वाक्यार्थे; वाक्यान्तरे दीर्घः समासः कृतः ।

उत्कम्पितपोवरस्तनद्वयोन्मिषत्सुप्तविलासमास्यते ।

पूर्वत्र ( 'गाहन्ता' मित्यत्र त्ववान्तरार्थसमाप्तावर्थान्तरोपक्रम एव समासेन 'छायाबद्धकदम्बक' मित्युपक्रान्तोऽपि न चैत्यात्कूपपतनमिव चूर्णपदं प्रयुक्तं 'मृगकुल' मिति । सेयं समता जाता शब्दगुणः । अथाऽपि समत्वात्सा । किं तत्समत्वं आह व्यर्थाभिधायिभिरिति निष्प्रयोजनमर्थंऽभिदधति ते व्यर्थाभिधायिनस्तेषां शब्दानां न त्वेतदवैमल्यमिति प्रसादेन निरस्तत्वात् । नैतत्, नहि सर्वथा निष्प्रयोजनता, अपि तु सदपि प्रयोजनं दुर्बोधम्, तदाह—दुर्बाधनैरिति । अभिधोयतेऽस्मै इत्यभिधानं प्रयोजनम् । यथा—

> च्युतसुमनसः कुन्दा पुष्पोद्गमेष्वलसा द्रुमाः
> मलयमरुतः सर्पन्तोमे वियुक्तधृतिच्छिदः ।
> अथ च सवितुः शोतोल्लासं लुनन्ति मरोचयो
> न च जरठतामालम्बते क्लमोदयदायिनीम् ॥

"हे चण्डि ? प्रसन्न हो जावो, क्रोध को छोड़ दो, यह जन तुम्हारे सामने हाथ जोड़कर खड़ा है । स्थूल स्तनों के उत्कम्पन से जिसमें सुप्त विलास उन्मिषित हो रहे हैं, ऐसी तुम क्यों बैठी हो ।"

यहाँ पर चूर्ण पदों से उपक्रम करके वाक्यार्थ के समाप्त न होने पर उत्तरार्द्ध वाक्य में दीर्घ समास किया गया है ।

पूर्व के 'गाहन्ताम्' इत्यादि वाक्य अवान्तर अर्थ की समाप्ति के बाद अर्थान्तर का उपक्रम 'छायाबद्ध कदम्ब के' इस रूप में समास से हो किया गया है । तथापि चैत्य से कूप में गिरने के समान रूप चूर्णपद का प्रयाग नहीं किया है । इस प्रकार यह समता 'शब्द गुण' हो गया । अर्थ में भी समत्व होने से 'समता' है । कहते हैं कि अर्थ में समत्व क्या है ? इस पर कहते हैं—व्यर्थाभिधायिभिरिति अर्थात् जो निष्प्रयोजन अर्थ का कथन करते हैं वे व्यर्थाभिधायो शब्द है । ऐसे शब्दों का प्रयोग नहा करना चाहिये । यहाँ अर्थ वैमल्य नहीं है, क्योंकि प्रसाद से उसका निरास हा गया । किन्तु यह कथन भो ठोक नहीं है, क्योंकि शब्दों को सर्वथा निष्प्रयोजनता नहीं हाती अर्थात् शब्द सर्वथा अर्थहीन ( निष्प्रयोजन ) नहीं होते । यदि होते भो हैं तो अर्थ दुर्बोध होता है । इसी बात को 'दुर्बोधनैः' पद से कहते हैं । जिसके लिए कहा जाय वह अभिधान प्रयोजन है । जैसे—

'अभियुक्तैर्विशेषस्तु योऽर्थस्येहोपलक्ष्यते[2] ।
तेन चार्थेन सम्पन्नः समाधिः परिकीर्त्यते[3] ॥ १०२ ॥
[4]उपमास्विह दृष्टानामर्थानां यत्नतस्तथा ।
[5]प्राप्तानां चातिसंक्षेपात् समाधिर्निर्णयो यतः ॥ १०३ ॥

---

इत्यत्र ऋतुसन्धिवर्णनप्रक्रमे मलयमारुतः प्रक्रमं भिनत्ति, न च सर्वथा निरर्थको विप्रलम्भोद्दीपनत्वात् । किन्तु प्रक्रमं स्फुटं न पुष्णातीति विषमता । समता तु "मनसि च गिरं गृह्णन्तीमे किरन्ति न कोकिलाः" इति द्वितीयपादस्थाने यदि पठेत् ॥ १००-१०१ ॥

---

"कुन्द के फूल झड़ गये हैं, वृक्ष फूलों के उद्गम में अलसाये हुए हैं अर्थात् वृक्षों में फूल नहीं निकल रहे हैं। कामिनियों के धैर्य का तोड़ देने वाले मलय-मारुत बह रहे हैं। सूर्य की किरणें शीत के उल्लास (वृद्धि) को रोक रही है। किन्तु थकावट करने वाली कठोरता का आलम्बन नहीं कर रही हैं।"

यहाँ पर ऋतुओं के सन्धि-वर्णन के प्रक्रम में मलय मारुत प्रक्रम छोड़ रहा है। किन्तु विप्रलम्भ का उद्दीपक होने के कारण वह सर्वथा निरर्थक नहीं है। किन्तु प्रक्रम को स्फुट रूप में पुष्ट नहीं करता, इसलिए विषमता है। समता तो यदि द्वितीय पाद के स्थान पर "मनसि च गिरं गृह्णन्तीमे किरन्ति न कोकिलाः" ऐसा पाठ मानने पर ही हो सकती है ॥ १००–१०१ ॥

## ४. समाधि

**अनुवाद—जहाँ पर अभियुक्तों (प्रतिभाशाली व्यक्तियों) के द्वारा विशेष अर्थ उपलक्षित होता है, उस विशेष अर्थ से सम्पन्न गुण को 'समाधि' कहते हैं ॥ १०२ ॥**

अथवा

**अनुवाद—उपमा आदि में दृष्ट तथा यत्न से प्राप्त अर्थों को अति सक्षेप के कारण 'समाधि' कहा जाता है ॥ १०३ ॥**

---

१. ख. पुस्तके—
उपमास्विहदृष्टानामर्थानां यत्नतस्तथा ।
प्राप्तानां चातिसंयोगः समाधिः परिकीर्त्यते ॥ इति पाठः ।

२. क. (टि०) एवोपलभ्यते । ३. क. परिकीर्तितः ।

४. क. उपमाद्युपदिष्टानां ।

५. ख. प्राप्तानां चातिसंयोगः समाधिः परिकीर्त्यते ।

समाधिमाह—अभियुक्तैर्विशेषस्त्विति। यस्या द्वितीयस्यार्थस्य अभियुक्तैः प्रतिभातिशयवद्भिः विशेषो अपूर्वः स्वोल्लिखित उपपद्यते स समाहितमनः संपाद्यविशेषत्वादर्थो विशिष्टः समाधिः, यत्र कवेः स्वप्रतिभयोल्लेखस्तत्सर्वमिहोदाहरणम्। यथा—

आश्ववैहि मम सीधुभाजनाद्यावदग्रदशनैर्न दृश्यते।
चन्द्र! मद्दशनमण्डलाङ्कितः खं न यास्यसि हि रोहिणीभयात्॥

अयोनिरन्यच्छायायोनिश्चेति, एतदेव ज्ञानं प्रातिभं यस्य विषयः अयोनिः। सारस्वतस्य हि सर्वोऽयमनिमित्तत एव। तदन्यस्य सर्वोऽन्यच्छायायोनिः। व्यक्तभव्यभावनावास्यत्वादपि कविहृदयगतप्रतिभातिशयतारतम्यादनवस्थितम्।

**अभिनव**—अब समाधि की कहते हैं—जहाँ पर अतिशय प्रतिभाशाली अभियुक्तों के द्वारा द्वितीय अर्थ का उल्लिखित विशेष एवं अपूर्वता का प्रतिपादन किया जाता है। वह विशिष्ट अर्थ समाहित मन से विशेष रूप से संपाद्य होने से 'समाधि' है। यहाँ पर कवि की अपनी प्रतिभा का उल्लेख है। वह सब इसका उदाहरण है। जैसे—

"हे चन्द्र! तुम शीघ्र ही मेरे मद्य-पात्र से दूर हो जाओ, जब तक दाँतों से तुम्हें काट न लूँ। क्योंकि यदि काट लूँगा तो मेरे काटने के चिह्न से अङ्कित तुम रोहिणी के भय से आकाश में नहीं जाओगे।"

अर्थ दो प्रकार का होता है—अयोनि और अन्यच्छायायोनि। यह प्रतिभाजन्य ज्ञान है जिसका विषय अयोनि है। क्योंकि सारस्वत कवि का सभी अर्थ अयोनिज होता है। उससे भिन्न सभी अर्थ अन्यच्छायायोनिज होते हैं। व्यक्त भव्य भावना से वासित होने से भी कवि-हृदय-गत प्रतिभातिशय के तारतम्य से अर्थ अनवस्थित है।

**विमर्श**—भरत ने विशिष्ट अर्थ से युक्त गुण को 'समाधि' कहा है। वामन ने अर्थदृष्टि को समाधि कहा है। (अर्थदृष्टिः समाधिः)। वह अर्थ दो प्रकार का होता है—अयोनि और अन्यच्छायायोनि। अयोनि का अर्थ है अकारण अर्थात् कवि किसी दूसरे कवि की छाया न लेकर स्वयं जिस अर्थ का वर्णन करता है वह अयोनिज कहलाता है और कवि किसी दूसरे कवि के काव्य की छाया लेकर अर्थ का वर्णन करता है वह 'अन्यच्छायायोनि' है। इन दोनों अर्थों के वर्णन को समाधि कहते हैं।

शब्दगुणश्च समाधिः, तमाह—तेन चेति। समाधिशब्दस्य योऽर्थः परिहार-लक्षणस्तेन यः परिकीर्तितः परितः समन्तादाक्रान्त्या उच्चारणे संपन्नः। स च समाधिः। आक्रान्त्या उच्चारणे आरोहावरोहक्रमः आक्रमणेन गतितुल्यः। आरोहश्चोर्ध्वंगमनद्वारः प्राणरूपमारुतस्य उच्चरूपः, अपक्रमणमवरोहो विपर्ययः। उच्चत्वं स्थानकरणवशात् बाह्याभ्यतरप्रयत्नवशाच्च। तथा हि—

> निरानन्दः कौन्दे मधुनि[1] परिभुक्तोज्झितरसे
> न साले सालम्बो लवमपि लवङ्गे न रमते।
> प्रियङ्गौ नासङ्गं रचयति न चूतेऽपि चरति
> स्मरंल्लक्ष्मीलीलाममलमधुपानं मधुकरः॥

तत्र नकाराद्दन्त्यान्मूर्धन्यो रेफ उच्चस्थानस्थितो यद्यपि, नकारदकारयोः तथापि दन्त्यसंयोगः निरन्तरप्रयत्नाधिक्येन न विवृततमेन चाकारद्वयेन द्विवार-प्रयत्नकेन च जिह्वामूलीयेन चोच्चत्वभाजा आरोहणमस्फुटीकरणमिति न शब्देना-रोहणं संपन्नमप्यसंपन्नकल्पम्। आरोहणसौकर्यायैव प्रत्युत मध्ये ह्यत्र का विश्रान्तिः। अभावे उच्चतमसङ्कुलनसोपानारोहखेदायैव भवति निरास्वाद्यः कौन्द इति।

अभिनव—समाधि शब्द का गुण है, इस बात को 'तेन च' इत्यादि के द्वारा कहते हैं। समाधि शब्द का जो अर्थ परिहार रूप से परिकीर्त्तित है, वही 'समाधि' है। आक्रान्ति से उच्चारण करने पर आरोहावरोह क्रम आक्रमण की गति के तुल्य है। आरोह ऊर्ध्वगमन का द्वार प्राणरूप वायु का उच्च रूप है और अवरोह अर्थात् अपक्रमण आरोह का विपर्यय है। स्थान और बाह्य एवं आभ्यन्तर प्रयत्न के कारण ही उच्चत्व है। जैसे—

"लक्ष्मी के लीला स्थल कमल के मधुपान का स्मरण करने वाले भौंरे ने जिसके रस का आस्वाद लेकर छोड़ दिया, ऐसे कुन्द पुष्प के पराग में कुछ भी आनन्द का अनुभव करता है, न साल का आलम्बन करता है, न लवङ्ग में लेशमात्र भी रमण करता है, न प्रियङ्गु में आसक्ति करता है और न आम के बौर पर भ्रमण करता है।"

यहाँ पर 'निरानन्दः' में दन्त्य नकार के बाद मूर्धन्य रेफ यद्यपि उच्च स्थान में स्थित है तथापि नकार का दकार के साथ निरन्तर संयोग अधिक प्रयत्न वाले विवृततम आकार द्वय का उच्चत्व भाव और दो बार के प्रयत्न वाले जिह्वामूलीय

१. क. (टि०) विधुरो बालवकुले।

यथा वा निरानन्द इत्यत्र यावन्महाप्राणो जिह्वामूलीयश्च श्वासानुप्रदानो द्विवारयुक्तस्तावदारोहयत औकार अकारमवेक्ष्य विवृतरूप औकारतोऽपि नकारः ततोऽपीकारोकारयोः ऊनं विवृतत्वं, अकारस्तु संवृतः इत्यवरोहः । औकारस्तु मध्येऽवरोहसौकर्यायैव दूरारोहाद्धि दूरावरोहणं चेति चूलिकायाः कूपपतनकल्पम् । खेदो यथा—

"कुर्वाणाः परमं महच्च मनस" इति अकारोपध्मानीयेभ्यो झटिति संवृतेऽकारे निपातनात् । "निवेशः स्वः सिन्धोः"—इत्यत्र क्रमेण विवृततर स्पर्शं इति क्रमेणारोहः । "तुहिनगिरिवीथीषु जयति" अत्र विवृतेभ्यः उकारादिभ्यः संवृतेऽकारद्वये पातः इकारस्त्वन्यत्वान्न च विश्रान्तिस्थानमिति नारोहः । यदि वा सिन्धोरिति विवृततरापेक्षया आरोहसंस्कारे उकारेऽनरोहबुद्धिरेव स्फुटत्वेऽवरोहः । जयतिमपास्य तदयमिति पाठः । अनुस्वारो हि संवारप्रयत्नः ।

---

के साथ आरोहण स्फुट नहीं है। अतः न शब्द से आरोहण सम्पन्न होकर भी असम्पन्न हैं। यहाँ पर आरोहण के सौकर्य के लिए मध्य में विश्रान्ति करने से क्या होगा ? विश्रान्ति के अभाव में अत्यन्त ऊँची बनाई गई पीढ़ी के अरोहण में खेद ही होगा, सुख नहीं ।

और जैसे 'निरानन्द', इसमें महाप्राण और जिह्वामूलीय और श्वासानुप्रदान वर्ण आरोहण करते हैं । 'कौन्दे' में औकार अकार को देखकर अपने को विवृत रूप कर दिया और औकार के बाद नकार फिर उसके भी बाद इकार, उकार ईषद्विवृत है और अकार संवृत है । औकार मध्य में अवरोहण के सौन्दर्य के लिये है । इस प्रकार दूरारोहण से दूरावरोहण है । यह चूर्णिका के कूपपतन के समान है ।

खेद का उदाहरण जैसे—

'कुर्वाणाः परमं महच्च मनसः' इसमें आकार और उपध्मानीय से शीघ्र ही संवृत आकार में निपात होने से खेद है । 'निवेशः स्वः सिन्धोः' में क्रमशः विवृततर स्पर्श है । अतः इस प्रकार क्रम से आरोहण है । 'तुहिनगिरिवीथीषु जयति' इसमें विवृत उकारादि के बाद संवृत अकारद्वय में पात है । इकार तो इनसे भिन्न होने के विश्रान्ति-स्थान नहीं है । अतः आरोहण नहीं है । यदि 'सिन्धोः' में विवृततर की अपेक्षा से आरोह का सस्कार होने पर उकार में अवरोह बुद्धि ही है और 'तुहिनगिरिवीथीषु जयति' में 'जयति को हटाकर 'तदयम्' यह पाठ कर देते। ऐसा करने पर अवरोह स्फुट है । क्योंकि अनुस्वार का प्रयत्न संवार है ।

'नराः शीलभ्रष्टा व्यसन इव मज्जन्ति तरवः' इति अकार+इकार+ अकारेभ्योऽवरोहमयेभ्यो विवृते इकारे आरोहः, अन्ते च विसर्जनीये आरोह एव। तेन स्वभावप्रतिभादर्शनानुबिद्धा भगवती वाणी स्वरसोपनिपतिता स्वरसंभार-प्रभावानुरोधेनैवारोहावरोहक्रमं भजते प्रतिभादृष्टिशून्यत्वात् अन्धपदवदा-रोहादि न भजेत्।

नन्वियता पाठसौकर्यं स्यात्, श्रोतुस्तु किमायातम्, अनभिज्ञो देवानां प्रियः, यथा हि कर्कशशर्करानिकरकण्टकिते देशे दुस्सञ्चरे संचरज्जनं पश्यन्त्या अपि सुकुमारहृदयायाः प्रमदायास्तदात्मानुप्रवेश इव जायमानं खेदमतितरामादत्ते प्रहार-खेदो वा, यथा सहृदयस्य स एव मार्गः, सुकुमारता हि वैमल्यापरपर्याया, सहृदयत्वं हृदयस्य हि कविहृदयतादात्म्यापत्तियोग्यतैव उत्कर्षः। तत एवोक्तम्।

---

'नराः शोलभ्रष्टाः व्यसन इव मज्जन्ति तरवः' अर्थात् शीलभ्रष्ट मनुष्य के व्यसन में डूबे हुए के समान वृक्ष जल में डूब गये। यहाँ पर अवरोहमय, अकार, इकार और उकार के बाद विवृत इकार आने से आरोह है और अन्त में विसर्जनीय होने से आरोह है। इससे स्वाभाविक प्रतिभा के दर्शन से अनुविद्ध भगवती वाणी स्वरस से प्राप्त होकर स्व-सम्भार के प्रभाव के अनुरोध से ही आरोह और अवरोह क्रम को प्राप्त करती है और प्रतिभा दृष्टि से शून्य होने से अन्धे के पद की तरह आरोहावरोह को नहीं प्राप्त होती।

अब प्रश्न यह होता है कि इससे ( आरोहावरोह के रहने से ) पाठ (पढ़ने) में सुविधा हो गई, किन्तु श्रोता को क्या मिला। कहते हैं कि अनभिज्ञ ( अज्ञानी ) देवानां प्रियः अर्थात् मूर्ख हैं। जैसे कठोर कंकरीली और कटीली स्थान के होने से दुःसञ्चर स्थान में संचरणशील मनुष्य को देखने वाली सुकुमार हृदय वाली प्रमदा को उस संचरणशील ( चलने वाले ) मनुष्य के चित्त में अनुप्रवेश से जायमान ( होने वाले ) के समान अत्यन्त खेद का अनुभव होता है अथवा गिरने पर अधिक खेद होता है। इस प्रकार सहृदय का भी यही स्थान है। सुकुमारता जो वैमल्य का अपर पर्याय है वही सहृदय की सहृदयता है। कवि के हृदय के साथ तादात्म्यापत्ति की योग्यता ही उत्कर्ष है। इसलिए कहा है—

बहुशो [1]यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः ।
नोद्वेजयति [2]यस्माद्धि तन्माधुर्यमिति स्मृतम्[3] ॥ १०४ ॥

शब्दार्थशासन-ज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम् ॥ ( ध्वन्या १·७ ) इति ।

अभिधानकोशमपि हि पठतां सुप्तिङ्विभक्तीश्च विदुषामपि न काव्यतत्त्वावबोधः तस्माद्वर्णोच्चारणप्रयत्नेन परुषस्पर्शपठनजनितो यः खेद उच्चारयितुः स एव श्रोतुरपि पारुष्यमाधत्ते । "सैरन्ध्रचध्ववधूनिबन्ध्यनुगतप्राणैकबन्धक्रमः" इत्यादौ । वर्णगतं च लालित्यपारुष्यादि पुष्कराध्यायेऽपि ( अ—३४ ) वक्ष्यते । अन्यैरप्युक्तं "तेन वर्णा रसच्युतः" इत्यादि । स्वभावतो हि केचन वर्णाः सन्तापयन्तीव निकृन्तन्तीव रेफककारादय इव परुषवृत्तिपूर्वकाः, अन्ये तु निर्वापयन्तीवोपनागरिकोचिताः । लोकगोचर एवायमर्थः स्वसंवेद्योऽपीति न वितत इत्यास्तां तावत् ॥ १०२-१०३ ॥

"केवल शब्द और अर्थ के अनुशासन के ज्ञान मात्र से ही उस प्रातिभ अर्थ का ज्ञान होता है, वह तो काव्यार्थ तत्त्वज्ञ लोग ही जान सकते हैं ।" ( ध्वन्यालोक १।७ ) ।

अभिधान कोश के पढ़ने वालों को तथा सुप् तिङ् विभक्तियों को जानने वालों को भी काव्य के तत्त्व का अवबोध नहीं होता, इसलिए वर्णो के उच्चारण के प्रयत्न से कठोर स्पर्श संज्ञक वर्णों के पढने से जो खेद उच्चारण करने वालों को होता है, वही खेद सुनने वाले श्रोता को भी होता है । जैसे "सैरन्ध्यध्ववधूनिबन्ध्यनुगतप्राणैकबन्धक्रमः" इत्यादि में वर्णों के लालित्य और पारुष्य आदि को पुष्कराध्याय में कहेंगे । अन्य लोगों ने भी कहा है 'तेन वर्णा रसच्युतः' ( इस हेतु से वर्णों में रस चूता है ) । वस्तुतः परुषा वृत्ति से घटित रेफ, ककार आदि के समान कोई-कोई वर्ण संतप्त सा करते हैं, कर्त्तन जैसा करते हैं । अन्य लोग उपनागरिका वृत्ति के अनुसार रचना करने के उचित वर्ण सन्ताप का निर्वाण करते हैं । यह सब बात स्व-संवेद्य होने से विस्तार से नहीं लिखते हैं, अतः रहने दिया जाय ॥ १०२–१०३ ॥

### ५. माधुर्य

अनुवाद—जो वाक्य अनेक बार सुने हुए अथवा बार-बार कहे जाने पर भी उद्वेग उत्पन्न नहीं करता, उसे 'माधुर्य' गुण कहा गया है ॥ १०४ ॥

१. ग. यत्कृतं । २. क. (ढि०) तस्मात् ।
३. ग. उदाहृतम् ।

माधुर्यमाह—बहुशो यच्छ्रुतमित्यादि। यदिति यस्माद्धेतोर्वाक्यं श्रुतं संशय-विपर्यययोरास्पदं न भवतीति तन्माधुर्यम्। द्राघीयसि समासे तावदवश्यं भवत इति तद्विरिह एव माधुर्यं शब्दगुण इत्युक्तं भवति यथा—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यसतु।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिःपल्वले
विश्रान्ति लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः॥ (शाकु २-६)

पुनः पुनरप्युक्तमर्थजातं यस्माद्धेतोरपनीतमवगाहेन वैरस्यं तद्वचनवैचित्र्या-त्मकं माधुर्यमर्थगुणः वचनान्तराभिधेयता हि स एवार्थो विचित्रो भवति। यथा—

रसवदमृतं कः सन्देहो मधून्यपि नान्यथा
मधुरमधुरं चूतस्यापि प्रसन्नरसं फलम्।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात्॥

---

**अभिनव**—माधुर्य गुण को कहते हैं—जिस कारण से सुना हुआ वाक्य संशय और विपर्यय का आस्पद नहीं होता, वह 'माधुर्य' गुण है। दीर्घ समास वाले पद तथा वाक्य में तो संशय अथवा विपर्यय हो सकता है, अतः उसके अभाव में ही शब्द का माधुर्य हो सकता है। जैसे—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यसतु॥
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्ति लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः॥
(अभिज्ञानशाकुन्तले २।६)

बार-बार कहे हुए अर्थ के अवगाहन से जिसके कारण वैरस्य दूर हो जाता है वह वचनगत वैचित्र्य रूप माधुर्य अर्थगुण है। अन्य शब्दों से अभिधेय होने से भी वह अर्थ विचित्र ही होता है। जैसे—

रसवदमृतं कः सन्देहो मधून्यपि नान्यथा।
मधुरमधुरं चूतस्यापि प्रसन्नरसं फलम्॥
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो।
वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात्॥

[1]समासवद्भिर्बिविधैर्विचित्रैश्च पदैर्युतम् ।
सानुस्वारैरुदारैश्च तदोजः परिकोर्त्यते ॥ १०५ ॥
[2]अवगीतोऽपि हीनोऽपि स्यादुदात्तावभासकः ।
[3]यत्र शब्दार्थसम्पत्तिस्तदोजः परिकीर्तितम्[4] ॥ १०६ ॥

---

अत्र रसवदमृतमिति य एवार्थः स एव कः सन्देह इत्युक्तया विचित्रया परि-निश्चयस्थैर्याभिधायिन्या निश्चयीकृतः निश्चयस्थैर्यमेव च नान्यथेति वचनान्तरेण विपर्ययनिराकरणसंभावनान्तरनिरासं च क्रमेण विदधता विचित्रीकृतमिति मधुरोऽयमर्थः ॥ १०४ ॥

---

"अमृत भी रसवत् ( रसकाल ) है, इसमें क्या सन्देह है ? शहद भी अन्यथा ( अमधुर ) नहीं है। आम का भी प्रसन्न रस युक्त फल अतिमधुर है। किन्तु रसों के तारतम्य को जानने वाले लोग मध्यस्थ ( तटस्थ ) होकर एक बार भी कहें तो यही कि प्रिया के ओठों से अधिक स्वादु ( मधुर ) कोई अन्य वस्तु हैं क्या ?"

यहाँ पर 'रसवदमृतं' में जो अर्थ है वही है, इसमें क्या सन्देह है ? निश्चय स्थैर्य को कहने वाली विचित्र उक्ति से निश्चय कर दिया है। निश्चय-स्थैर्य को 'नान्यथा' इस वचनान्तर से विपर्यय के निराकरण की सम्भावना के निरास को क्रम से करते हुए विचित्र बना दिया है। ऐसा यह मधुर अर्थ है ॥ १०४ ॥

### ६. ओज

**अनुवाद**—जहां समासयुक्त, विविध, विचित्र, सानुस्वार और उदार बहुत से पदों से युक्त काव्य हो, वहाँ ओजो गुण कहलाता है ॥ १०५ ॥

### अन्य लक्षण

**अनुवाद**—जो रचना निन्दित होने पर भी तथा हीन होने पर भी तथा शब्दार्थ सम्पत्ति से उदात्त अर्थ का अवभास कराने वाली है। उसे 'ओज' गुण कहते हैं ॥ १०६ ॥

---

१. अयं श्लोकः 'ख' पुस्तके नोपलभ्यते । टिप्पण्यांतूपलभ्यते ।
२. ख. अवगीताविहीनोऽपि । क. (टि०) अवगीतविहीनोऽपि । स्यादुत्तावभावकः ।
३. क. यत्र शब्दार्थसम्पत्त्या ।
४. क. (टि०) परिकीर्त्यते ।

ओजो लक्षयति—समासवद्भिर्बहुभिरिति। बहुभिरेकसमाससंज्ञायुक्तैरथ च विचित्रैर्यमकैः पदैर्युक्तो यो बन्धस्तदोजः। यथा—

मन्थायस्तार्णवाम्भः प्लुतिकुहरवलमन्दरध्वानधीरः।
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः॥
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः।
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽसौ॥

यथा सानुरागः अनुरक्तं तथा वर्णो वर्णान्तरमपेक्षते तत्र सानुरागत्वम्।

"विलुलितमकरन्दा मञ्जरीर्नर्तयन्तो"

अत्र र इति शब्दो न्दशब्दं स्वगुरुत्वायापेक्षते न इत्ययंशब्दः र्तशब्दं य इत्ययं च न्तो शब्दं च, इत्ययं शब्दो न्ते गुरुत्वात्। स्वविश्रान्तिजनितकालोपचयलभ्यं गुरुत्वं च नाकांक्षतीति द्वितीयपादपाठं समनन्तरमेवापेक्षते।

"विलुलितमधुधारा मञ्जरीर्लोपयन्तः।"

इति पाठे लिशब्दो धाशब्दो लोशब्दश्च जात्यापेक्षत इति। तदेव गाढत्वमुच्यते निबिडावयवतेव सा।

---

**अभिनव**—ओज गुण का लक्षण करते हैं—बहुत से एक समास संज्ञा से युक्त विचित्र और यमक पदों से युक्त जो बन्ध है, वह 'ओज' है। जैसे—

"मन्थन से क्षुब्ध समुद्र जल से परिपूर्ण गुहा वाले चञ्चल मन्दराचल की ध्वनि के समान गम्भीर वामनदण्ड ( कोण ) से आघात होने पर गरजते हुए प्रलय कालीन बादलों की घटनाओं के परस्पर संघर्ष से प्रचण्ड, द्रौपदी के क्रोध का अग्रदूत कौरव कुल के निधन का सूचक उत्पात युक्त वायु वाला, हमारे सिंहनाद की प्रतिध्वनि के समान इस दुन्दुभि को किसने बजाया ?"

जैसे अनुरागी व्यक्ति अनुरागयुक्त पुरुष की अपेक्षा करता हैं उसी प्रकार वर्ण वर्णान्तर की अपेक्षा करता है, यहाँ सानुरागत्व है।

"विलुलितमकरन्दा मञ्जरीर्नर्त्तयन्तो"

यहाँ पर 'मकरन्द' में 'र' शब्द गुरुत्व ( गुरुवर्ण होने के ) के लिए 'न्द' की अपेक्षा करता है। इसी प्रकार 'नर्त्त' में 'न' गुरुत्व के लिए 'र्त' की ओर 'यन्तो' में 'य' वर्ण 'न्तो' की अपेक्षा करता है। और 'न्तो' पद में गुरु होने से स्व-विश्रान्ति से उत्पन्न काल के उपचय से लभ्य गुरुत्व को आकांक्षा नहीं करता, किन्तु द्वितीय पाद के पाठ की अपेक्षा तो करता है।

"विलुलितमधुधारा मञ्जरीर्लोलयन्तः"।

यत्र खलु समासेन संक्षेपेण युक्तानि पदानि, यत्रार्थो भूयानिति संक्षेपो नामार्थगुण ओजः । ओजस्वी किमतोऽपि यः खलु युवा भूत्वा समापेक्षते, तथा एकमपि वस्तु उदारैर्बहुभिः पदैरुपनिबध्यते विस्तरात्मकत्वमप्योजोऽर्थगुणः । संक्षेपो यथा—

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ ( कुमा ६·९३ )

विस्तरस्तु

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः ।
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ॥
( रघु० २-७५ ) १०५।१०६ ॥

इस प्रकार के पाठ में 'लुलित' में 'लि' शब्द 'त' को धारा मे 'धा' शब्द 'रा' की और 'लोलयन्तः' में 'लो' शब्द 'ल' की अपेक्षा करता ही है। इसी को गाढ़ता कहते हैं जिसमें अवयव निबिड़ है।

जहाँ पर षद संक्षेप से युक्त हैं और अर्थ बहुल हैं, यह संक्षेप नामक ओज अर्थ गुण है। और 'वह ओजस्वो कैसा ? जो युवा होकर भो दूसरे की अपेक्षा करता है।" इस प्रकार जब एक वस्तु को बहुत से पदों से उपनिबन्धन करते हैं। और विस्तारपूर्वक वर्णना करते हैं तो विस्तारात्मकत्व भो ओज शवद गुण है।

संक्षेप का उदाहरण जैसे—

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निषेवार्थं तद्विसृष्टाः खमुद्ययुः ॥ ( कुमार ६।९३ )

यहाँ पर संक्षेप में शिव-पार्वती के विवाह सम्बन्धी वृत्तान्त को पूरा करके वर्णन किया गया है। विस्तार का उदाहरण जैसे—

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः ।
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ॥ ( रघु २।७५)

अर्थात् अत्रि के नेत्र से समुद्भुत ज्योति को आकाश के समान और अग्नि से उद्भुत ईश के तेज को सुरसरित के समान सुदक्षिणा के दिलीप के द्वारा आधान किये गये गर्भ को धारण किया। यहाँ विस्तार का उदाहरण है।

सुखप्रयोज्यैर्यच्छब्दैर्युक्तं सुश्लिष्टसन्धिभिः ।
सुकुमारार्थसंयुक्तं [५]सौकुमार्यं तदुच्यते ॥ १०७ ॥

सौकुमार्यमाह—सुखप्रयोज्यैरिति । क्वचित्पदस्य स्वयं पारुष्यं भवति यथा द्राढा, अजड्ढा, निर्द्वंतं, सदृक्त्वं व्यवसितिः, इति । क्वचित्संहितया – दर्व्याख्योर्वी-विधूयते । तदुभयरहितत्वं सौकुमार्यं शब्दगुणः । यथा—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं ।
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले ॥
विश्रान्ति लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥

अत्र च यद्वक्तव्यं तत्समाधिलक्षणे निर्णीतम् । परुषेऽपि चार्थं सुकुमारेणार्थेन या संपत्तिस्तदर्थगुणः सौकुमार्यमपारुष्यरूपम् । एकाकिनि देवतासहाय इति मृते यशःशेष इति, जडे देवानां प्रिय इति ॥ १०७ ॥

## ७. सौकुमार्य

**अनुवाद**—जो सुश्लिष्ट सन्धि वाले सरलता से प्रयोज्य ( प्रयोग के योग्य ) शब्दों से युक्त तथा सुकुमार अर्थों से युक्त हो उसे 'सौकुमार्य' गुण कहते हैं ॥ १०७ ॥

**अभिनव**—सौकुमार्य गुण को कहते हैं—कहीं-कहीं पर पद स्वयं पुरुष होता है। जैसे—द्राढ़ा, अजड्ढा, निर्द्वंतं सदृक्त्वं, व्यवसितिः। कहीं पर सन्धि के कारण पारुष्य होता है। जैसे 'दर्व्याख्योर्वी विधूयते'। इसमें सन्धि के कारण परुषता है। इन दोनों से रहित सौकुमार्य शब्दगुण होता है। जैसे—

"गाहन्तां महिषा निपानसलिलं शृङ्गैस्मुहुस्तड़ितम्" इत्यादि। यहाँ पर जो कुछ कहना था वह समाधि गुण के निरूपण में कह दिया है। पदार्थ के परुष होने पर भी सुकुमार अर्थ से जो सम्पत्ति होती है वह अपारुष्य रूप सौकुमार्य अर्थगुण है। जैसे—एकाकी ( अकेले ) के लिए 'देवतासहाय', मरे हुए के लिए 'यशःशेष' तथा जड़ ( मूर्ख ) के लिए 'देवानां प्रियः, शब्दों का प्रयोग सुकुमार हो गया ॥ १०७ ॥

५. क. (टि॰) सुकुमारं ।

[1]सुप्रसिद्धाभिधाना तु लोककर्मव्यवस्थिता ।
या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रकीर्त्यते ॥ १०८ ॥
[2]यस्यार्थानुप्रवेशेन मनसा परिकल्प्यते ।
अनन्तरं [3]प्रयोगस्तु साऽर्थव्यक्तिरुदाहृता[4] ॥ १०९ ॥

---

अर्थव्यक्तिमाह—सुप्रसिद्धाभिधानेति । प्रसिद्धमभिधानमभिधाव्यापारो यस्यां काव्यक्रियायां सार्थव्यक्तिः शब्दगुणः यथा—

> गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
> छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यसतु ।
> विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले ॥
> विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥

विपर्यये तु किरातादिनिदर्शनं यच्चार्थे वर्ण्यते स तथैव लोके प्रसिद्ध इत्यर्थस्य गुणोऽर्थव्यक्तिः । यथा—

---

## ८. अर्थव्यक्ति

**अनुवाद**—जहाँ पर लोक में व्यवहार के योग्य कर्म से व्यवस्थित अर्थ का सुप्रसिद्ध शब्दों द्वारा अभिधान किया जाय, उसे 'अर्थव्यक्ति' कहते हैं ॥ १०८ ॥

अथवा

**अनुवाद**—जिस शब्द के प्रयोग के अनन्तर जिस अर्थ का चित्त में तत्काल प्रयोग हो जाय, उसे 'अर्थव्यक्ति' कहते हैं ॥ १०९ ॥

**अभिनव**—अर्थव्यक्ति को कहते है—जिस काव्य क्रिया में अभिधा व्यापार का प्रसिद्ध वस्तु के अभिधान किया जाय, वह 'अर्थव्यक्ति' शब्द गुण है । जैसे—

"भैंसे सींगों के बार-बार ताड़ित जलाशय के जल में अवगाहन करें । छाया में झुण्ड बनाकर बैठे हुए मृग जुगाली करें । सुअर विश्वस्त होकर तालाबों में मोथा खाय । जिसको डोरी शिथिल ( ढीली ) कर दी गई है, ऐसा मेरा यह धनुष विश्राम करें ।"

---

१. ग. सुप्रसिद्धा धातुना तु । 'ख' पुस्तके नोपलभ्यते ।
२. क. (टि०) यस्यार्थोऽनुप्रवेशेन मनसः परिकल्प्यते ।
३. क. प्रयोगस्य । ङ अनन्तरप्रयोगस्तु ।
४. क. (टि०) सार्थव्यक्तिः प्रकीर्तिता ।

[1]दिव्यभावपरीतं यच्छृङ्गाराद्भुतयोजितम् ।
अनेकभावसंयुक्तमुदारत्वं प्रकीर्तितम् ॥ ११० ॥
अनेकार्थविशेषैर्यत् सूक्तैः सौष्ठवसंयुक्तैः[2] ।
[3]उपेतमतिचित्रार्थैः उदात्तं तच्च कीर्त्यते ॥ १११ ॥

---

पृष्ठेषु शङ्खशकलच्छविषु च्छदानां
राजीभिरञ्जितमलक्तकलोहिनीभिः ।
गोरोचनाहरिबभ्रुबहिः पलाश-
मामोदते कुमुदमम्भसि पल्वलस्य ॥ १०८-१०९ ॥

उदारतामाह—दिव्यभावपरीतं यदिति । यत्रमानुषोचितमपि दिव्यतया, करुणादियुक्तमपि शृङ्गारेण, वीरतास्थानमप्यद्भुतेन युक्तं वर्ण्यते । तद्गतैर्वा विभावानुभावादिभिः यदुदीरितं तत्रौदार्यमर्थगुणः । एतदेवाग्राम्यत्वमित्यन्यैरुक्तम् । ग्राम्यं हि वस्तु यथास्थितमयोजितरचनाविशेषं प्रसिद्धिमात्रप्रमाणमुच्यते, ततोऽन्यदग्राम्यम् यथा—

---

विपर्यय में किरात आदि निदर्शन है, वहाँ जिस अर्थ का वर्णन करते हैं वह उसी प्रकार लोक में प्रसिद्ध है। इस प्रकार अर्थ का गुण अभिव्यक्ति है। जैसे—

"शंख के टुकड़े के समान कान्ति वाले पत्तों के पृष्ठ पर महावर के समान लाल रङ्ग की रेखाओं से आश्रित, गोरोचना से रञ्जित हरित एवं पिङ्गल वर्ण के पत्तों वाले कुमुद तालाब के जल में सुगन्धित है, खिल रहे हैं।"

## ९. उदारता ( उदात्त )

अनुवाद—जो रचना दिव्य भावों से प्राप्त हो, शृङ्गार एवं अद्भुत रस की योजना से युक्त हो तथा अनेक भावों से पूर्ण हो उसे 'उदारता' गुण कहते हैं ॥ ११० ॥

अथवा

अनुवाद—जो अनेक विशेष अर्थों से सौष्ठव युक्त सुन्दर वचनों से तथा अतिविचित्र अर्थों सें युक्ति हो, उसे 'उदात्त' गुण कहते हैं ॥ १११ ॥

---

१. ख. पुस्तकेऽयं श्लोको नास्ति ।
२. क. (टि०) सौष्ठवसंज्ञितैः ।
३. क. (टि०) उपेतमनतिग्राह्यैरुदारं तच्च कीर्त्यते ।

त्वमेवं सौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे! संवदति वां
अतः शेषं चेत्स्याज्जितमथ इदानीं गुणितया ॥ इति ॥

यत्राद्भुतत्वेन चमत्कृतोऽर्थः। अनेकभावसंयुक्तमिति। शब्दगुणस्य लक्षणम्। एकभाषाचित्रत्वस्यानेकताचित्रत्वं पदस्यैकस्यानेकपदव्यक्ति रक्षरसंख्यावैचित्र्यं सन्धान साजात्यं च पिण्डीबन्धनृत्तसादृश्येन, तत्र हि गुल्मजातशृङ्खलिकादिभेदेनेत्थंभूतो नर्तकीसंनिवेशो भरते तदुक्तं विकटत्वं नरीनृत्यमानत्वमिति पदानामौदार्यमिति। यथा—

स्वरचरणविनिविष्टैर्नूपुरैर्नर्तकीनां ।
झटिति रणितमासीत्तत्र चित्रं कलं च ॥

अभिनव—उदारता को कहते हैं—जहाँ मानुष भाव के योग्य होकर भी दिव्यता से युक्त है, करुणा से युक्त होकर भी शृङ्गार से युक्त है, वीरता-युक्त होकर भी अद्भुत से युक्त वर्णन है। उन-उन रसों के विभाव, अनुभाव से जिसका उद्‌गार किया गया है, वह औदार्य (उदारता) नामक अर्थगुण है। इसी को कुछ लोग अग्राम्य कहते हैं। यथास्थित वस्तु तथा जो पूर्व नियोजित रचना-विशेष न हो तथा केवल प्रसिद्धिमात्र प्रमाण वाली वस्तु ग्राम्य होती है। इससे भिन्न वस्तु अग्राम्य होती है। जैसे—

तुम इस प्रकार की सुन्दर हो और वह सुन्दरता का प्रेमी है। तुम कलाओं की पराकाष्ठा हो और वह कलाओं का पारखी। हे सुभगे! तुम दोनों की जोड़ी भाग्य से मिल रही है, अब अवशिष्ट यह है कि तुम दोनों का मिलन हो जाय, तो तुम्हारे गुणों की विजय हो गई।"

जहाँ पर अद्भुत रूप से अनेक भावों से युक्त चमत्कृत वर्णन हो, वह उदारता शब्द गुण का लक्षण है। जैसे एक भाषा में चित्रित अर्थ का अनेक रूप में चित्रण। एक पद में अनेक पदों की अभिव्यक्ति, अक्षरों की संख्या का वैचित्र्य, और सन्धियों का साजात्य। इनमें पिण्डीबन्ध नृत्य का सादृश्य है। उनमें संघात रूप में शृङ्खलादि के भेद से इस प्रकार का नर्तकी के सन्निवेश को भरत ने जो विकट एवं अतिशय नृत्य का प्रयोग बताया है। वह पदों का आदार्य गुण है। जैसे—

"वहाँ नर्तकियों की अपने पैरों में पहिने हुए नूपरों की झटिति आश्चर्यजनक ध्वनि हुई।"

[4]यन्मनः श्रोत्रविषयमाह्लादयति हीन्दुवत् ।
लीलाद्यर्थोपपन्नां वा तां कान्तिं कवयो विदुः ॥ ११२ ॥

अत्र प्रथमपादे एकाक्षरत्र्यक्षरचतुरक्षरमिति विचित्राणि पदानि, रेफे तद्-द्वितीयपदाक्रमणाद्व्याप्तिः तकारयोः सन्धानात्सन्धिसाजात्यं, तकारसकारयोः संस्थाननैकट्यं च । विपर्ययस्तु—

"चरणकमललग्नैर्नूपुरैर्नर्तकीनां झटिति रणितमासीन्मञ्जु चित्रं च तत्र"

अत्र द्वे अपि पदे त्र्यक्षरे । तावेव पादौ । इदं भाषितविचित्रत्वम् । यथा—

"अथ यदि तव वक्त्रं चण्डि ! भूयोऽपि नाम"
इति न हृद्यं क्वणितरणितमासीन्मञ्जु चित्रं च तत्र" इति

तकारमकारयोरसाजात्यं सकारमकारयोश्च संस्थानमिति ॥ १११ ॥

यहाँ पर प्रथम चरण में एकाक्षर, त्र्यक्षर चतुरक्षर इस प्रकार विचित्र पद है, रेफ से सुन्दरता बढ़ गई। द्वितीय पाद में आक्रमण से व्याप्ति हो गई। 'तत्र' में तकारों के सन्धान से सन्धि में साजात्य है, 'सीत्तत्र' में सकार, तकार का संस्थान नैकट्य है।

विपर्यय तो—

"नर्तकियों के चरण कमल में पहिने हुए नूपुरों की मञ्जु एवं चित्र झङ्कार शीघ्र हो गई।"

इसमें दो पद तीन अक्षरों वाले हैं। ये ही दो पाद हैं। यह भाषितविचित्रता है। जैसे—

"हे चण्डि ! यदि तुम्हारा वक्त्र फिर होगा' यह हृद्य नहीं है। 'क्वणित-रणितमासीन्मञ्जु चित्रं च तत्र च' में तकार और मकार का असाजात्य है। 'सोन्म' में सकार मकार संस्थान नैकट्य है।"

## १०. कान्ति

अनुवाद—जहाँ पर लीला आदि अर्थों से उत्पन्न (युक्त) रचना चन्द्र की तरह श्रोत्र और मन को आह्लादित कर दे, उसे 'कान्ति' गुण कहते हैं ॥ ११२ ॥

४. क. (टि०) यन्मनः श्रोत्रविषयं प्रह्लादजनकं भवेत् ।
शब्दबन्धार्थयोगेन तत्कान्तिरिति भण्यते ॥
यन्मनः श्रोत्रविषयं प्रह्लादजननं तथा ।
शब्दतत्त्वार्थसंयोगे तत्कान्तिरिति कीर्त्यते ॥

**यो मनश्श्रोत्रविषयः प्रसादजनको भवेत् ।**
**शब्दबन्धः प्रयोगेण स कान्त इति भण्यते ॥ ११३ ॥**

कान्तिमाह—यन्मनः श्रोत्रविषयमिति । यन्मनोविषयमाह्लादयति यथा शृङ्गारविभावरूपं लीलादिचेष्टालङ्कारसुन्दरं काव्यार्थरूपं तत्कान्तिगुणयुक्तं तदेव दीप्तरसत्वमित्युक्तमन्यैः[1] । विभावादीनां दीप्तत्वमिति यावत् । यथा—

प्रेयान् सोऽयमपाकृतः सशपथं पदानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्यात्मना
तावत्प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रमाणकमहो प्रेम्णो विचित्रा गतिः ।

अत्र ह्रोर्ष्याख्यस्य रत्यनुभावस्य, औत्सुक्य स्वभावस्य च दीप्तत्वमित्यर्थगुणः । श्रोत्रविषयीभूतमिव यदाह्लादि काव्यं तत्कान्तिर्नाम शब्दगुणः ।

कुरङ्गीनेत्रालीस्तबकितवनालीपरिसरः —

अन्य लक्षण—

**अनुवाद—प्रयोग के द्वारा जो शब्द बन्ध श्रोत्र और मन का विषय होकर प्रसादजनक हो, उसे 'कान्ति' कहते हैं ॥ ११३ ॥**

**अभिनव**—कान्ति को कहते हैं—जो चित्त को आल्हादित करता है। जैसे शृङ्गार के विभाव रूप नायिका को लीलादि चेष्टा रूप अलङ्कार से सुन्दर काव्यार्थ रूप वह कान्ति गुण से युक्त है, दीप्तरसत्व है, ऐसा अन्य लोग कहते हैं। विभावादि की दीप्ति। जैसे—

"यह वही प्रिय है जो शपथपूर्वक आपके चरणों में झुका हुआ था, उसे कान्ता ने फटकार दिया था, किन्तु खिन्न होकर वासगृह से जब तक दो-तीन ही पग चला था कि तब तक प्रणाम करती हुई नायिका ने दौड़कर उसे पकड़ लिया। उस समय हाथ से पकड़ा हुआ नीवी का बन्धन खिसक गया। अहो प्रेम की गति विचित्र है।"

यहाँ पर ईर्ष्या नामक रति का अनुभाव का और औत्सुक्य भाव का दीप्ति है, अतः यह कान्ति नामक अर्थ गुण है। श्रोत्र का विषयोभूत जो आह्लादि काव्य है, वह कान्ति नामक शब्द गुण है। जैसे—

"कुरङ्गी की नेत्राली ( नेत्रपंक्ति ) से वनालि ( वनपंक्ति ) का परिसर स्तबकित है।

१. क. (टि०) वामनभोजादिभिः ।

एवमेते ह्यलङ्कारा गुणा दोषाश्च कीर्तिताः ।
प्रयोगमेषां च पुनः वक्ष्यामि रससंश्रयम् ॥ ११४ ॥
लघ्वक्षरप्रायकृतमुपमारूपकाश्रयम् ।
काव्यं कार्यं [1]नाट्यज्ञैः वीररौद्राद्भुताश्रयम् ॥ ११५ ॥

---

अत्र हि समासवत्यपि रचना श्रोत्रेन्द्रियैकतानतामावहति । तदेतल्लोके मधुरकाव्यमिति प्रसिद्धम् । माधुर्यमभ्यस्तपदत्वमुक्तम् । अन्ये त्वौदार्यकान्त्योर्लक्षणद्वयंविपर्यासेन पठन्ति ॥ ११२ ॥

एतदुपसंहरति—एवमेत इति । चकाराच्छन्दांसि वृत्तानि जातयश्च । एषामिति । वृत्तच्छन्दः प्रभृतीनां दोषान्तानाम् । अनित्यदोषा हि विनियुज्यन्तेऽपीत्युक्तम् ॥ ११४ ॥

लघ्वक्षरप्रायेति । अत्र अतनुवाहो चित्तवृत्तिपरिस्पन्दः, तत्र लघ्वक्षरप्रधानं वृत्तं वीरादावुपमारूपके ॥ ११५ ॥

---

यहाँ पर समासयुक्त भी रचना श्रोत्रेन्द्रिय को एकतानता का आवहन करती है । इसलिए लोक में यह मधुर काव्य के रूप में प्रसिद्ध है । माधुर्य को अभ्यस्त पद कहा गया हैं । अन्य लोग औदार्य और कान्ति दोनों के लक्षणों को विपर्यय रूप में पढ़ते हैं अर्थात् वे कान्ति के लक्षण को औदार्य का लक्षण और औदार्य के लक्षण को कान्ति का लक्षण मानते हैं ॥ ११३ ॥

**अनुवाद**—इस प्रकार इन अलङ्कार, गुण और दोषों का वर्णन किया गया है । अब इनके रसाश्रित प्रयोग को कहूँगा ॥ ११४ ॥

**अभिनव**—इनका उपसंहार करते हैं—'दोषाश्च' में कथित चकार से छन्द, बृत्त और जातियों का ग्रहण होता है । 'एषाम्' पद से छन्द प्रभृति दोष पर्यन्त का ग्रहण है । अनित्य दोषों का भी इसमें बिनियोग है, ऐसा कहा गया है ॥ ११४ ॥

**अनुवाद**—नाट्य-वेत्ताओं को लघु अक्षरों से युक्त, उपमा, रूपक आदि अलङ्कारों के आश्रय तथा वीर, रौद्र और अद्भुत रसों के आश्रय काव्य का निर्माण करना चाहिये ॥ ११५ ॥

**अभिनव**—जहाँ पर हृदय का परिस्पन्द सूक्ष्मवाही न रहे, वहाँ पर वीर आदि में उपमा रूपक जैसे अलङ्कारों में लघु अक्षर प्रधान वृत्त रहते हैं ॥ ११५ ॥

गुर्वक्षरप्रायकृतं बीभत्से करुणे तथा ।
कदाचिद्रौद्रवीराभ्यां यदाधर्षणजं भवेत् ॥ ११६ ॥
[2]रूपदीपकसंयुक्तमार्यावृत्तसमाश्रयम् ।
[3]शृङ्गारे च रसे कार्यं मृदुवृत्तं तथैव च ॥ ११७ ॥
उत्तरोत्तरसंयुक्तं वीरे [4]काव्यं तु यद्भवेत् ।
जगत्यातिजगत्या वा संकृत्या वापि योजयेत्[5] ॥ ११८ ॥

---

मसृणवाहिनि तु हृदयस्पन्दे गुर्वक्षरप्रायं करुणादौ । रौद्रादावपि कदाचित्तद्भवति । यदा विलम्ब्य परखलीकारं स्मृत्वा ब्रवीति 'कर्ता द्यूतच्छलानां' इति तथा 'यो यः शस्त्रं बिभर्ति' इत्यादौ ।

---

अनुवाद—बीभत्स और करुण रस में गुरु अक्षरों वाली रचना करनी चाहिए । कभी-कभी वीर और रौद्र रस में जब किसी आधर्षण हो, गुरु अक्षरों वाली रचना करनी चाहिए ॥ ११६ ॥

अभिनव—मसृणवाही हृदय के स्पन्दन में करुण आदि में गुरु अक्षर प्रधान वृत्त होते हैं । रौद्र रस में भी कभी-कभी ऐसा होता है । जैसे, ठहर-ठहर कर शत्रु के आधर्षण को याद करके कहता है—'कर्त्ता द्यूतच्छलानां' (द्यूत दलों का करने वाला) तथा 'यो यः शस्त्रं बिभर्त्ति' (जो-जो शस्त्र को धारण करता है)। इत्यादि में ॥ ११६ ॥

अनुवाद—शृङ्गार रस में रूपक तथा दीपक अलङ्कारों से युक्त आर्यावृत के आश्रय कोमल वृत्तों का प्रयोग करना चाहिए ॥ ११७ ॥

अनुवाद—वीर रस में उत्तर-प्रत्युत्तर से युक्त जो काव्य होता है, उसमें जगती, अतिजगती और संकृति छन्दों का प्रयोग करना चाहिए ॥ ११८ ॥

---

१. क. (टि॰) शास्त्रज्ञैः ।
२. ख. रूपकदीपक संयुक्तं नार्यावृत्तसमाश्रयम् ।
३. ख. शृङ्गारे रसकार्यं तु ।
क. शृङ्गारे च रसे वीरे काव्यं स्यालङ्काराश्रमम् ।
४. क. पाठ्यं ।
५. ख' ग. वापि तद्भवेत् ।
क. युद्धसंफेटयोस्तज्ज्ञैरुत्कृतिः सम्प्रकीर्तिता ।
५. ग. तथा चाभिधृतः स्मृता । क. तथा चातिधृतिर्भवेत् ।

तथैव युद्धसम्फेटा उत्कृत्यां सम्प्रकीर्तितौ ।
करुणे शक्वरी ज्ञेया तथैवातिधृतिर्भवेत् ॥ ११९ ॥
यद्वीरे[1] कीर्तितं च्छन्दः तद्रौद्रेऽपि प्रयोजयेत्[2] ।
शेषाणामर्थयोगेन च्छन्दः कार्यं प्रयोक्तृभिः[3] ॥ १२० ॥
[4]यच्छन्दः पूर्वमुद्दिष्टं विषमार्धसमे समम् ।
[5]उदारमधुरैः शब्दैस्तत्कार्यं तु रसानुगम् ॥ १२१ ॥

---

अत एव भयानके हास्ये शान्ते वा यथायोगं संवेदनस्पन्दता-चर्व्यमाणता-स्वाद्यताश्चर्यकृतो विभागो वृत्तानां मन्तव्यः ॥ १२० ॥

उदारमधुरैरिति । औदार्यं शब्दगुणो दीप्तेषु प्राधान्येन तदनुयायि च गुणान्तरं माधुर्यं, स्वानुयायि गुणसंहितमसृणेषु रसेषु ॥ १२१ ॥

---

अनुवाद—उसी प्रकार युद्ध और संफेट के वर्णन में उत्कृति छन्द का प्रयोग करना चाहिए और करुण रस में शक्वरी तथा अतिधृति छन्दों की योजना करनी चाहिए ॥ ११९ ॥

अनुवाद—वीर रस में जिस छन्द का प्रयोग बताया गया है रौद्र रस में भी उसी की योजना करनी चाहिये । शेष रसों में अर्थ के अनुसार प्रयोक्ताओं को छन्द की योजना करनी चाहिए ॥ १२० ॥

अभिनव—शेष अर्थात् भयानक, हास्य और शान्त रस में यथायोग संवेदन की स्पन्दता, चर्व्यमाणता, आस्वाद्यता के कारण आश्चर्यकृत वृत्तों का विभाग मानना चाहिए ॥ १२० ॥

अनुवाद—जिन विषम, अर्धसम और सम छन्दों को पूर्व में बतलाया जा चुका है, उनमें उदार और मधुर शब्दों द्वारा रसानुकूल रचना करनी चाहिए ॥ १२१ ॥

अभिनव—औदार्य शब्दगुण प्रधानतः दीप्त रसों में रहता है। उसका अनुयायी अन्य गुण माधुर्य है । ये अपने अनुयायी गुणों के साथ-साथ मसृण रसों में रहते हैं ॥ १२१ ॥

---

१ ग. कीर्त्यते ।  २. ग. सम्प्रयोजयेत् ।

३. ग. तथा रसः ।

४. क. यच्छन्दः पूर्वमेवोक्तं । क. (टि०) ये बन्धाः पूर्वमुद्दिष्टा विषमार्धसमासमा ।

५. क. (टि०) उदारशब्दैर्मधुरैः कार्यस्तेऽर्थवशानुगाः ।

शब्दानुदारमधुरान् प्रमदाभिधेयान्[1]
[2]नाटचाश्रयेषु कृतिषु प्रयतेत कर्त्तुम् ।
तैर्भूषिता बहु विभान्ति हि काव्यबन्धाः
पद्माकरा विकसिता इव राजहंसैः ॥ १२२ ॥

त्रिविधं ह्यक्षरं [3]कार्यं कविभिर्नाटकाश्रयम् ।
[4]ह्रस्वं दीर्घं प्लुतञ्चैव [5]रसभावविभावकम् ॥ १२३ ॥
एकमात्रं भवेद् ह्रस्वं द्विमात्रं दीर्घमिष्यते[6] ।
प्लुतं चैव द्विमात्रं स्यादक्षरं स्वरयोजनात्[7] ॥ १२४ ॥

---

अर्थगुणास्तु यथायोगं सर्वत्र, तदाह प्रमदाभिधेयानिति । प्रमदो हर्षः हर्षजनको गुणसाकल्यवानभिधेयोऽर्थो येषाम् ॥ १२२ ॥

---

अनुवाद—हर्ष जनक अर्थ वाले उदार और मधुर शब्दों का नाट्याश्रित रचनाओं में विन्यास के लिये प्रयास करना चाहिये। ऐसे शब्दार्थों से विभूषित बहुत से काव्यबन्ध राजहंसों से सुशोभित कमल सर के समान शोभायमान होते हैं ॥ १२२ ॥

अभिनव—अर्थगुण तो यथायोग सब जगह रहते हैं। उसी को 'प्रमदाभि-भिधेयान्' इत्यादि के द्वारा कहते हैं। प्रमद का अर्थ हर्ष है। हर्षजनक गुण से युक्त अभिधेय अर्थ है जिनका ॥ १२२ ॥

अनुवाद—कवि लोग नाटकों की रचना में रस और भावों की अभिव्यक्ति के लिए ह्रस्व, दीर्घ, प्लुत संज्ञक त्रिविध अक्षरों का प्रयोग करना चाहिये ॥ १२३ ॥

अनुवाद—स्वर योजना के अनुसार एक मात्रा का वर्ण ह्रस्व होता है, दो मात्रा वाले वर्ण को दीर्घ कहते हैं और तीन मात्रा वाला वर्ण प्लुत कहलाता है ॥ १२४ ॥

---

१. ख. प्रमदाभिनेयान् ।
२. क. (टि० नाटचाश्रयान् । नाटचाश्रितान् ।
३. ख. ग. काव्ये विज्ञेयं ।
४. क. ज.) प्लुतं ह्रस्वं च दीर्घं च ।
५. क. पदबन्धसमाश्रयम् ।
६. क. दीर्घमुच्यते । ७. क. वर्णसंश्रयम् ।

स्मृते [1]चासूयिते चैव तथा च परिदेविते ।
पठतां ब्राह्मणानाञ्च प्लुतमक्षरमिष्यते ॥ १२५ ॥
[2]अकारस्तु स्मृते कार्यं ऊकारश्चाप्यसूयिते ।
परिदेविते तु हाकार[3] ओङ्कारोऽध्ययने तथा ॥ १२६ ॥
ह्रस्वदीर्घप्लुतानीह यथाभावं यथारसम् ।
[4]काव्ययोगेषु सर्वेषु [5]ह्यक्षराणि प्रयोजयेत् ॥ १२७ ॥

---

भावार्थो हृदयगतोऽभिप्रायः क्रियाविशेषश्च तं दर्शयति स्मृते चेत्यादि ॥ १२५ ॥

एतदेव च क्रमेण विभजति आकार इत्यादि । द्वावेतावनुस्वारेणानुनासिक्येन वा युक्तौ कार्यौ आण्डदण्डादि ॥ १२६ ॥

ह्रस्वदीर्घप्लुतानीह यथाभावं यथारसम् काव्यबन्धेष्वेषेष्विति वचनादन्यत्र विषये दूराहुत्यादिषु प्लुप्त उक्तः यत्रासौ प्रयोज्य एवेति दर्शितम् ॥ १२७ ॥

---

**अभिनव**—भावार्थ अर्थात् हृदयगत अभिप्राय और क्रियाविशेष को दिखाते हैं—

**अनुवाद**—किसी वस्तु के स्मरण में, असूया ( ईर्ष्या ) करने में तथा परिवेदन ( रोदन ) में और ब्राह्मणों के वेद पाठ करने में प्लुत अक्षर इष्ट है ॥ १२५ ॥

**अभिनव**—इसी का क्रमशः विभाग करते हैं—

**अनुवाद**—स्मरण में अकार का, असूया में ऊकार का, परिदेवन ( रोदन ) में 'हा' का और वेदाध्ययन में 'ओम्' का प्रयोग करना चाहिये ॥ १२६ ॥

**अभिनव**—ये दोनों अनुस्वार और अनुनासिक से युक्त करने चाहिए। जैसे—आण्ड, दण्ड, बण्ड आदि ॥ १२६ ॥

**अनुवाद**—सभी प्रकार के काव्य-बन्धों में रस और भावों के अनुसार ह्रस्व, दीर्घ और प्लुत अक्षरों का प्रयोग करना चाहिए ॥ १२७ ॥

**अभिनव**—'ह्रस्व, दीर्घ और प्लुत अक्षरों का रस और भावों के अनुसार समस्त काव्य-बन्धों में प्रयोग करना चाहिए' इस बचन के अनुसार अन्यत्र दूर से बुलाने आदि में प्लुत का प्रयोग कहा है, जहाँ पर इनका प्रयोग करना चाहिए ॥ १२७ ॥

---

१. ग. वासूचिते । २. ग. आकारस्तु । ३. ग. हुंकार ।
४. ग. काव्ययोगेष्वक्षराणि यथाशोभं विवेशयेत् । क. काव्यबन्धेष्वयेषु ।
५. ख. ह्याकाराणि कृतो वयेत् ।

चेक्रीडितप्रभृतिभिर्विकृतैस्तु शब्दै-
र्युक्ता न भान्ति ललिता भरतप्रयोगाः ।
[1]यज्ञक्रियेव रुरुचुर्मधुरैः कृतावतै-
र्वेश्या द्विजैरिव कमण्डलुदण्डहस्तैः ॥ १२८ ॥

---

चेक्रीडितं यङन्तम् । आदिग्रहणेन ण्यन्ता एते नटोचिताः प्रयोगाः न भान्ति । ते यतो ललिता । यथा वेश्यापरिग्रहे द्विजैर्मृगाजिनदण्डकमण्डलुघृताभ्यङ्गादि धरैः संभवद्भिरपि यज्ञक्रिया न भाति । एवं तद्व्याख्याने रौद्रादिस्वविषये यत्पुरुष-स्याभ्यनुज्ञानं तद्वियुक्तं स्यादितीत्थं व्याख्या—ललिताः सुकुमारप्रयोगास्ते परुषैः पदैर्न भान्तीति विशेषनिषेधः शेषाभ्यनुज्ञापक इति न्यायादन्यत्र तत्प्रयोग इत्युक्तं भवति ।

---

अनुवाद—चेक्रीडित प्रभृति विकृत शब्दों से युक्त नाट्य-प्रयोग ललित ( सुन्दर ) नहीं लगते । जैसे मृगचर्मधारी घृत से सने हुये कमण्डलु तथा दण्ड हाथ में लिए द्विज ब्राह्मणों का यज्ञक्रिया के समान वेश्या का संसर्ग अच्छा नहीं लगता ॥ १२८ ॥

अभिनव—यहाँ 'चेक्रीडित' पद यङन्त है । आदि पद के ग्रहण से ण्यन्त, सन्नन्त पदों का ग्रहण है । ये प्रयोग नटों के लिए उचित नहीं है । क्योंकि नटों के प्रयोग ललित होते हैं । जिस प्रकार वेश्या के परिग्रह में मृगचर्म, दण्ड, कमण्डलु, धृताभ्यङ्ग आदि को धारण करने वाले ब्राह्मणों के द्वारा संभव होते हुए भी यज्ञ-क्रिया सुशोभित नहीं होती । इस प्रकार इसकी व्याख्या करने पर रौद्रादि के विषय में जिन पुरुषों का अभ्यनुज्ञान है, वह छूट जायेगा । इस प्रकार व्याख्या करनी चाहिए । ललित अर्थात् जो सुकुमार प्रयोग हैं वे परुष ( कठोर ) पदों के प्रयोग से अच्छे नहीं लगते । इस प्रकार विशेष का निषेध शेष का अभ्यनुज्ञापक होता है, इस न्याय से अन्यत्र उनका प्रयोग होता है, यह कहा गया है ।

---

१. ब. कृष्णाजिनाक्षररुचर्मधरैर्घृतावतैः ।

मृदुललितपदार्थं[1] गूढशब्दार्थहीनं
[2]बुधजनसुखभोग्यं [3]युक्तिमन्नृत्तयोज्यम् ।
बहुरसकृतमार्गं सन्धिसन्धानयुक्तं
भवति जगति योग्यं नाटकं प्रेक्षकाणाम् ॥ १२९ ॥

इति भारतीये नाट्यशास्त्रे वागभिनये काव्यलक्षणो नाम षोडशोऽध्याय ॥ १६ ॥

---

तथाहि—"चयोद्वितीयाः शरि पौष्करसादेरिति वाच्यम्" इत्येवमादिरपि विधिः प्रयोज्य एव, ( आख्यातामर्थं तथ्यं" इत्यादौ (?) एतदेव साधर्म्यवैधर्म्यद्वारेणोपपादयति यथा तैरेव यज्ञक्रिया भाति न तैस्तथा वेश्या, तदनङ्गत्वात् । बहुव्रीहेर्वा यज्ञक्रिया पत्न्यप्युच्यते । इति शिवम् ॥ १२८ ॥

इति महामाहेश्वराभिनवगुप्ताचार्यविरचितायां
नाट्यवेदविवृतावभिनवभारतयां लक्षणालङ्कारदोषगुणाध्यायः
षोडशः समाप्तः ॥ १६ ॥

---

जैसे—'पौष्करसादि के आचार्य के मतानुसार शर् से अन्यवहित चय् को द्वितोय अक्षर हो जाता है' इत्यादि विधियाँ भी प्रयोज्य हैं। इस अनुशासन से सिद्ध का साधर्म्य वैधर्म्य के द्वारा उपादान करते हैं कि जिस प्रकार मृगचर्मादिधारी द्विजों से यज्ञक्रिया शोभित होती है, वैसे द्विजों से वेश्या सुशोभित नहीं होती। क्योंकि वह उसके अङ्ग नहीं हैं। यज्ञक्रिया में बहुव्रोहि समास करने पर यज्ञक्रिया से द्विजों की धर्मपत्नियों का ग्रहण होता है ॥ १२८ ॥

अनुवाद—जिसमें मृदु और ललित पदार्थ हो, जिसमें गूढ़ शब्द और अर्थ न हो, जो बुधजनों द्वारा सुख से बोध्य हो, जिसमें युक्तिपूर्वक नृत्त को योजना हो, जिसमें रस के मार्ग बहुत हों और जो सन्धियों के सन्धान से युक्त हो, ऐसा नाटक जगत् में प्रेक्षकों के देखने योग्य होता है ॥ १२९ ॥

अभिनव—इस प्रकार यशोराशि यशोराग के दौहित्र से उत्पन्न ग्रन्थ का अनुबन्ध में सोलहवाँ अध्याय समाप्त हुआ ॥ १६ ॥

इस प्रकार नाट्यशास्त्र में डा० पारसनाथ द्विवेदो रचित हिन्दी-व्याख्या
में काव्य लक्षण नामक सोलहवाँ अध्याय समाप्त हुआ ॥ १६ ॥

●

---

१. ग. पदाढ्यं । २. ग. जनपदसुखबोध्यं । ३. बुद्धिमत् ।

# षोडशोऽध्यायः

## अनुबन्धः

भूषणाक्षरसङ्घातौ शोभोदाहरणे तथा ।
हेतुसंशयदृष्टान्ताः प्राप्ताभिप्राय एव च ॥ १ ॥

निदर्शनं निरुक्तं च सिद्धिश्चाथ विशेषणम् ।
गुणातिपातातिशयौ तुल्यतर्कः पदोच्चयः ॥ २ ॥

[1]दृष्टं चैवोपदिष्टं च विचारस्तद्विपर्ययः ।
भ्रंशश्चानुनयो माला दाक्षिण्यं गर्हणं तथा ॥ ३ ॥

अर्थापत्तिः प्रसिद्धिश्च पृच्छा सारूप्यमेव च ।
मनोरथश्च लेशश्च क्षोभोऽथ गुणकीर्तनम् ॥ ४ ॥

ज्ञेयान्यनुक्तसिद्धिश्च प्रियं वचनमेव च ।
षट्त्रिंशल्लक्षणान्येव काव्यबन्धेषु निर्दिशेत् ॥ ५ ॥

---

## षोडश अध्याय

### अनुबन्ध

**अनुवाद**—भूषण, अक्षरसंघात, शोभा, उदाहरण, हेतु, संशय, दृष्टान्त, प्राप्ति, अभिप्राय, निदर्शन, निरुक्त, सिद्धि, विशेषण, गुणातिपात, अतिशय, तुल्य-तर्क, पदोच्चय, दिष्ट, उपदिष्ट, विचार, विपर्यय, भ्रंश, अनुनय, माला, दाक्षिण्य, गर्हण, अर्थापत्ति, प्रसिद्धि, पृच्छा, सारूप्य, मनोरथ, लेश, संक्षोभ, गुणकीर्त्तन, अनुक्तसिद्धि, प्रियवचन ( प्रियोक्ति )—इन छत्तीस लक्षणों का काव्य-बन्धों में निर्देश करना चाहिए ॥ १-५ ॥

---

१. क. दिष्टं ।

समस्तार्थालङ्कारवर्गस्य बीजभूताश्चमत्काराः कथाशरीरवैचित्र्यदायिनो वक्रोक्तिरूपा लक्षणशब्देन व्यवह्रियन्ते। लक्षणानि गुणालङ्कारमहिमानमनपेक्ष्य स्वसौभाग्येनैव शोभन्ते। लक्षणं महापुरुषस्य पद्मादिरेखादिवत्काव्यशरीरस्य सौन्दर्यं-दायि। अलंकारस्तु रत्नाभरणादिवदेव, येन विनापि स्वसौन्दर्येणैव पुरुषः प्रविभासते ॥ १ ॥

गुणस्तु प्रवृत्तिद्योतितो धैर्यादिवत्काव्यस्य शब्दार्थरचनामाश्रयति। यथा लक्षणरहितः पुरुषो न सुन्दरशब्दवाच्यस्तथा लक्षणवर्जं कथाशरीरं गुणालङ्कारो-ज्ज्वलमपि नीरसत्वं भजत्प्रौढकाव्याभिधानं नार्हति कथाशरीरसंपन्नेषु काव्येष्वेव लक्षणानि निवर्त्यन्ते न तु मुक्तकादिषु खण्डकाव्येषु। अतएव 'काव्यबन्धास्तु कर्त्तव्या' इति मुनिनैव मुक्तकादिवारणपरमुक्तम् ॥ २ ॥

लक्षणान्यसंख्येयानि, तेषां चमत्कृतिविशेषगरिष्ठानि षट्त्रिंशदेव मुनिना संगृहीतानि। कोहलादिभिस्तच्छिष्यैः प्रकीर्तितान्यपराणि कानिचिल्लक्षणत्वेन प्रसिद्धिमुपगतानि कालप्रवाहेन भरतग्रन्थ एव पाठान्तरनिबन्धरूपेण प्रक्षिप्तानि स्युः। सौन्दर्यजनकत्वकारेण भोजादिभिरुभयपाठगतान्यपि लक्षणानि स्वीकृत्यान्यैरपि कैश्चिच्चमत्कृतिभूतैर्लक्षणैः सह चतुःषष्टित्वेन प्रकटितानि ॥ ३ ॥

---

**अभिनव**—समस्त अर्थालङ्कारों के बीजभूत एवं कथाशरीर (इतिवृत्त) में वैचित्र्य लाने वाले वक्रोक्ति रूप चमत्कार लक्षण शब्द से व्यवहृत किये जाते हैं। लक्षण, गुण और अलङ्कारों की महिमा की परवाह न करके अपने सौभाग्य से ही शोभित होते हैं। महापुरुषों की पद्मादि रेखा के समान लक्षण काव्य-शरीर सौन्दर्य प्रदान करते हैं। अलङ्कार तो रत्नों के आभूषण के समान ही है, जिनके बिना भी पुरुष अपने सौन्दर्य ही सुशोभित होते हैं।

गुण तो धैर्यादि के समान प्रवृत्ति से घोषित होता हुआ काव्य के शब्द और अर्थ की रचना का आश्रय से रहता है। जैसे लक्षण रहित पुरुष सुन्दर नहीं कहा जाता, उसी प्रकार लक्षण-रहित कथाशरीर, गुण और अलङ्कारों से उज्ज्वल होते हुए भी नीरसता को प्राप्त होने के कारण प्रौढ़ काव्य नहीं कहलाता। कथा-शरीर से सम्पन्न काव्यों में ही लक्षण सम्पन्न होते हैं, मुक्तक आदि खण्ड काव्यों में नहीं होते। अत एव मुनि ने 'कथाबन्धास्तु' कर्त्तव्या इत्यादि वाक्य को मुक्तक आदि के वारण के लिए कहा है।

यद्विवेचितमतिगम्भीरप्रौढवाचा भगवता वृत्तिकारेण लक्षणान्यसंख्यानीति तदुपष्टम्भैव भिन्नपाठोऽपि बालानां समुपवेद्य इत्यभ्यूह्य तन्मध्य एव संक्षेपेण प्रकाशितः ॥ ४-५ ॥

लक्षण तो असंख्य हो सकते हैं किन्तु भरत मुनि ने उनमें से चमत्कार विशेष से गरिष्ठ ( श्रेष्ठ ) ३६ लक्षणों को ही संग्रह किया है। भरतमुनि के शिष्य कोहल आदि आचार्यों ने इनके अतिरिक्त कुछ अन्य बातों को कहा था, वे लक्षण के रूप में प्रसिद्धि को प्राप्त हो गये तथा कालप्रवाह से भरत के ग्रन्थ में ही पाठान्तर निबन्ध के रूप में प्रक्षिप्त कर दिये गये। सौन्दर्यजनक कारण से भोज आदि ग्रन्थकारों ने दोनों प्रकार के पाठों में प्राप्त लक्षणों को स्वीकार कर लिया। अन्य आचार्यों ने भी चमत्कार के मूलभूत लक्षणों को ६४ प्रकार से प्रकाशित किया है।

और जैसा कि वृत्तिकार ने अत्यन्त गम्भीर और प्रौढ़ वाणी में असंख्य लक्षणों का विवेचन किया है, उसी का उपष्टम्भन करके बालकों को भी समझना चाहिए, ऐसा स्वीकार करके मूल पाठ के मध्य में ही संक्षेप में प्रकाशित कर दिया ॥ १-५ ॥

**विशेष**—अभिनवगुप्त ने अर्थालङ्कारों के बीजभूत तथा कथाशरीर में वैचित्र्य प्रदान करने वाले वक्रोक्ति रूप चमत्कार को 'लक्षण' कहा है। लक्षण गुण और अलङ्कारों की अपेक्षा न करके स्वयं प्रोद्भासित होते हैं। लक्षण काव्य में सौन्दर्य का आधान करते हैं और अलङ्कार रत्नाभूषण के समान हैं। क्योंकि नारी का शरीर अलङ्कारों के विना भी शोभित होते हैं। उसी प्रकार काव्य में लक्षण होने पर अलङ्कारों के विना भी शब्दार्थ शरीर शोभित होते हैं। जैसे लक्षणहीन पुरुष सुन्दर नहीं कहा जा सकता, उसी प्रकार काव्य-शरीर भी गुणालङ्कारों से युक्त होने पर भी नीरसता के कारण काव्य नहीं कहा जा सकता। इसी लिए काव्य में लक्षणों का सम्पादन अवश्य करना चाहिए, मुक्तक आदि खण्डकाव्यों में उसकी आवश्यकता नहीं है। अभिनवगुप्त का कथन है कि यद्यपि लक्षण असंख्येय है तथापि भरतमुनि ने चमत्कार-विशिष्ट ३६ लक्षणों का ही निर्देश किया है।

अलङ्कारैर्गुणैश्चैव बहुभिः समलंकृतम् ।
भूषणैरिव चित्रार्थैस्तद् भूषणमिति स्मृतम् ॥ ६ ॥

भूषणं लक्षयति—अलङ्कारैरिति । भरतोक्तैरुपमादिभिर्गुणैश्च यत्र कथा—शरीररचना समुल्लासिता तद् भूषणं नाम लक्षणम् । चित्रार्थैरिति विभावादि-सामग्रीप्रत्यायकतया रसोद्द्योतकैरर्थविशेषैः मतान्तरे वक्रोक्तिरूपैः । यथा—

कृत्यारावणे सप्तमेऽङ्के कञ्चुकिनं दृष्ट्वा लक्ष्मणविभीषणौ—आर्य, कथय कथय ।

काञ्चु—का गतिः श्रूयतां—आर्या खलु सीता रावणाज्ञया किङ्करोपनीतं भर्तुर्मायाशिरोऽवलोक्य सखीभिराश्वास्यमानापि निवृत्तप्रयोजना नाहमात्मानं क्लेशयामि । इति ( इत्यर्धोक्तौ तिष्ठति ) ।

सर्वे—किं कृतवती ।

काञ्चु—यन्न शक्यते वक्तुम् ।

शशिन इव कला दिनावसाने कमलवनोदरमुत्सुकेव हंसी
पतिमरणरसेन राजपुत्री स्फुरितकरालशिखं विवेश वह्निम् ।

## १. भूषण

अनुवाद—भूषणों की तरह विचित्र अर्थ वाले बहुत से गुणों एव अलङ्कारों से अलङ्कृत काव्य 'भूषण' नामक लक्षण कहा गया है ॥ ६ ॥

अभिनव—भूषण का लक्षण करते हैं—जहाँ भरतोक्त उपमा आदि अलङ्कारों और श्लेषादि गुणों से जहाँ पर कथाशरीर की रचना समुल्लसित होती है वह 'भूषण' नामक लक्षण है। 'चित्रार्थैः' पद के द्वारा विभावादिरूप सामग्री के प्रत्यायक होने के कारण रस के उद्योतक अर्थविशेष से मतान्तर में वक्रोक्ति से कथाशरीर का समुल्लसित होना सूचित किया गया है। जैसे—

कृत्यारावण के सप्तम अङ्क में कञ्चुकी को देखकर लक्ष्मण और विभीषण ने कहा—'आर्य ! कहिये, कहिये ।

कञ्चुकी—क्या उपाय है ? सुनिये—आर्या सीता ( पति ) राम के मायामय सिर को देखकर सखियों के द्वारा आश्वस्त किये जाने पर भी प्रयोजनों से रहित मैं अब अपने को अधिक कष्ट नहीं दूंगी । ( इस प्रकार आधी बात कहकर चुप हो जाती है ) ।

सभी लोग—क्या किया ?

काञ्चुकी—जिसे कहा नहीं जा सकता ।

यथा वा रत्नावल्यां प्रथमेऽङ्के यौगन्धरायणस्य वचनं विश्रान्तविग्रहेति श्लोकः भूषणाख्यलक्षणेन काव्यं सामान्यवचसो भिद्यते ।

"तात्पर्यमेव वचसि ध्वनिरेव काव्ये,"
यत्रालङ्कारवर्गोऽयं सर्वोऽप्यन्तर्भविष्यति"
शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः"
"अर्थतत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ।
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत्"
"द्वे वर्त्मनी गिरो देव्या शास्त्रं च कविकर्म च ।
प्रज्ञोपज्ञन्तयोराद्यं प्रतिभोद्भवमन्तिमम्"

इत्यादिना भोजकुन्तलभट्टनायकतौतादिभिरुक्तरीत्या गुणालङ्कारवर्गः सर्व एव लक्षणशब्देन परिगृहीतः । गुणालङ्कारैरेव यत्र कथारूपा वक्रोक्तिरतिशयिता तत्र भूषणम् ॥ ६ ॥

---

'पति के मृत्यु से खिन्न राजकुमारी सीता चन्द्रकला के सदृश दिन के अन्त में कमल वन के मध्य जाने के लिए उत्सुक हँसी की तरह चमकती हुई कराल ज्वाला वाले अग्नि में प्रवेश कर गई ।'

अथवा जैसे रत्नावली नाटिका के प्रथम अङ्क में यौगन्धरायण का—

विश्रान्तविग्रहकथो रतिमाञ्जनस्य
चित्ते वसन् प्रियवसन्तक एव साक्षात् ।
पर्युत्सुको निजमहोत्सवदर्शनाय
वत्सेश्वरः कुसुमचाप इवाभ्युपैति ॥

यह श्लोक वाक्य भूषण नामक लक्षण से सामान्य-कथन से काव्य का भेद दिखाई देता है ।

'वाणी में तात्पर्य ही रहता है और काव्य में ध्वनि की प्रधानता होती है जिसमें समस्त अलङ्कार वर्ग अन्तर्भूत हो जाते हैं । शब्द की प्रधानता का आश्रय लेकर शास्त्र को पृथक् समझते हैं । तत्त्व से युक्त अर्थ में दोनों की प्रधानता का कथन है । दोनों ( शब्द और अर्थ ) के अप्रधान होने पर और व्यञ्जना व्यापार के प्रधान होने पर काव्य कहा जाता है । वाग्देवी के दो व्यापार है—(१) शास्त्र और (२) कविकर्म काव्य । इनमें पहला प्रज्ञोपज्ञ है और दूसरा प्रतिभाजन्य ।

इत्यादि के द्वारा भोज, कुन्तक, भट्टनायक, भट्टतौत आदि आचार्यों के द्वारा कथित रीति से गुण एवं अलङ्कार वर्ग सभी का लक्षण शब्द से ग्रहण होता है । गुण और अलङ्कारों के द्वारा जहाँ पर कथा रूप वक्रोक्ति का अतिशय होता है, वहाँ 'भूषण' नामक लक्षण होता है ॥ ६ ॥

यत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते ।
तमप्यक्षरसङ्घातं विद्युल्लक्षणसंज्ञितम् ॥ ७ ॥

---

अक्षरसंघातो--विविधश्लेषोक्तया वा अक्षरविपर्यासेन वोक्तिप्रत्युक्तिवैचित्र्यं यथा उभयाभिसारिकायाम् ।

विटः—भगवति ! वैशिकाचलोऽहमभिवादये ।

परिव्राजिका—न वैशिकाचलेन प्रयोजनं न च वैशेषिकाचलेन ।

विटः—अस्त्येतत्कारणं....

परि—षट्पदार्थबहिष्कृतैः सह संभाषणमस्मद्गुरुभिर्निरुद्धम् ।

विटः—युक्तमेवैतत् । कुतः—

द्रव्यं ते तनुरायताक्षि ! दयिता रूपादयस्ते गुणाः
सामान्यं तव यौवनं युवजनः संस्तौति कर्माणि ते ।
त्वय्यर्थं समवायमिच्छति जनो यस्माद्विशेषोऽस्ति ते
योगस्ते तरुणैर्मनोऽभिलषितैर्मोक्षोऽप्यनिष्टाज्जनात् ॥

---

## २. अक्षरसंघात

अनुवाद—जहाँ पर श्लेष से युक्त थोड़े अक्षरों से विचित्र अर्थ का वर्णन किया जाता है उसे 'अक्षरसंघात' नामक लक्षण समझना चाहिए ॥ ७ ॥

अभिनव—जहाँ विविध श्लेषमयी उक्तियों से अथवा अक्षरों के विपर्यास से उक्ति-प्रत्युक्ति में विचित्रता आये, उसे 'अक्षरसंघात' कहते हैं। जैसे—उभयसारिका में—

विट—हे भगवति ! मैं वैशिकाचल आपका अभिवादन करता हूँ ।

परिव्राजिका—मुझे न वैशिकाचल से प्रयोजन है और न वैशेषिकाचल से ।

विट—क्या इसका कोई कारण है ?

परिव्राजिका—छः पदार्थों का बहिष्कार करने वालों के साथ सम्भाषण करना हमारे गुरुजी ने रोक दिया है ।

विट—यह ठीक ही है । क्योंकि—

"हे आयताक्षि ? तुम्हारे लिए द्रव्य ( पदार्थ ) तुच्छ है, तुम्हारे लिए रूपादि गुण प्रिय है, तुम्हारा यौवन सामान्य है, युवक वर्ग तुम्हारे कर्म ( कार्यों ) की प्रशंसा करते हैं । यह जन तुम्हारे साथ समवाय ( प्रगाढ़ सम्बन्ध चाहता है )। क्योंकि तुम्हारे में विशेष ( विशेषता ) है, मनोऽभिलषित तरुणों के साथ योग है और अनिष्टजनों से तुम्हारा मोक्ष है, छुटकारा है ।

सिद्धैरर्थैः समं कृत्वा ह्यसिद्धोऽर्थः प्रयुज्यते ।
यत्र सा श्लिष्टा विशिष्टार्था सा शोभेत्यभिधीयते ॥ ८ ॥

---

परि—सांख्यमस्माभिर्ज्ञायते अलेपको निर्गुणः क्षेत्रज्ञः पुरुषः ।

विटः—हन्त निरुत्तराः स्मः ।

यथा वा शाकुन्तले सप्तमेऽङ्के "तापसी—सर्वदमन ! शकुन्तलावण्यं पश्य" इत्यत्र शकुन्तलाशब्दः सूचितः ॥ ७ ॥

शोभा—सिद्धैः प्रयोजनैरसिद्धस्य शुभसंघटनं यत्र निर्णीयते सूच्यते वा श्लेष-वक्रोक्तिध्वनिविशेषमहिम्ना चमत्कृतोऽर्थः । केचित्स्वभावस्य प्रकटनमित्याहुः, अपरे तु यूनोः प्रभावप्रकटनमित्याचक्षते । अर्थप्रधाने वस्तुन्येषा परं शोभते । यथा रत्नावल्यां प्रथमेऽङ्के यौगन्धरायणः—

( द्वीपादित्यादिपठित्वा ) कः सन्देहः ।

---

**परिव्राजिका**—हम भी सांख्यशास्त्र को जानते हैं, वहाँ पुरुष निर्लेप, निर्गुण एवं क्षेत्रज्ञ है ।

**विट**—हम निरुत्तर हो गये हैं ।

अथवा जैसे अभिज्ञानशाकुन्तल नाटक के सप्तम अङ्क में—

**तापसी**—'सर्वदमन ! शकुन्तलावण्यं' पश्य' अर्थात् यहाँ 'शकुन्तलावण्य' में शकुन्तला शब्द सूचित किया गया है ॥ ७ ॥

## ३. शोभा

**अनुवाद**—जहाँ पर सिद्ध अर्थों से तुलना करके असिद्ध अर्थ का प्रयोग करते हैं, श्लेष के कारण विशिष्ट अर्थों वाली उसे 'शोभा' कहते हैं ॥ ८ ॥

**अभिनव**--जहाँ पर सिद्ध प्रयोजनों के द्वारा जहाँ पर असिद्ध का शुभ संघटना श्लेष, वक्रोक्ति, ध्वनि विशेष की महिमा से चमत्कारी अर्थ का निर्णय किया जाता है अथवा सूचित किया जाता है, वहाँ 'शोभा' होती है । कुछ लोग स्वभाव के प्रकटन को 'शोभा' मानते हैं । अन्य लोग तो युवक-युवतियों के मनोभाव के प्रकटन को 'शोभा' कहते हैं । अर्थप्रधान वस्तु में यह परम शोभा प्राप्त करती है । जैसे, रत्नावली नाटिका के प्रथम अङ्क में—

**यौगन्धरायण**—'द्वीपादन्यस्मात्' इत्यादि पढ़कर कहता है कि क्या सन्देह है ?

**यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।**
**साध्यन्ते निपुणैरर्थास्तदुदाहरणं स्मृतम् ॥ ९ ॥**

---

प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ दैवेनेत्थं दत्तहस्तावलम्बे ।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि स्वेच्छाचारी भीत एवास्मि भर्तुः ॥

यथा वा कथाशरीरसंघटनवैचित्र्यरूपशोभया अभिज्ञानशकुन्तलायां मधुर-रसप्रसक्तिः ॥ ८ ॥

उदाहरणम्—परेषां दुर्भेद्यपरमार्थेन तुल्यार्थप्रयुक्तेन वाक्येन निगूढाशयः कस्मैचिन्निपुणैर्यत्र प्रकाश्यते तदुदाहरणं, यथा देवीचन्द्रगुप्ते प्रावेशिकी ध्रुवा कुमारचन्द्रगुप्तस्य संशयाकुलमानसस्य प्रवेशावसरसूचकमर्थमुद्द्योतयति—

एसो सिअकरवित्थरपणासिआसेसवेरितिमिरोहो ।
निअविहवरोणचन्दो गअणगिहं लंधिऊं विसई ॥

---

"स्वामी की वृद्धि-हेतु इस कार्य के प्रारम्भ में भाग्य के द्वारा इस प्रकार हाथ का सहारा दिये जाने पर उसकी सिद्धि में सन्देह नहीं है, फिर भी स्वेच्छा से आचरण करने में स्वामी से डरता हूँ।"

अथवा जैसे कथा-शरीर की संघटना के वैचित्र्य रूप शोभा से अभिज्ञान-शाकुन्तल में मधुर रस को प्रसक्ति है ॥ ८ ॥

## ४. उदाहरण

**अनुवाद—जहाँ पर निपुण लोग समानार्थक वाक्यों द्वारा अपने अभिप्राय के प्रदर्शन से अर्थ को सिद्ध करते हैं, उसे 'उदाहरण' नामक लक्षण कहते हैं ॥ ९ ॥**

**अभिनव**—जहाँ पर दूसरों के दुर्भेद्य परम रहस्य को समानार्थक वाक्य द्वारा निगूढ़ आशय को निपुण जन किसी दूसरे के लिए प्रकाशित कर दें, वह 'उदाहरण है। जैसे देवीचन्द्रगुप्त नाटक में प्रावेशिकी ध्रुवा संशय से व्याकुल चित्र वाले कुमार चन्द्रगुप्त के प्रवेशावसर अर्थ को द्योतित करता है—

एष शीतकरविस्तरप्राणाशिताशेषवैरितिमिरौघः ।
निजविभाववरश्चन्द्रो गगनगृहं लङ्घितुं विशति ।।

'यह चन्द्र अपने शीतल किरणों के विस्तार से समस्त शत्रुरूपी अन्धकार को नष्ट करके आकाश रूपी गृह को पार करने के लिए प्रवेश कर रहा है।

यत् प्रयोजनसामर्थ्यात् वाक्यमिष्टार्थसाधकम् ।
समासोक्तं मनोग्राहि स हेतुरिति संज्ञितः ॥ १० ॥

---

यथा वा प्रद्युम्नाभ्युदये तृतीयेऽङ्केऽन्तर्नाटिकायां सूत्रधारवचनम्—

देव ! दनुजाधिप ! त्वां त्रिभुवनलक्ष्मीरिव स्वयं रागात् ।
अभिरूपमभिसृतवती नलकूवरमत्र नाटके रम्भा ॥

सामाजिकीभूतयोः सखीप्रभावत्योः सखी "पिअसहि एसो एव्व मग्गो मअणपरवसाणं इत्थिआणं" इत्युपदिशति । अत्राभिसरणमेव प्रद्युम्नसङ्गमोपाय इत्यर्थः साध्यते ॥ ९ ॥

हेतुः—फलसाधनशक्तियुक्तं मितशब्दार्थं विचित्रभङ्ग्युक्तं वचनम् । यथा—तापसवत्सराजे षष्ठेऽङ्के कृतमरणनिश्चयां वासवदत्तां परिबोधयन् यौगन्धरायण आह—देवि ! प्रसीद,

---

अथवा जैसे प्रद्युम्नाभ्युदय नाटक के तृतीय अङ्क में अन्तर्नाटिका (विष्कम्भक) में सूत्रधार का कथन—

"हे देव ! दनुजाधिप ! त्रिभुवन लक्ष्मी ने जैसे आपको अपने अनुराग से स्वयं अभिसरण किया उसी प्रकार इस नाटक में रम्भा ने राग से अभिरूप (प्रिय) नलकूबर का अभिसरण किया।"

सामाजिक के रूप में स्थित सखी और प्रभावती दोनों में सखी 'हे प्रिय सखी ! काम के परवश स्त्रियों का यही मार्ग है' इस प्रकार उपदेश देती है। यहाँ प्रद्युम्न से मिलने का उपाय एकमात्र अभिसरण ही है।

## ५. हेतु

**अनुवाद**—जहाँ पर प्रयोजन के सामर्थ्य से इष्ट अर्थ के साधक हृदयग्राही संक्षिप्त वाक्य कहा जाय, वहाँ 'हेतु' नामक लक्षण होता है ॥ १० ॥

**अभिनव**—फल-साधन की शक्ति से युक्त, परमित पदार्थ वाला, विचित्र-भङ्गिमाओं में कहा गया 'वचन' कहा जाता है, जैसे, तापसवत्सराज के षष्ठ अङ्क में मरण का निश्चय करने वाली वासवदत्ता को समझाते हुए यौगन्धारणा कहता है—

देवि ! प्रसन्न होओ,

अपरिज्ञाततत्त्वार्थं वाक्यं यत्र समाप्यते ।
अनेकत्वाद्विचाराणां स संशय इति स्मृतः ॥ ११ ॥

---

आसृष्टेः प्रतिपार्थिवं युवतयो जाता मनोवल्लभाः
मग्नास्ते व्यसनार्णवे च बहवस्ताभिः सहैवेश्वराः ।
देव्या यत्तु कृतं तदाविकलतामुत्सृज्य लोकोत्तरं
तस्यैषा कृपणोचितेन विधिना किं ग्लानिरुत्पद्यते ॥

देव्या यत्कृतं तदिष्टार्थसाधनमेव अचिरेणैव शुभफलमनुभवसीति ॥ ९ ॥

संशयोऽसमाप्तवाक्यत्वात्साधनीयविषयस्वरूपे सन्दिग्धावस्था । एषोऽर्थ-कामप्रधानेषु रूपकेषु निपुणं प्रयुज्यते । कुन्दमालायां षष्ठेऽङ्के रामायणकथा-वाचकौ कुशलवौ सीतावृत्तान्तं पठन्तौ—

सीतां निर्जनसंपाते चण्डश्वापदसङ्कुले ।
परित्यज्य महारण्ये लक्ष्मणोऽपि न्यवर्तत ।
ततः प्राणैः परित्यक्ता निराशा जनकात्मजा ।

इति तूष्णींभवतः ।

---

"सृष्टि के प्रारम्भ से ही प्रत्येक राजा के मन के अनुकूल रहने वाली युवतियाँ प्रिय रही है ! घोर संकट रूपी सागर में निमग्न बहुत से राजा लोग भी उनके साथ डूब गये । किन्तु देवी ने जो उस समय विकलता को छोड़कर लोकोत्तर कार्य किया, उसके विषय में अब दीनता से ग्लानि क्यों उत्पन्न हो रही है ।"

यहाँ पर देवी ने जो किया वह इष्ट अर्थ का साधक है । शीघ्र ही आप शुभ फल का अनुभव करेंगी ।

## ६. संशय

अनुवाद—जहाँ पर विचारों की अनेकता के कारण तत्त्वार्थ के ज्ञान हुए बिना ही वाक्य समाप्त हो जाय उसे 'संशय' नामक लक्षण कहते हैं ॥ ११ ॥

अभिनव—वाक्य के समाप्त न होने से साध्य विषय के स्वरूप में सन्दिग्ध अवस्था का होना 'संशय' है । अर्थ और काम प्रधान रूपकों में इसका निपुणता से प्रयोग किया जाता है । जैसे कुन्दमाला के छः सौ अङ्क में रामायण कथा के वाचक लव-कुश पढ़ते हैं ।

"प्रचण्ड हिंसक प्राणियों से व्याप्त निर्जन महारण्य में सीता का परित्याग करके लक्ष्मण भी लौट गये । तब प्राणों से भी प्रिय जनों के द्वारा छोड़ी गई निराश हुई सीता ने....." ।

सर्वलोकमनोग्राहि यस्तु पक्षार्थसाधकः ।
हेतोर्निदर्शनकृतः स दृष्टान्त इति स्मृतः ॥ १२ ॥

---

अप्रियाख्यानभीतेन कविना संहृता कथा ।
किमितः कल्याणमावेदयति । एवं तावदनुयोक्ष्ये इति पृच्छतः ।
संशयालङ्कारस्तु संशयाख्यलक्षणाद् भिन्नचमत्कारतया भिद्यते ।

संक्रुद्धस्य ललाटलोचनभुवा सप्तार्चिषा धूर्जटे—
निर्दग्धे मकरध्वजे रतिरसौ किं स्याद् गृहीतव्रता ।
संवादाद्वनदेवता मुनिवधूवेषप्रपञ्चे मनः
कृत्वेत्थं रमतेऽत्र विग्रहवती किं वा तपश्श्रीरियम् ॥

इत्यादिषु संशयोऽलङ्कार एव न तु संशयाख्यलक्षणम् ॥ १० ॥

---

इतना कहकर चुप हो जाते हैं ।

तब राम और लक्ष्मण कहते हैं—

"सम्भव है, अप्रिय आख्यान के कथन से डरकर कवि वाल्मीकि ने कथा का उपसंहार कर दिया हो ।"

इससे बढ़कर और कल्याण का क्या आवेदन करें । अच्छा तो अब पूछेंगे, ऐसा कहकर पूछते हैं ।

संशयालङ्कार तो संशय नामक लक्षण से भिन्न चमत्कार जनक होने से भिन्न है । जैसे—

"क्रुद्ध हुए शङ्कर जी के ललाटस्थ नेत्र से उत्पन्न अग्नि के द्वारा कामदेव के जला दिये जाने पर क्या रति ने व्रत ग्रहण कर लिया था । परस्पर के संवाद से मुनिवधू के वेष रचना में मन लगाकर क्या वन देवता इस प्रकार यहाँ रमण करती है अथवा साक्षात् शरीर धारिणी तपःश्री यह है ।"

इत्यादि में संशय अलङ्कार है, संशय नामक लक्षण नहीं है ॥ ११ ॥

### ७. दृष्टान्त

**अनुवाद—जो सभी लोगों के मन को आकृष्ट करने वाला पदार्थ का साधक और हेतु का निदर्शनकारी लक्षण है, उसे 'दृष्टान्त' कहा गया है ॥ १२ ॥**

दृष्ट्वैवावय त्न्[1] कांश्चिद् भावो यत्रानुमीयते।
प्राप्तिं तामपि जानीयाल्लक्षणं नाटकाश्रयम् ॥ १३ ॥

---

दृष्टान्तः—धर्माविरुद्धतया सर्वलोकमनोग्राहि वचनं निदर्शनोपष्टम्भं दृष्टान्तसंज्ञकं लक्षणम्। यथा धूर्तविटे "स्त्रीषु प्रसङ्गो न कर्तव्यः" इत्यत्र "भावः किं पश्यतीत्युक्ते "विटः—भोः उपदेशमात्रं खल्वेतत्। तमहं न पश्यामि यः स्त्रीषु प्रसङ्गं न गच्छेत्, श्रूयन्ते महेन्द्रादयोऽप्यहल्याद्यासु विकृतिमापन्नाः" इति।

यथा वा पद्मप्राभृतके स्वसोदरीप्रेयसोऽनुयोगे संदिग्धमानसां देवसेनामाह शशः—

दक्षात्मजाः सुन्दरि! योगताराः किं नैकजाताः शशिनं भजन्ते।
आरुह्यते वा सहकारवृक्षः किं नैकमूलेन लताद्वयेन ॥ १२ ॥

---

**अभिनव**—धर्म का अविरोधी होने के कारण सभी लोगों के मन का आकर्षक निदर्शन सहित वचन 'दृष्टान्त' संज्ञक लक्षण कहा जाता है। जैसे धूर्त्त विट में 'स्त्रियों का प्रसङ्ग ( संसर्ग ) नहीं करना चाहिए' यहाँ पर 'भाव का क्या विचार है ?' ऐसा पूछने पर विट कहता है—'अरे भाई! यह सब उपदेश मात्र है, मैं तो ऐसा किसी को नहीं देखता हूँ, जो स्त्रियों के प्रसङ्ग में नहीं जाता हो, सुना जाता है कि महेन्द्र आदि देवों ने अहल्या आदि के विषय में विकृत हो गये थे।"

अथवा जैसे पद्मप्राभृतक में अपनो सहोदरा बहिन के प्रेमी के पूछने पर सन्दिग्ध मन वाली देवसेना से शश कहता है—

"हे सुन्दरि! दक्ष से उत्पन्न अनेक कन्याओं ने क्या योगतारा के रूप में चन्द्र की आश्रय नहीं लेती। अनेक मूलवाली दो लताएँ क्या सहकार के वृक्ष पर आरोहण नहीं करती ?"

## ८. प्राप्ति

**अनुवाद—जहाँ पर किसी एक अवयव ( अंश ) को देखकर किसी के भाव का अनुमान कर लिया जाय, वहाँ नाटक से सम्बन्धित 'प्राप्ति' नामक लक्षण समझना चाहिए ॥ १३ ॥**

---

१. क. दृष्टैवावयवं किञ्चित् भावो यत्रोपमीयते।
प्राप्तिं तामभिजानीयाल्लक्षणं नाटकाश्रयम्॥
क. (टि॰) प्राप्ति नाम जानीयाद्।

अभूतपूर्वो [1]योऽप्यर्थः सादृश्यात्परिकल्पितः ।
लोकस्य हृदयग्राही सोऽभिप्राय इति स्मृतः ॥ १४ ॥

---

प्राप्तिर्यथा—कुन्दमालायां तृतीयेऽङ्के लक्ष्मणः कानिचित्पदचिह्नानि सैकते दृष्ट्वा राममाह—

विलासयोगेन परिश्रमेण वा स्वभावतो वा निभृतानि मन्थरम् ।
पदानि कस्याश्चिदिमानि सैकते प्रयान्ति तुल्यं कलहंसविभ्रमम् ॥

रामः—( निर्वर्ण्य सहर्षं ) किमुच्यते कस्याश्चिदिति, ननु वक्तव्यं सीतायाः पदानीति । पश्य—

समानं संस्थानं निभृतललिता सैव रचना
तदेवैतद्रेखा कमलरचितं चारुतिलकम् ।
यथा चेयं दृष्ट्वा हरति हृदयं शोकविधुरं
तथा ह्यस्मिन् देव्या सपदि पदपङ्क्तिर्विनिहिता ॥ इति ॥ १३ ॥

---

अभिनव—जैसे कुन्दमाला के तृतीय अङ्क में लक्ष्मण रेत पर कुछ पद चिह्नों को देखकर राम से कहता है—

"विलास के योग से ( क्रीड़ा करते हुए ) अथवा परिश्रम से अथवा स्वभाव से मन्थरता से रेत में निभृत धँसे हुए ये किसी के पैर कलहंस के विलास की समता कर रहे हैं ।

राम—( देखकर, प्रसन्नता के साथ ) क्या कह रहे हो किसी के पैर, ऐसा कहना चाहिए कि सीता के पैर देखो—

"पैरों का विन्यास समान है । विनीत और ललित वहीं रचना है, तिलक और कमल बड़े सुन्दर रूप से बने हुए वही देखा है । जिस प्रकार देखने पर यह पदपंक्ति शोक-विधुर हृदय को हर रही है, ऐसा लगता है कि देवी ने अभी तुरन्त अपने पैरों को रखा है ॥ १३ ॥

## ९. अभिप्राय

अनुवाद—सादृश्य से परिकल्पित अभूतपूर्व जो अर्थ लोगों के हृदय का ग्राही है, उसे 'अभिप्राय कहते हैं ॥ १४ ॥

---

१. क. योऽप्यर्थः ।

यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।
[1]परापेक्षा व्युदासार्थं तन्निदर्शनमुच्यते ॥ १५ ॥

---

अभिप्रायः—अभूतपूर्वं इत्यसत्पदार्थः केवलकल्पितः। केचित्स्वाद्यवस्तुन्यभिधान इत्याहुः तद्वैचित्र्यरहितत्वादुपेक्ष्यम् । यथा तापसवत्सराजे चतुर्थेऽङ्के सांकृत्यायनी यौगन्धरायणोद्योगं विमृश्य प्रणिधिं प्राह—

दूरमुदीर्णे रिपावेवमकिञ्चित्करे च विजिगीषौ ।
भवता तु नयगुणशतैः सोऽयमसूत्रः पटः क्रियते ॥

यथा वा वत्सराजचरिते द्वितीयेऽङ्के चोरः—

भूमिः कराग्रेण विवर्तिताद्य श्वासेन भग्नो हिमवान्महाद्रिः ।
आसारवृष्ट्या शमितोऽग्निरौर्वो विनिर्हतः कीटशतैरनन्तः ॥ १४ ॥

---

अभिनव—अभूतपूर्व का अर्थ है असत् पदार्थ, जो केवल कल्पित हो। कुछ विद्वान् आस्वाद्य वस्तु में अभिमान को अभूतपूर्वता मानते हैं । किन्तु यह विचित्रता रहित होने से उपेक्षणीय है। जैसे, तापसवत्सराज के चतुर्थ अङ्क में सांकृत्यायनी यौगन्धरायण के उद्योग को देखकर गुप्तचर से कहती है—

"शत्रु अत्यधिक उठा हुआ है, ऐसी स्थिति में विजिगीषु अकिञ्चित्कर है। आपने तो सैकड़ों नीतिरूपी उपायों से विना सूत के कपड़ा बुन रहे हैं।"

अथवा जैसे वत्सराजचरित के द्वितीय अङ्क में चोर कहता है—

"आज उँगुलियों से भूमि को विवर्तित कर दिया है, श्वाँस से महान् हिमालय पर्वत को भग्न कर दिया हैं, धाराप्रवाह दृष्टि से बाड़वाग्नि को शान्त कर दिया है और सैकड़ों कीड़ों से शेषनाग को विनिर्हत कर दिया है।"

## १०. निदर्शन

अनुवाद—जहाँ पर दूसरे की अपेक्षा ( आकाङ्क्षा ) को दूर करने के लिए प्रसिद्ध अर्थों का परिकीर्त्तन किया जाय, उसे 'निदर्शन' कहते हैं॥ १५ ॥

---

१. क. (द्वि०) परोपेक्षा । पराक्षेप ।

निरवद्यस्य वाक्यस्य पूर्वोक्तार्थप्रसिद्धये ।
[1]यदुच्यते तु वचनं निरुक्तं तदुदाहृतम् ॥ १६ ॥

निदर्शनं—प्रसिद्धानां देवतादीनां, तत्सम्पत्या परापेक्षा साध्याकांक्षा, तस्माद् व्युदासः । अत एव दृष्टान्तादस्य भेदः । यथा उभयाभिसारिकायां—

शान्ति याति शनैर्महोषधिबलादाशीविषाणां विषं
शक्यो मोचयितुं मदोत्कटकटादात्मा गजेन्द्राद्वने ।
ग्राहस्यापि मुखान्महार्णवजले मोक्षः कदाचिद्भवेद्
वेशस्त्रीवडवामुखानलगतो नैवोत्थितो दृश्यते ॥ १५ ॥

निरुक्तं—यथा वत्सराजचरिते प्रथमेऽङ्के भरतरोहकः राजानमाह—
प्रसह्य हरणे केवलं प्रमादिताख्यातिः ।
राजा—किमेतत् ।
भर—सदोषेषु कार्येषु यदल्पदोषं तत्प्रारब्धव्यम् ।

अभिनव—प्रसिद्धानाम् अर्थात् देवता आदि का । परापेक्षा अर्थात् साध्याकाङ्क्षा । व्युदासार्थं=दूर करने के लिए । इसीलिए दृष्टान्त से इसका भेद है । जैसे उभयाभिसारिका में—

"महौषधियों के प्रभाव से साँपों का विष शान्त हो जाता है, जङ्गल में मदोन्मत्त हाथी से अपने को छुड़ाया जा सकता है । महासागर के जल में ग्राह के मुख से भी कदाचित् मुक्ति मिल सकती है । किन्तु वेश्याङ्गना रूपी वड़वाग्नि में पड़ा हुआ व्यक्ति कभी उठा हुआ नहीं दिखाई देता ॥ १५ ॥

## ११. निरुक्त

**अनुवाद**—पूर्व कथित अर्थ को सिद्ध करने के लिए निरवद्य वाक्य का जो कथन किया जाता है, उसे 'निरुक्त' नामक लक्षण कहते हैं ॥ १६ ॥

**अभिनव**—जैसे वत्सराजचरित के प्रथम अङ्क में भरतरोहक राजा से कहता है—

बलात् ( जबर्दस्ती ) हरण करने में प्रभावी होना केवल ख्याति है ।
राजा—यह क्या कहते हो ।
भरतरोहक—सदोष कार्यों के रहने पर जिसमें अल्पदोष हो, उस कार्य का आरम्भ करना चाहिए ।

१. क. (टि०) तदप्यागमसम्भूतं निरुक्तमभिनिर्दिशेत् ।

बहूनां च प्रधानानां नाम यत्राभिकीर्त्यते ।
अभिप्रेतार्थसिद्धयर्थं सा सिद्धिरभिधीयते ॥ १७ ॥
सिद्धान् बहून् प्रधानार्थान् उक्त्वा यत्र प्रयुज्यते ।
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥ १८ ॥

---

वसुवर्मा—स्वामिन् ! तत्राप्यहं वाच्यदोषं न पश्यामि । कुतः ?

नीता बलात्प्रकृतिभद्रतरा सुभद्रा
यद्वा सुभद्रभगिनी कपिकेतनेन ।
देवस्य तेन समभूद्वचनीयता किं
तेजः प्रकाशयशसां यदुदन्तिनां वा ॥

शालं—साधु, निरुक्तमभिहितं वसुवर्मणा ॥ १६ ॥

सिद्धि.—प्रधानानां स्पृहणीयानां प्रयोजनान्तराणामतर्कितोपलब्धानां परिकीर्तनम् । यथा कौमुदीमहोत्सवे चतुर्थेऽङ्के मन्त्रगुप्तवचनं—

सङ्गतिश्चिरमचिन्तितपूर्वा निर्वृतप्रणयिनो मिथुनानाम् ।
आधिराज्यमधिरोहति तस्याः षोडशीमपि कलां न मघोनः ॥ १७ ॥

---

वसुवर्मा—उनमें भी मैं कोई वाच्य दोष नहीं देख रहा हूँ । क्योंकि—

"स्वतः कल्याणकारी जो वासुदेव श्रीकृष्ण को बहिन सुभद्रा को बलात् अर्जुन ने अपहरण कर लिया था तो क्या अर्जुन को निन्दा हुई थी ? अथवा तेज के प्रकाश से चमकते हुए यश वाले यदुवंशियों के हाथियों को क्या निन्दा हुई ?"

शालङ्कायन—अच्छा, वसुवर्मा ने निरुक्त को कह दिया ॥ १६ ॥

## १२. सिद्धि

**अनुवाद**—जहाँ पर अपने अभीष्ट अर्थ को सिद्धि के लिए बहुत से प्रसिद्ध नामों का आख्यान किया जाता है उसे 'सिद्धि' नामक लक्षण कहा जाता है ॥ १७ ॥

**अभिनव**—'प्रधानानां' का अभिप्राय है स्पृहणीय तथा अतर्कितोपलब्ध अन्य प्रयत्नों का कथन ( परिकीर्त्तन ) सिद्धि है । जैसे कौमुदीमहोत्सव के चतुर्थ अङ्क में मन्त्रगुप्त का वचन—

"जिसका पहिले कभी चिन्तन नहीं किया, ऐसे दोनों को सङ्गति ( मिलन ) परम आनन्ददायिनी होती है, जिसकी सोलहवीं कला को इन्द्र का अधिराज का पद भी प्राप्त नहीं कर सकता ।"

गुणाभिधानैर्विविधैर्विपरीतार्थयोजितैः ।
गुणातिपातो मधुरैर्निष्ठुरार्थैर्भवेदथ[1] ॥ १९ ॥

विशेषणं—यथा तापसवत्सराजे तृतीयेऽङ्के राजा विदूषकमाह–अयि मूढ !
वृत्तिर्मूलफलादिभिः क्षितितले शय्या जटाधारणं
वासो वल्कलमीदृशं कृतमिदं सामान्यमन्यैरपि ।
संवेगाभिभवे विमूढमनसा यन्नानुयाता प्रिया
तन्मिथ्यापरिबोधितेन न कृतं स्नेहानुरूपं मया ॥ इति ॥ १८ ॥
गुणातिपातो—यथा धूर्तविटे विटः—
जात्यन्धां सुरतेषु दीनवदनामन्तर्मुखाभाषिणीं
हृष्टस्यापि जनस्य शोकजननीं लज्जापटेनावृताम् ।
निर्व्याजं स्वयमप्यदृष्टजघनां स्त्रीरूपबद्धां पशुं
कर्तव्यं खलु नैव भोः कुलबधूकारां प्रवेष्टुं मनः ॥

## १३. विशेषण

अनुवाद—जहाँ पर बहुत से प्रधान अर्थों को कहकर विशेषताओं से युक्त वचन कहा जाय, उसे 'विशेषण' कहते हैं ॥ १८ ॥

अभिनव—जैसे तापसवत्सराज के तृतीय अङ्क में राजा विदूषक से कहता है—अरे मूढ़ ?

"कन्दमूल फल आदि से जीविका का निर्वाह, पृथ्वी पर शयन, जटाओं का धारण तथा वल्कल का वस्त्र धारण करना ऐसा आचरण तो सामान्य लोगों ने भी किया है किन्तु विक्षेप अभिभूत विमूढ़-चित्त मैंने प्रिया का अनुनय नहीं किया, वह मिथ्या ज्ञान के कारण मैंने स्नेह के अनुरूप नहीं किया ॥ १८ ॥

## १४. गुणातिपात

अनुवाद—जहाँ पर मधुर एवं निष्ठुर अर्थों से युक्त विपरीत अर्थों से योजित विविध गुणों का कथन किया जाय, वहाँ 'गुणातिपात' लक्षण होता है ॥ १९ ॥

अभिनव—जैसे धूर्तविट में विट का कथन—

"जाति से अन्धी, सुरत में दीनवदना, मुख के भीतर बोलने वाली, प्रसन्न जन को भी शोकाकुल करने वाली, लज्जारूपी कपड़े से आवृत, विना ब्याज (बहाने) के स्वयं जघन-स्थल को न देखने वाली कुलवधू के आकार में स्त्री के रूप में बँधे हुए पशु के पास जाने के लिए कभी भी मन नहीं करना चाहिए।

१. क. निष्ठुरार्थो भवेद्यथा ।

बहून् गुणान् कीर्तयित्वा सामान्यजनसम्भवान् ।
विशेषः कीर्त्यते यस्तु ज्ञेयः सोऽतिशयो बुधैः ॥ २० ॥
[1]रूपकैरुपमाभिर्वा तुल्यार्थैः सुप्रयोजितैः ।
अप्रत्यक्षार्थसंस्पर्शस्तुल्यतर्कः प्रकीर्तितः ॥ २१ ॥

---

अत्र कुलस्त्रीसमुचिता विनयलज्जादयो गुणा विपरीतार्थयोजिताः ॥ १९ ॥
अतिशयो यथा—विलक्षकुरुपतौ धृतराष्ट्रं प्रति भीष्मः—
एतत्ते हृदयं स्पृशामि यदि वा साक्षी तवैवात्मजः
संप्रत्येव तु गोग्रहे यदभवत्तत्तावदाकर्ण्यताम् ।
एकः पूर्वमुदायुधैः स बहुभिर्दृष्टस्ततोऽनन्तरं
यावन्तो वयमाहवप्रणयिनस्तावन्त एवार्जुनाः ॥ इति २० ॥
तुल्यतर्को—यथा वत्सराजचरितेऽष्टमेऽङ्के राजा—
नवार्कभापल्लवितामलोदरे सुगन्धिरेणूत्करकेसरोज्ज्वले
रसामृतज्ञो भ्रमरः सरोरुहे किमर्कपुष्पे प्रणयं करिष्यति ॥ इति २१ ॥

---

यहाँ पर कुलस्त्री के योग्य लज्जा, विनय आदि गुण विपरीत अर्थ में योजित होने से 'गुणातिपात' है ॥ १९ ॥

### १५. अतिशय

**अनुवाद—जहाँ पर सामान्य लोगों में रहने वाले बहुत से गुणों को बतला कर विशेष का कीर्त्तन किया जाय वहाँ 'अतिशय' नामक लक्षण समझना चाहिए ॥ २० ॥**

**अभिनव—कुरुराज के लज्जित होने पर धृतराष्ट्र के प्रति भीष्म का कथन—**

"यह तुम्हारे हृदय का स्पर्श करके कहता हूँ अथवा तुम्हारा आत्मज ( पुत्र ) ही साक्षी है । अभी-अभी गो-ग्रहण के समय जो कुछ हुआ, उसे सुनिये । पहिले तो अस्त्र-शस्त्रों को उठाये हुए हम लोगों ने एक अर्जुन को देखा, बाद में जितने युद्ध के प्रेमी हम लोग थे, उतने अर्जुन दिखाई देने लगे ॥ २० ॥

### १६. तुल्यतर्क

**अनुवाद—जहाँ पर समान अर्थ वाले रूपक अथवा उपमा के द्वारा प्रयुक्त किये गये परोक्ष ( अप्रत्यक्ष ) अर्थ संस्पर्श हो, उसे 'तुल्यतर्क' कहते हैं ॥ २१ ॥**

---

१. क. (टि०) रूपकैरुपमानैर्वा तुल्यार्थाभिः प्रयोक्ताभिः ।
अप्रत्ययार्थं संस्पृष्टः तुल्यतर्क इति स्मृतः ॥

बहूनां च[1] प्रयुक्तानां पदानां बहुभिः पदैः।
उच्चयः सदृशार्थो यः स विज्ञेयः पदोच्चयः ॥ २२ ॥
यथादेशं यथाकालं यथारूपं च वर्ण्यते।
यत्प्रत्यक्षं परोक्षं वा दृष्टं तद्वर्णतोऽपि वा ॥ २३ ॥

---

पदोच्चयः—यथा वत्सराजचरिते षष्ठेऽङ्के राजोत्तमसचिवं वर्णयति—

खड्गो रक्षान्धकारे रविररितिमिरे कार्यभारेषु धुर्यः
दीपो मन्त्रान्धकारे सुरगुरुरनये सङ्क्रमी व्यापदोषे।
उत्कण्ठायां सभागो गतिरनवसरे चन्दनं शोकतापे
संक्षेपान्मानुषाभो हितशिवसुखदो भव्यचिन्तामणिर्मे ॥ २२ ॥

---

**अभिनव**—जैसे, वत्सराजचरित के अष्टम अङ्क में राजा का कथन—

'सूर्य की नवीन किरणों से पल्लवित निर्मल उदर वाले, सुगन्धित परागों से युक्त केशरों से उज्ज्वल कमल के रसामृत मर्मज्ञ भौंरा क्या मन्दार के फूल में प्रणय (प्रेम) करेगा ? ॥ २१ ॥

### १७. पदोच्चय

**अनुवाद—जहाँ पर बहुत से पदों का अनेक पदों के साथ समानता बतलाते हुए प्रयोग किया जाय, उसे 'पदोच्चय' नामक लक्षण समझना चाहिए ॥ २२ ॥**

**अभिनव**—जैसे वत्सराज नाटक के षष्ठ अङ्क में राजा उत्तम सचिव का वर्णन करते हुए कहता है—

"रक्षारूप अन्धकार में खड्ग, शत्रुरूपी अन्धकार को दूर करने में सूर्य, कार्यभार को वहन करने में वृषभ, मन्त्रणा के समय उत्थित कठिनाइयों को दूर करने में दीपक, अनीति के समय बृहस्पति के समान विपत्तियों को दूर करने वाला, उत्कण्ठा के समय सहभागी, अनवसर में गति, शोकरूपी ताप को दूर करने में चन्दन, संक्षेप में मनुष्य के समान हित, मङ्गल एवं सुख को देने वाला अमात्य मेरे लिए भव्य चिन्तामणि हैं ॥ २२ ॥

### १८. दृष्ट

**अनुवाद—जहाँ पर देश, काल एवं रूप के अनुसार प्रत्यक्ष अथवा परोक्ष अर्थ का वर्णन किया जाता है, उसे 'दृष्ट' नामक लक्षण कहते हैं ॥ २३ ॥**

---

१. क. (टि०) बहूनां सम्प्रयुक्ताना पादानां।

परिगृह्य तु शास्त्रार्थं यद्वाक्यमभिधीयते ।
[1]विद्वन्मनोहरं स्वन्तमुपदिष्टं तदुच्यते ॥ २४ ॥

---

दृष्टं प्रत्यक्षं यथा मालविकाग्निमित्रे—

वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्तादस्याः स्थितमतितरां कान्तमृज्वायताक्षम् ॥ इति ।

परोक्षं यथा पादताडितके मदनसेनाया वर्णनं—

उत्क्षिप्तालकमीक्षणान्तगलितं कोपाञ्चिताान्तभ्रुवा
दष्टार्धोष्ठमधीरदन्तकिरणं प्रोत्कम्पयन्त्या मुखम् ।
शिञ्जन्नुपुरया विकृष्य विगलद्रक्तांशुकं पाणिना
मूर्धन्यस्य सनुपुरः स मदया पादोऽर्पितः कान्तया ॥ इति २३ ॥

---

अभिनव—दृष्ट प्रत्यक्ष जैसे मालविकाग्निमित्र में नायिका का वर्णन—

"इस नायिका का वलय सन्धियों में निश्चल होकर वामहस्त नितम्ब पर रखकर दूसरे हाथ को श्यामा लता के शाखा के समान खुला छोड़ दिया है और पैर के अंगठे से चञ्चल ( ठुकराये गये ) कुसुम वाले फर्श पर आँखें गड़ाये हुए इस नायिका का कान्त, कोमल और आयत नेत्र नृत्त के बाद अत्यन्त स्थिर हैं ।"

परोक्ष दृष्ट का उदाहरण जैसे पादताड़ितक में मदनसेना का वर्णन—

"नेत्रों के समीप तक गिरे हुए बालों को ऊपर उठाये हुए क्रोध से अञ्चित ( धनुषाकार ) भौंहों वाली, दबे हुए आधे ओष्ठ वाले तथा स्वच्छ दन्त किरणों से अधीर मुख को कम्पित करने वाली, झङ्कारयुक्त नुपरों वाली, खिसकते हुए रक्ताशुक को हाथ से ऊपर की ओर खींचकर मदमस्त कान्ता ने उसके मस्तक पर नुपुर-सहित पैर रख दिया ।" ॥ २२ ॥

## १९. उपदिष्ट

अनुवाद—जब शास्त्र के अर्थ को लेकर विद्वानों के मन को हरने, वाले और परिणाम में सुखद जो वाक्य कहा जाय, उसे 'उपदिष्ट' नामक लक्षण कहते हैं ॥ २४ ॥

---

१. क. (टि०) विदुर्षनोहरं ।

पूर्वाशयसमानार्थैरप्रत्यक्षार्थसाधनैः ।
[1]अनेकोपाधिसंयुक्तो विचारः परिकीर्तितः ॥ २५ ॥

---

उपविष्टं—यथाविमारके प्रथमेऽङ्के राजा—

धर्मः प्रागेव चिन्त्यः सचिवमतिगतिः प्रेक्षितव्या स्वबुध्या
प्रच्छाद्यौ रागरोषौ मृदुपरुषगुणौ कालयोगेन कार्यौ ।
ज्ञेयं लोकानुवृत्तं परचरनयनैर्मण्डलं प्रेक्षितव्यं
रक्ष्यो यत्नादिहात्मा रणशिरसि पुनः सोऽपि नावेक्षितव्यः ॥

यथा वा तन्त्रान्तरविषये धूर्तविटे—

शून्ये वासं प्रमद्य द्विरद इव लतां यो हरत्याशु नारीं
वामां वा यो विदित्वा ह्यभिभवति शनै रञ्जयन् वाक्यलेशैः ।
अन्यं कृत्वोपधिं वा छलयति कुरुते भावसङ्गूहनं वा ।
तस्यैतच्चेष्टितं भो न भवति विफलं वामशीला हि नार्यः ॥ २४ ॥

---

अभिनव—जैसे अविमारक के प्रथम अङ्क में—

"सर्वप्रथम धर्म का चिन्तन करें, फिर सचिवों की बुद्धि की गति को अपनी बुद्धि से देखना चाहिए । राग और द्वेष को छिपाना चाहिए, समय-समय पर मृदुता और कठोरता का कार्य करना चाहिए, गुप्तचरों के नेत्रों से लोकवृत्त का ज्ञान करना चाहिए और मण्डलों का निरीक्षण करना चाहिए। यत्नपूर्वक अपनी रक्षा करनी चाहिए, किन्तु रणभूमि में उसकी भी परवाह नहीं करनी चाहिए ।"

अथवा जैसे तन्त्रान्तर के विषय में धूर्तविट में—

"जिस प्रकार हाथी लता को खींचकर नष्ट कर देता है। उसी प्रकार शून्य घर में घुसकर नारियों का अपहरण कर लेता है। यह वामा ( मानिनी ) है, ऐसा जानकर मधुर वचनों से धीरे-धीरे प्रसन्न करके अपने वश में कर लेता है, फिर छल करके छलता है और अपने भावों को छिपाता है, उसकी ये सब चेष्टाएँ विफल नहीं होती, क्योंकि स्त्रियाँ स्वभाव से विपरीत आचरण वाली होती हैं ॥ २४ ॥

## २०. विचार

अनुवाद—पूर्व में प्रवृत्त अर्थ के समान अर्थ वाले परोक्ष अर्थ के साधक तथा अनेक उपाधियों से संयुक्त वचन 'विचार' कहा जाता है ॥ २५ ॥

---

१. क. (हि०) अनेकोपायसंयुक्तो । तिरस्कृतार्थविषयो ।

**विचारस्यान्यथाभावस्तथा दृष्टोपदिष्टयोः[1] ।**
**सन्देहात्कल्प्यते यस्तु स विज्ञेयो विपर्ययः ।। २६ ।।**

प्रवृत्तार्थानुसारि परोक्षार्थसाधकं बहूपायोपाधिदर्शनं वाक्यं विचारः यथा मुद्राराक्षसे पञ्चमेऽङ्के राक्षसवाक्यं—

साध्ये निश्चितमन्वयेन घटितं बिभ्रत्सपक्षे स्थितिं
व्यावृत्तं च विपक्षतो भवति यत्तत्साधनं सिद्धये ।
यत्साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धं च य
त्तस्याङ्गीकरणेन वादिन इव स्यात्स्वामिनो निग्रहः ।। २५ ।।

अथवा विज्ञातापरागहेतुभिः प्राक्परिगृहीतोपजापैरापूर्णमिति न विकल्पितुमर्हामि ।। इति ।। २५ ।।

विपर्ययो—यथा रावणं प्रति सचिवः—

उदर्कसिद्धिमिच्छद्भिः सद्भिर्न खलु दृश्यते ।
चतुर्थीचन्द्रलेखेव परस्त्रीफालपट्टिका ।।

**अभिनव**—प्रवृत्त अर्थ का अनुगामी, परोक्ष अर्थ का साधक अनेक उपाय एवं उपाधियों का दर्शक वाक्य 'विचार' है।

जैसे मुद्राराक्षस नाटक के पञ्चम अङ्क में राक्षस का वाक्य—

"साध्य में निश्चित रूप वाला अन्वय से घटित सपक्ष में स्थित और विपक्ष से व्यावृत्त साधन ( हेतु ) साध्य की सिद्धि में समर्थ होता है। किन्तु जो स्वयं साध्य है और अनुकूल एवं प्रतिकूल दो स्थितियों में समान है और पक्ष में विरुद्ध है, उसके स्वीकार करने में वादी के समान स्वामी का भी निग्रह हो जाता है।"

असन्तोष ( विराग ) के हेतुओं ( कारणों ) से जिन्हें जान लिया है तथा शत्रु के भेद नीति को स्वीकार किये हुए लोगों से यह मण्डल भरा हुआ है, अतः विकल्प करना उचित नहीं है ।। २५ ।।

## २१. विपर्यय

**अनुवाद**—जहाँ पर दृष्ट अथवा उपदिष्ट लक्षणों में सन्देह के कारण विचार के विपरीत कल्पना की जाय, उसे 'विपर्यय' लक्षण समझना चाहिए ।। २६ ।।

**अभिनव**—जैसे रावण के प्रति उनका सचिव कहता है—

"परिणाम में उत्तम फल के इच्छुक सज्जनों को भाद्रपद की चतुर्थी के चन्द्र के समान पराई स्त्री के भालपट्ट को नहीं देखना चाहिए।"

१. क. (टि०) दिष्टोपदिष्टयोः । दृष्टोपदृष्टयोः ।

आम्नायसिद्धं सर्वासां शुभमप्सरसां[1] वचः ।
संसर्गाद्देवतानां च तद्धि लोकोऽनुवर्तते ॥ ४४ ॥
[2]छन्दतः प्राकृतं [3]पाठ्यं स्मृतमप्सरसां भुवि ।
मानुषाणां च कर्तव्यं कारणार्थव्यपेक्षया ॥ ४५ ॥
न बर्बरकिरातान्ध्रद्रमिलाद्यासु जातिषु ।
नाट्यप्रयोगे[4] कर्त्तव्यं पाठ्यं भाषासमाश्रयम् ॥ ४६ ॥

---

आम्नायः पुराणादिः लोकोऽनुवर्तते अनुमन्यत इति यावत् ॥ ४४ ॥

द्रमिडकादि पूर्वविधानादिनिषेधो विशिष्टेष्विति पर्यन्तवासिषु द्रमिडेषु द्रष्टव्यो, बर्बरान्ध्रादिसाहचर्याद् जाङ्गलदेशादिगतेषु ॥ ४५ ॥

शुद्धास्विति अनुलोमवशेन संस्कारवत्सु जातिष्वपीति पाठः ॥ ४७ ॥

---

अनुवाद—देवताओं से संसर्ग ( सम्बन्ध ) होने से सभी अप्सराओं के वचन शुभ है, यह आम्नाय सिद्ध अर्थात् शास्त्रानुमोदित है अतः लोक भी उसका अनुवर्त्तन करता है ॥ ४४ ॥

अभिनव—यहाँ पर 'आम्नाय' पद का अर्थ पुराणादि है, लोक उन्हीं पुराणादि का अनुवर्त्तन करता है ॥ ४४ ॥

अनुवाद—लोक में अर्थात् पृथ्वी पर अप्सराओं का पाठ्य (संवाद) स्वभावतः प्राकृत में कहा गया है और कारणवश प्रयोजन की अपेक्षा से मनुष्यों को भी प्राकृत में संवाद ( पाठ्य ) करना चाहिए ॥ ४५ ॥

अनुवाद—बर्बर, किरात, आन्ध्र, द्रमिल आदि जातियों को नाट्य-प्रयोग में अपनी जातीय भाषा में पाठ्य नहीं करना चाहिए ॥ ४६ ॥

अभिनव—द्रमिड़ादि में जो पूर्व में भाषा के विषय में कहे गये विधान का निषेध कहा गया है उसे पर्यन्तवासी द्रामिड आदि विशिष्ट लोगों में भी समझना चाहिये। वर्बर, आन्ध्र आदि के साहचर्य से जाङ्गल देश आदि के लोगों में भी समझना चाहिये ॥ ४६ ॥

---

१. ख. शुभंचाप्सरसां वचः । २. क-भ. छन्दसां । ख. वाक्यं ।

३. ख.ग. जातिष्वेतासु सर्वासु श्रद्धासु च द्विजोत्तमाः ।

४. ख. सौरसेनं समाश्रित्य भाषा कार्या तु नाटके ।

ख. पुस्तके तु इतः प्रभृति श्लोकचतुष्टयं नास्तीति ॥

सर्वास्वेह हि शुद्धासु जातिषु द्विजसत्तमाः ।
शौरसेनी समाश्रित्य भाषां काव्येषु योजयेत् ॥ ४७ ॥

अथवा छन्दतः कार्या देशभाषा[1] प्रयोक्तृभिः ।
नानादेशसमुत्थं हि [2]काव्यं भवति नाटके ॥ ४८ ॥
मागध्यवन्तिजा प्राच्या [3]शौरसेन्यर्धमागधी ।
बाह्लीका दक्षिणात्या च सप्तभाषाः प्रकीर्तिताः ॥ ४९ ॥
[4]शकाराभीरचण्डालशवरद्रमिलान्ध्रजाः ।
हीना वनेचराणां च विभाषा नाटके स्मृता ॥ ५० ॥

---

देशभाषां संक्षिप्याह मागधीत्यादि । भाषा संस्कृतापभ्रंशः ॥ ४९ ॥

---

अनुवाद—हे द्विजसत्तम ! सभी शुद्ध जातियों को काव्य में शौरसेनी का आश्रय लेकर अर्थात् शौरसेनी भाषा का प्रयोग करना चाहिए ॥ ४७ ॥

अभिनव—यहाँ शुद्धा का अर्थ है अनुलोभ के कारण संस्कार युक्त जातियों में भी संस्कृत पाठ्य होता है ॥ ४७ ॥

अनुवाद -अथवा नाट्य में प्रयोक्ताओं को अपनी इच्छानुसार देश भाषा का प्रयोग करना चाहिए, क्योंकि नाट्य में विभिन्न देश की भाषाओं में रचित काव्य होता है ॥ ४८ ॥

विशेष—जिस प्रदेश में नाट्य प्रयोग करना हो, नाट्य में उसी देश की भाषा का प्रयोग करना चाहिए ।

अब देश भाषा का संक्षेप में वर्णन करते हैं—

अनुवाद—मागधी, अवन्तिजा, प्राच्या, शौरसेनी, अर्धमागधी, बाह्लीका और दक्षिणात्या ये सात भाषायें हैं ॥ ४९ ॥

अभिनव—यहाँ भाषा से तात्पर्य है संस्कृत की अपभ्रंश भाषाएँ ॥ ४९ ॥

इनके अतिरिक्त सात भाषाएँ भी हैं—

अनुवाद—शकार, आभीर, चाण्डाल, शबर, द्रमिल, आन्ध्र तथा वनेचरों की भाषायें—नाटक में ये सात विभाषायें कही गई हैं ॥ ५० ॥

---

१. क. (टि०) दैवीभाषा । २. क. कार्यं ।
३. क. (टि०) शूरसेना । शूरसेनी ।
४. ग. शवराभीरचण्डालसचरद्रविडोद्रजाः ।

मागधी तु [1]नरेन्द्राणामन्तःपुरसमाश्रया[2] ।
चेटानां राजपुत्राणां श्रेष्ठिनां चार्धमागधी ॥ ५१ ॥
प्राच्या विदूषकादीनां धूर्तानामप्यवन्तिजा[3] ।
नायिकानां सखीनां च शूरसेन्यविरोधिनी[4] ॥ ५२ ॥
[5]यौधनागरकादीनां दक्षिणात्याथ दीव्यताम् ।
वाह्लीकभाषादीच्यानां [6]खसानां च स्वदेशजा ॥ ५३ ॥

---

भाषापभ्रंशस्तु विभाषा सा तत्तद्देश एव गह्वरवासिनां प्राकृतवासिनां च. एता एव नाट्ये तु। अन्ये तु निदर्शनार्थत्वादस्य पैशाच्यादयोऽपि प्रयोज्या इत्याहुः ॥ ५० ॥

नरेन्द्राणां यदन्तःपुरं तन्निवासिनामिति संबन्धः ॥ ५१ ॥

दीव्यतामिति कितवानाम् ॥ ५३ ॥

---

अभिनव—भाषा की अपभ्रंश भाषाएँ विभाषा होती है। वह अपभ्रंश भाषा उन-उन देशों की गह्वर गुफाओं में रहने वाले साधारण लोगों की भाषा है। ये नाट्य में प्रयुक्त होती है। अन्य लोग तो यह निदर्शन के जिए है, ऐसा कहते हैं। नाट्य में पैशाची आदि भाषाओं का भी प्रयोग करना चाहिए ॥ ५० ॥

अनुवाद—मागधी भाषा तो राजाओं के अन्तःपुर में रहने वाले सेवक आदि लोगों की भाषा है और चेट, राजकुमारों एवं श्रेष्ठिजनों की भाषा अर्धमागधी है ॥ ५१ ॥

अभिनव—राजाओं के अन्तःपुर में रहने वाले लोगों की भाषा अर्धमागधी है ॥ ५१ ॥

अनुवाद—विदूषक आदि की भाषा प्राच्या और धूर्तों की भाषा अवन्तिजा, नायिका और उनकी सखियों की अविरोधिनी शौरसेनी भाषा होती है ॥ ५२ ॥

अनुवाद—जुआरियों, योद्धाओं और नागरकों आदि की दक्षिणात्या भाषा और उदीच्यों अर्थात् उत्तर भारत के निवासियों और खसों की अपने देश की भाषा वाह्लीकी होती है ॥ ५३ ॥

अभिनव—'दीव्यताम्' का अर्थ है जुआ खेलने वालों का।

---

१. ख. नराणां । २. ख. ग. पुरनिवासिनाम् ।
३. ख. ग. भाषा अवन्तिजा । ४. ख. सौरसेन्या विरोधिनी ।
५. ख. योधमागरिकादीनां । ६. क. (टि०) खस्थानां च स्वदेशजाः ।

[1]शकारघोषकादीनां तत्स्वभावश्च यो गणः ।
शकारभाषा योक्तव्या [2]चाण्डाली पुल्कसादिषु ॥ ५४ ॥
अङ्गारकारकव्याधकाष्ठयन्त्रोपजीविनाम् ।
योज्या [3]शकारभाषा तु किंचिद्वानौकसी तथा ॥ ५५ ॥
गजाश्वाजाविकोष्ट्रादिघोषस्थाननिवासिनाम् ।
आभीरोक्तिः शाबरी वा द्रामिड़ी वनचारिषु[4] ॥ ५६ ॥

---

शकारा नीचाभिजनाः अर्थयुक्तत्वेन सदर्पाः । शकारबहुला भाषा शकारभाषा । पुल्कसो डोम्बः मृतप इत्यन्ये ॥ ५४ ॥

वनौकसामियं वनेचरीत्यर्थः ॥ ५५ ॥

---

अनुवाद—शकार, घोष आदि तथा उसी स्वभाव के जो और वर्ग है, उन्हें शकारी भाषा का प्रयोग करना चाहिये और पुल्कस अर्थात् डोम आदि जातियों को चाण्डाली भाषा का प्रयोग करना चाहिये ॥ ५४ ॥

अभिनव—शकार का अर्थ है नीच अभिजन वाले, जो अर्थयुक्त अर्थात् धन सम्पन्न होने से घमण्डी होते हैं। शकारबहुल भाषा को शकारी भाषा कहते हैं। पुल्कस का अर्थ है डोम। अन्य लोग मृतप अर्थात् मुर्दों का सेवक अर्थ करते है ॥ ५४ ॥

अनुवाद—कोयला के व्यवसायी, बहेलिये, लकड़ी बेचने वाले तथा पत्तल बेचकर जीविका चलाने वाले मुसहर आदि की भाषा शकारी होनी चाहिये और वनेचरों की भाषा जंगली होनी चाहिये ॥ ५५ ॥

अभिनव—वन ही जिसका घर है ऐसे वनेचरों की भाषा वनौकसी होती है ॥ ५५ ॥

अनुवाद—हाथी, घोड़े, बकरे, भेड़, ऊँट आदि के निवास-स्थान में रहने वाले व्यक्तियों की भाषा आभीरी अथवा शाबरी होती है और वनेचरों की भाषा द्राविड़ी होती है ॥ ५६ ॥

---

१. ख. ग. शबराणां शकादीनां ।
२. क-ङ. पाञ्चाली ।
३. ख. ज्ञेया शबरभाषा ।
४. ख. द्राविड़ा द्रविड़ादिषु । द्रामिड़ो द्रमिलादिषु ।

[1]सुरङ्गाखनकादीनां सन्धिकाराश्वरक्षताम् ।
व्यसने [2]नायकानां चाप्यात्मरक्षासु मागधी[3] ॥ ५७ ॥
गङ्गासागरमध्ये तु ये देशाः संप्रकीर्तिताः ।
[4]एकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् ॥ ५८ ॥

---

सुरङ्गाखनकाः सन्धिच्छेदकृतः । कारा बन्धनगृहम् । व्यसनं कस्यांचिदापदि जातायां मा मां लोको ज्ञास्यतीतित्यभिप्रायेणात्मनो रक्षार्थं नयोऽपि मागध्या व्यवहरेत् ॥ ५७ ॥

गङ्गासागरमध्य इति पूर्वदेश उपलक्षितः ॥ ५८ ॥

---

अनुवाद—सुरङ्ग खोदने वाले, सेंध लगाने वाले, घोड़ों के रक्षक सईसों तथा व्यसन में पड़े हुए नायकों को आत्मरक्षा के प्रसङ्ग में मागधी भाषा का प्रयोग करना चाहिए ॥ ५७ ॥

अभिनव—सुरङ्ग खोदने वालों को, सन्धि स्थलों का छेद ( भेदन ) करने वालों की । कारा अर्थात् कैदियों का बन्धन गृह । किसी आपत्ति में पड़ने पर 'मुझे लोग न पायें' इस अभिप्राय से अपनी रक्षा के लिए नायक को भी मागधी भाषा का प्रयोग करना चाहिए ॥ ५७ ॥

अनुवाद—गङ्गा और समुद्र के मध्य में जो देश कहे गये हैं, उन देशों में विद्वानों को एकार बहुल भाषा का प्रयोग करना चाहिये ॥ ५८ ॥

अभिनव—'गङ्गा और सागर के मध्य' इस पद से पूर्व देशों के निवासी लोग उपलक्षित है ॥ ५८ ॥

---

१. ख. सुरङ्गवनकादीनां सौण्डीकाराश्च रक्षिणाम् ।
   ग. सुरङ्गाखनकादीनां अमौष्ट्रिकाणां च रक्षसाम् ।
२. ख. ग. नायिकादीनां ।
३. न बर्बरकिरातान्ध्रद्रमिलाद्यासु जातिषु ।
   नाट्यप्रयोगे कर्तव्यं काव्यं भाषासमाश्रितम् ॥ अत्यधिकं दृश्यते ।
   ख. ग. पुस्तकयोर्नास्ति ।
४. क-म. षकारबहुलां ।

विन्ध्यसागरमध्ये तु ये देशाः श्रुतिमागताः ।
[1]नकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् ॥ ५९ ॥
सुराष्ट्रावन्तिदेशेषु वेत्रवत्युत्तरेषु[2] च ।
ये देशास्तेषु कुर्वीत चकारप्रायसंश्रयाम् ॥ ६० ॥
हिमवत्सिन्धुसौवीरान्ये [3]जनाः समुपाश्रिताः ।
[4]उकारबहुलां तज्ज्ञस्तेषु भाषां प्रयोजयेत् ॥ ६१ ॥
[5]चर्मण्वतीनदीतीरे ये चार्बुदसमाश्रिताः ।
[6]ओकारबहुलां नित्यं तेषु भाषां प्रयोजयेत् ॥ ६२ ॥

---

विन्ध्यसागरमध्य इति दक्षिणसौराष्ट्राः । सुराष्ट्रावन्तिदेशेष्विति पश्चिमः वेत्रवत्यादिनोत्तरः ॥ ६० ॥

---

अनुवाद—विन्ध्य और समुद्र के मध्य में जो देश सुनाई देते हैं, वहाँ के विद्वानों को नकार बहुल भाषा का प्रयोग करना चाहिए ॥ ५९ ॥

अभिनव—'विन्ध्यसागरमध्ये' पद से पश्चिम सौराष्ट्र आदि देशों का ग्रहण है ॥ ५९ ॥

अनुवाद—सौराष्ट्र और अवन्तिका देशों में और नेत्रवती नदी के उत्तर-उत्तर में जो देश है, उनमें चकार बहुल भाषा का प्रयोग करना चाहिये ॥ ६० ॥

अभिनव—'सुराष्ट्रावन्तिदेशेषु' पद से पश्चिम सौराष्ट्र और वेत्रवती नदी के उत्तर सौराष्ट्र का ग्रहण है ॥ ६० ॥

अनुवाद—हिमालय, सिन्धु और सौवीर देश के जो निवासी हैं, उन्हें उकार बहुल भाषा का प्रयोग करना चाहिए ॥ ६१ ॥

अनुवाद—चर्मण्वती ( चम्बल ) नदी के तट पर और अरावली पहाड़ियों के समीपवर्ती जो प्रदेश हैं उसके निवासी लोगों को ओकार बहुल भाषा का प्रयोग करना चाहिए ॥ ६२ ॥

---

१ क-भ. तकारबहुलां । क. (टि० शकारबहुलां ।
२. ख. वेत्रवत्यन्तरेषु च ।
३. ख. ग. चकारबहुलामिह । क-न. चकारबहुलामिव ।
४. ख. येऽन्यदेशान् समाश्रिताः । ग. ये च देशाः समाश्रिताः ।
५. क. ओकारबहुलां । ढकार बहुलां । थकारबहुलां ।
६. क. सरस्वती नदीतीरे पारियात्रार्बुदाश्रिताः ।
७. क. (टि०) तकारबहुलां ।

एवं भाषाविधानं तु कर्तव्यं नाटकाश्रयम् ।
अत्र नोक्तं मया यत्तु लोकाद् ग्राह्यं बुधैस्तु तत्[1] ॥ ६३ ॥
एवं भाषाविधानं तु मया प्रोक्तं द्विजोत्तमाः[2] ।
पुनर्वाक्यविधानं[3] तु लौकिकं संनिबोधत ॥ ६४ ॥
उत्तमैर्मध्यमैर्नीचैर्यैः संभाष्या यथा नराः ।
समानोत्कृष्टहीनाश्च[4] नाटके तान्निबोधत ॥ ६५ ॥

वाक्यविधानमित्येकेनापि पदेन सकलो वाक्यार्थः स्फुटीक्रियते, अन्योन्यरूपताऽऽनीयत इत्यभिप्रायेण वाक्यग्रहणं पदविधानं हि भविष्यति ॥ ६४ ॥

अनुवाद—इस प्रकार नाटकों से सम्बन्धित भाषा का विधान करना चाहिए। यहाँ पर मैंने जो नहीं कहा है उसे विद्वानों को स्वयं समझ लेना चाहिये ॥ ६३ ॥

विशेष—काशी सीरिज संस्करण में यहीं पर अध्याय की समाप्ति है। इस प्रकार नाट्यशास्त्र में भाषा विधान नामक अठारहवाँ अध्याय समाप्त हुआ। ( इति नाट्यशास्त्रे भाषाविधानं नामाष्टादशोध्यायः )। इसके बाद उन्नीसवाँ अध्याय प्रारम्भ होता है ॥

अनुवाद—हे द्विजोत्तमों! इस प्रकार मैंने भाषाओं का विधान कहा है। अब लौकिक वाक्य-विधान को कहता हूँ। आप लोग समझें ॥ ६४ ॥

अभिनव—वाक्यविधानम्। इस एक पद से समस्त वाक्यार्थ का स्फुटीकरण होता है, क्योंकि भाषा वाक्य के आश्रित होती है और वाक्य का प्रयोग किसी संवाद के लिए नाट्य में किया जाता है। इस प्रकार वाक्य और भाषा में अन्योऽन्यरूपता आती है, इस अभिप्राय से पद का ग्रहण पद-विधान भी हो जाता है ॥ ६४ ॥

अनुवाद—उत्तम, मध्यम और अधम पात्रों के द्वारा अपने समान, अपने से उत्कृष्ट तथा अपने से छोटों के साथ नाटक में किस प्रकार सम्भाषण करना चाहिए, उन्हें आप लोग समझें ॥ ६५ ॥

१. काशी सस्करणेऽत्रैवाध्यायसमाप्तिः ।
इति भारतीये नाट्यशास्त्रे भाषाविधानं नामाष्टादशोऽध्यायः ।
२. क. (टि०) भ. यथावद् द्विजसत्तमाः ।
३. क. (टि०) पुनर्वाक्यप्रचारकं । ख. पुनर्वाक्यविचारं ।
४. क-भ. समानो वाल्पहीनो वा ।

देवानामपि ये देवा महात्मानो महर्षयः ।
भगवन्निति ते वाच्या यास्तेषां योषितस्तथा ॥ ६६ ॥
देवाश्च लिङ्गिनश्चैव [1]नानाश्रुतधराश्च ये ।
भगवन्निति ये वाच्याः पुरुषैः स्त्रीभिरेव च ॥ ६७ ॥
आर्येति ब्राह्मणं ब्रूयान्महाराजेति पार्थिवम् ।
उपाध्यायेति चाचार्यं वृद्धं तातेति चैव हि ॥ ६८ ॥
[2]नाम्ना राजेति वा वाच्यो ब्राह्मणैस्तु नराधिपाः ।
तत्क्षाम्यं हि महीपालैर्यस्मात्पूज्या द्विजाः स्मृताः[3] ॥ ६९ ॥

---

देवानां देवाः स्तुत्याः । तथेति स्त्रीत्वेन भगवतोति ॥ ६६ ॥
नानाश्रुतधराः बहुश्रुताः ॥ ६७ ॥

---

अनुवाद—जो देवताओं के भी देवता, महात्मा और महर्षि हैं उन्हें 'भगवन्' शब्द से और उनकी पत्नियों को 'भगवति' शब्द से सम्बोधित करना चाहिए ॥ ६६ ॥

अभिनव—देवानां देवाः अर्थात् देवताओं के भो जो स्तुत्य है। 'तथा' पद से यदि स्त्री हो तो उसे 'भगवति' शब्द से सम्बोधित करना चाहिए ॥ ६६ ॥

अनुवाद—इसी प्रकार जो देवता, सन्यासी तथा जो अनेक शास्त्रों के ज्ञाता विद्वान् हैं, उन्हें स्त्री और पुरुषों के द्वारा 'भगवन्' शब्द से सम्बोधित करना चाहिए ॥ ६७ ॥

अभिनव—'नानाश्रुतधारा:' का अर्थ है बहुश्रुत अर्थात् नाना शास्त्रों के ज्ञाता विद्वान् ॥ ६७ ॥

अनुवाद—ब्राह्मण को 'आर्य', राजा को 'महाराज', उपाध्याय को 'आचार्य' और वृद्ध को 'तात' कहकर सम्बोधित करना चाहिये ॥ ६८ ॥

अनुवाद—ब्राह्मण राजा को नाम लेकर अथवा 'राजन्' शब्द से सम्बोधित करें, ऐसा करने पर राजा उसे क्षमा कर दें, क्योंकि ब्राह्मण सदा पूज्य होते हैं ॥ ६९ ॥

---

१. ख. नानाश्रुतिधारश्च ये । क. (टि०) नानाश्मश्रुधराश्च । नानाव्रतधराश्च ।
२. ख. ग. छन्दतो नामभिर्वाच्या ।
३. ख. ग. द्विजोत्तमाः ।

ब्राह्मणैः [1]सचिवो वाच्यो ह्यमात्यः सचिवेति[2] वा।
शेषैरन्यैर्जनैर्वाच्यो हीनैरार्येति नित्यशः ॥ ७० ॥

समैः संभाषणं कार्यं येन नाम्ना स संज्ञितः।
हीनैः [3]सपरिवारं तु नाम्ना संभाष्य उत्तमः ॥ ७१ ॥

---

क्षाम्यमित्यङ्गीकर्तव्यम् ॥ ६९ ॥

सचिव इति राज्ञो मन्त्री ॥ ७० ॥

सपरिवारं नाम्नेति उत्तमो राजा हीनैः स्वनाम परिगृह्य, यद्यन्नाम वत्सराज सोमवंश मौक्तिकमणे इत्यादि तेन भाष्यः सपरिहासमिति वा पाठः परिहासः परितोषोपलक्षणं तेन चाटुकाराभिः परितोषावसरे हीनैरपि राजा नाम्ना संभाष्यः। "उदयने महीं शासति को विपदामवकाशः" इत्यादौ ॥ ७१ ॥

---

अभिनव—'क्षाम्य' का अर्थ है ब्राह्मणों के कथन को स्वीकार करना चाहिये।

अनुवाद—ब्राह्मणों के द्वारा मन्त्री को 'अमात्य' या 'सचिव' शब्द से सम्बोधित करना चाहिये और शेष जन उन्हें 'आर्य' शब्द से सम्बोधित करें ॥ ७० ॥

अभिनव—सचिव का अर्थ है राजा का मन्त्री अर्थात् राजा का परामर्शदात्ता, सलाहकार सचिव।

अनुवाद—समवयस्कों को जिसका जो नाम है, उस नाम से सम्बोधित करना चाहिए और हीन-पात्र सपरिवार उत्तम पुरुष को अपना नाम लेकर सम्बोधित करें ॥ ७१ ॥

अभिनव—हीन पात्र अपना नाम लेकर उत्तम पुरुष तथा राजा को सम्बोधित करें। जिसका जो नाम है, जैसे—सोमवंश के मोक्तिकमणे वत्सराज इत्यादि नाम से सम्बोधित करना चाहिये। अथवा सपरिवार के स्थान पर 'सपरिहास' पाठ है तो परिहास परितोष का उपलक्षण है, इससे चाटुकार हीन लोग भी परितोष के अवसर पर राजा का नाम लेकर सम्भाषण करें। जैसे उदयन पृथ्वी पर शासन करते हुए विषाद का अवकाश कहाँ है ॥ ७१ ॥

---

१. क. (टि०) सचिवैर्वाच्यम्।
२. ख. ह्यमात्यसचिवेति।
३. क. (टि०) सपरिहासं।

नियोगाधिकृताश्चैव पुरुषा योषितस्तथा ।
[1]कारुकाः शिल्पिनश्चैव संभाष्यास्ते तथैव हि ॥ ७२ ॥
[2]मार्षो भावेति वक्तव्यः किंचिदूनस्तु मार्षकः[3] ।
समानोऽथ वयस्येति हं हो हण्डेति वाधमः[4] ॥ ७३ ॥
आयुष्मन्निति वाच्यस्तु रथी सूतेन सर्वदा ।
[5]तपस्वीति प्रशान्तस्तु साधो इति च शब्द्यते ॥ ७४ ॥

---

कारुकाः स्तूपकारादयः शिल्पिनश्चित्रकारादयः ॥ ७२ ॥

भावेत्यामन्त्रणं विवक्षितमित्यन्यविभक्त्यन्तो न प्रयोज्य इत्येतत्त्वयुक्तम् । वयस्येत्येवमादावपि प्रसङ्गात्संभाषणोपक्रमकृताद्यामन्त्रणविभक्तिः सर्वत्र विवक्षितैव । अधमैर्जनैः समानोऽधम एव, हंहो हण्डे इति वा संभाष्यः ॥ ७३ ॥

---

अनुवाद—जो कारुक ( स्तूपकार ) शिल्पी तथा उनकी स्त्रियों एव पुरुषों को उनके कार्यों के अनुसार सम्बोधित करना चाहिये ॥ ७२ ॥

अभिनव—कारुक का अर्थ स्तूपकार है और शिल्पी का अर्थ दीवाल पर चित्र बनाने वाला है ॥ ७२ ॥

अनुवाद—सूत्रधार को 'भाव' उससे कुछ छोटे को 'मार्ष' या मारिष, समान अवस्था वाले को 'वयस्य' और अधम पुरुष को हंहो, हण्डे शब्दों से सम्बोधित करना चाहिये ॥ ७३ ॥

अभिनव—यहाँ भाव पद से 'आमन्त्रण' विवक्षित है, इसलिये अन्य विभक्त्यन्त पद का प्रयोग नहीं करना चाहिए, यह कहना अयुक्त है। 'वयस्य' इत्यादि में भी प्रसङ्ग से सम्भाषण के उपक्रम में की गई आमन्त्रण विभक्ति सभी जगह विवक्षित है। अधम जनों के समान अधम ही है, अतः उनसे हंहो, हण्डे इत्यादि सम्बोधनों से भाषण करना चाहिए ॥ ७३ ॥

अनुवाद—सूत रथी ( रथस्थ पुरुष ) को 'आयुष्मन्' शब्द से सम्बोधित करें तथा तपस्वी एवं शान्त मनुष्यों को 'साधो' शब्द से सम्बोधित करना चाहिये ॥ ७४ ॥

---

१. ख. कारकाः । २. ख मर्षो । ग. मान्यो ।
३. ख. मर्षकः । ग. मारिषः ।
४. ख. हो हं वा इति वाधमः । ग. हं हो हन्तेति चाधमैः ।
५. ख. तपस्वीव प्रशान्तः सन् । ग. तपस्वी च प्रशान्तश्च ।

स्वामीति प्रशान्तस्तु कुमारो भर्तृदारकः ।
सौम्य ! भद्रमुखेत्येवं हे पूर्वं चाधमं वदेत् ॥ ७५ ॥

यद्यस्य कर्म शिल्पं वा विद्या वा जातिरेव वा ।
स तेन नाम्ना भाष्यो[1] हि नाटकादौ [2]प्रयोक्तृभिः ॥ ७६ ॥
वत्स ! पुत्रक ! तातेति नाम्ना गोत्रेण वा पुनः ।
वाच्यः शिष्यः सुतो वापि पित्रा वा गुरुणापि वा ॥ ७७ ॥
संभाष्या शाक्यनिर्ग्रन्थ्या [3]भदन्तेति प्रयोक्तृभिः ।
आमंत्रणैस्तु पाषण्डाः शेषाः स्वसमयाश्रितैः[4] ॥ ७८ ॥

---

चकाराद् विनापि हेशब्देन ॥ ७५ ॥

कर्म पाकादि, विद्या त्रय्यादि । जातिर्गोत्रं देशो वा ॥ ७६ ॥

---

अनुवाद—युवराज को 'स्वामिन्' और राजकुमार को 'भर्तृदारक' शब्द से तथा अधम पात्र को सौम्य ! हे भद्रमुख ! आदि शब्दों से सम्बोधित करे ॥ ७५ ॥

अभिनव—चकार से यह सूचित होता है कि 'हे' सम्बोधन के बिना भी सम्भाषण किया जा सकता है ॥ ७५ ॥

अनुवाद—नाटक आदि में नाट्य-प्रयोक्ताओं के द्वारा जिसका जो कर्म (कार्य) शिल्प, विद्या, जाति हो, उसी के अनुरूप नाम से पुकारना चाहिए ॥ ७६ ॥

अभिनव—कर्म अर्थात् पाकादि कार्य। विद्या से त्रयी (वेद) आदि का ग्रहण है। जाति से गोत्र अथवा देश का ग्रहण होता है ॥ ७७ ॥

अनुवाद—पिता अपने पुत्र को तथा गुरु अपने शिष्य को वत्स ! पुत्र ! तात ! अथवा गोत्र के नाम से सम्बोधित करें ॥ ७७ ॥

अनुवाद—नाट्य-प्रयोक्ताओं के द्वारा शाक्य (बौद्ध) एवं जैन सन्यासियों को 'भदन्त' शब्द से सम्बोधित करना चाहिये। शेष पाशुपतों को उसके आचार के अनुसार सम्बोधित करना चाहिए ॥ ७८ ॥

---

१. ख. संभाषे । २. क-म. नाटकादिषु योक्तृभिः ।
३. क. भद्रं ते । ४. ख-ग. शेषास्तु समयाश्रितैः ।

देवेति नृपतिर्वाच्यो भृत्यैः [1]प्रकृतिभिस्तथा ।
भट्टेति सार्वभौमस्तु नित्यं परिजनेन हि ॥ ७९ ॥
राजन्नित्यृषिभिर्वाच्यो ह्यपत्यप्रत्ययेन वा ।
वयस्य ! राजन्निति वा भवेद्वाच्यो महीपतिः ॥ ८० ॥
विदूषकेण राज्ञी च [2]चेटी च भवतीत्यपि ।
नाम्ना वयस्येत्यपि वा राज्ञा वाच्यो विदूषकः ॥ ८१ ॥
सर्वस्त्रीभिः [3]पतिर्वाच्य आर्यपुत्रेति यौवने ।
अन्यदा पुनरार्येति [4]महाराजेति भूपतिः ॥ ८२ ॥

---

शाक्याः सौगताः । निर्ग्रन्थाः क्षपणकाः । शेषाः पाषण्डाति पाशुपतादयः । स्वसमयो यथा पाशुपतानां भापूषन्, भासर्वज्ञ, इत्यादि संभाषणम्, तथा क्वचि-द्वाक्यादिशब्देन ॥ ७९ ।

अपत्यप्रत्ययेनेति कौरवेत्यादिना महाराजेति ॥ ८० ॥

---

अभिनव—शाक्य का अर्थ सौगत बौद्ध भिक्षु है, निर्ग्रन्थ का अर्थ क्षपणक है शेष पाखण्ड से पाशुपत सम्प्रदाय के साधुओं का ग्रहण होता है । स्वसमय शब्द से पाशुपतों के भासर्वज्ञ, भापूषन् आदि के सम्भाषण ( सम्बोधन ) का ग्रहण है । कहीं पर सम्पूर्ण वाक्य का भाषण करना चाहिए ॥ ७८ ॥

अनुवाद—भृत्य ( नौकर ) तथा प्रजाजन द्वारा राजा को 'देव' शब्द से सम्बोधित करना चाहिए । सार्वभौम राजा को परिजन 'भट्ट' शब्द से सम्बोधित करें ॥ ७९ ॥

अनुवाद—ऋषियों के द्वारा राजा को 'हे राजन् !' अथवा अपत्यार्थक वंशागत नाम से सम्बोधित करना चाहिये और विदूषक राजा को 'वयस्य' अथवा 'राजन्' शब्द से तथा महारानी एवं चेटी को 'भवति' शब्द से सम्बोधित करें । तथा राजा भी विदूषक को उसके नाम से अथवा 'वयस्य' शब्द से सम्बोधित करें ॥ ८० ॥

अनुवाद—युवा अवस्था में सभी स्त्रियाँ अपने पति को 'आर्यपुत्र' शब्द से सम्बोधित करें । अन्य अवस्थाओं में 'आर्य' शब्द से सम्बोधित करें और राजा को 'महाराज' शब्द से सम्बोधित करें ॥ ८१ ॥

---

१. क. (टि०) परिजनेन वा ।   २. ग. चेटया ।
३. क-म. पतिर्वाच्यो ह्यार्यपुत्रेति ।   ४. ख. वाच्यो राज्ञापि भूपतिः ।

आर्येति पूर्वजो भ्राता वाच्यः पुत्र इवानुजः ।
योषिद्भिरथ काम्येति राजपुत्रेति योधनैः ॥ ८३ ॥
पुरुषाभाषणं ह्येव कार्यं नाट्ये प्रयोक्तृभिः ।
पुनः [1]स्त्रीणां प्रवक्ष्यामि यथाभाष्यास्तु नाटके ॥ ८४ ॥
तपस्विन्यो देवताश्च वाच्या भवतीति च ।
[2]गुरुभार्या तु वक्तव्या स्थानीया भवतीति च ॥ ८५ ॥

---

यौवनादन्यत्रार्यपुत्रेति श्वशुरेण व्यपदेशः, तस्य यौवनं शृङ्गारोचितमुक्तं भवति ॥ ८२ ॥

अनुजो ज्येष्ठेन पुत्रवत् वत्स तात पुत्रकेति संभाष्यः ॥ ८३ ॥

पुरुषाभाषणमिति भूयस्त्वाक्षेप उपसंहारः ॥ ८४ ॥

---

**अभिनव**—अभिनव गुप्त का कथन है कि यौवन में स्त्रियाँ अपने पति को 'आर्यपुत्र' कहकर सम्भाषण करें किन्तु यौवन से भिन्न अवस्था में श्वसुर वंश के नाम से सम्बोधित करें। जैसे हे महाराज ! यहाँ यौवन पद से तात्पर्य है शृङ्गार के उपयुक्त अवस्था ॥ ८२ ॥

**अनुवाद**—बड़े भाई को 'आर्य' शब्द से तथा छोटे भाई को पुत्र के समान वत्स, तात आदि शब्दों से सम्बोधित करें। स्त्रियाँ कामनानुसार और योद्धा 'राजपुत्र' शब्द से सम्बोधित करें ॥ ८३ ॥

**अभिनव**—छोटे भाई को बड़ा भाई पुत्र के समान वत्स, तात, पुत्रक शब्द से सम्बोधित करें ॥ ८३ ॥

**अनुवाद**—नाटक में नाट्य प्रयोक्ताओं ने पुरुष पात्रों के सम्भाषण का यही विधान बताया है। अब स्त्रियों के लिए नाटक में सम्बोधन के प्रकार को बतलाता हूँ ॥ ८४ ॥

**अभिनव**—यहाँ पर 'भूयस्त्व' बहुवचन का आक्षेप है अर्थात् यहाँ पुरुषों के सम्भाषण विषयक प्रकरण का उपसंहार कर दिया है।

**अनुवाद**—तपस्विनी स्त्रियों तथा देवी को 'भगवति' शब्द से सम्बोधित करना चाहिए और गुरु भार्या और ज्येष्ठा ( पूज्या ) स्त्रियों को 'भवति' शब्द सम्बोधित किया जाना चाहिए ॥ ८५ ॥

---

१. ब-ग. पुनस्त्रोणां च वक्ष्यामि संभाषां नाटकाश्रयम् ।
२. क. (टि०) गुरुरार्येति ।

गम्या भद्रेति वाच्या वै [1]वृद्धाम्बेति च नाटके ।
राजपत्न्यस्तु[2] संभाष्याः सर्वाः परिजनेन वै ॥ ८६ ॥
भट्टिनी स्वामिनी देवीत्येवं वै नाटके बुधैः ।
देवीति महिषी वाच्या राज्ञा परिजनेन वा ॥ ८७ ॥
भोगिन्यः परिशिष्टास्तु स्वामिन्य इति वा पुनः ।
कुमार्यश्चैव वक्तव्याः प्रेष्याभिर्भर्तृदारिकाः ॥ ८८ ॥
स्वसेति भगिनी वाच्या वत्सेति च यवीयसी[3] ।
ब्राह्मण्यार्येति वक्तव्या लिङ्गस्था व्रतिनी च या ॥ ८९ ॥

स्त्रीसंभाषणं त्वयि मध्ये निरूपितं तपस्विन्य इति पूर्वं तेषां योषित इति अत्र स्वयमतपस्विन्योऽपीत्युक्तमिति न पुनरुक्तम् । गुरुभार्या मान्या अन्या वा स्त्री, स्थानीया पूज्या ईषद्वृद्धा ॥ ८५ ॥

**अभिनव**—स्त्रियों के सम्भाषण के विषय में भी बीच में निरूपण कर दिया है। पहिले वहाँ योषित इत्यादि कहा है। यहाँ स्वयं अतपस्विनी स्त्रियाँ भी तपस्विनी के समान सम्भाषण करें, अतः पुनरुक्त नहीं है। गुरुभार्या का अर्थ है गुरुपत्नी और मान्य अन्य स्त्रियाँ। स्थानीया का अर्थ है पूज्या तथा ईषद् वृद्धा ॥ ८५ ॥

अनुवाद—नाटक में ग्राम्या स्त्री को 'भद्रे' तथा वृद्धा स्त्रियों को 'अम्बा' कहकर सम्बोधन करें तथा समस्त राजपत्नियों को परिजन लोग 'भट्टिनी, स्वामिनी देवी' आदि शब्दों से सम्बोधित करें। और राजा अथवा परिजनों के द्वारा महिषी ( पटरानी ) को 'देवी' शब्द से पुकारना चाहिए ॥ ८६-८७ ॥

अनुवाद—शेष स्त्रियों को भोगिनी अथवा स्वामिनी शब्द से सम्बोधित करना चाहिए। नौकरानियाँ राजकुमारियों को 'भर्तृदारिके' शब्द से सम्बोधित करें ॥ ८८ ॥

अनुवाद—बड़ी बहिन को 'भगिनी' तथा छोटी बहिन को 'वत्से' कहना चाहिए तथा ब्राह्मणी, सन्यासिनी और व्रतधारिणी स्त्रियों को 'आर्ये ?' शब्द से सम्बोधित करना चाहिए ॥ ६९ ॥

१. ख. वृद्धा वाच्येति नाटके ।
२. ख. राजपत्न्यश्च । क-भ. राजपुत्र्यस्तु ।
३. ख. ग. ज्येष्ठा वत्सेति चानुजा ।

पत्नी चार्येति संभाष्या पितृनाम्ना सुतस्य सा ।
समानाभिस्तथा सख्यो हलेति स्यात्परस्परम्[1] ॥ ९० ॥
प्रेष्या हञ्जेति वक्तव्या स्त्रियो या तूत्तमा भवेत् ।
अज्जुकेति [2]च वक्तव्या वेश्या परिजनेन च ॥ ९१ ॥
[3]अत्तेति गणिका माता वाच्या परिजनेन हि ।
प्रियेति भार्या शृङ्गारे वाच्या राज्ञेतरेण वा ॥ ९२ ॥

पत्नीति सहधर्मचारिणी, अत एव नटी नाट्यवेदमहासत्रदीक्षितेन सूत्रधारेणार्यणार्ये इत्यामन्त्र्यते । पितृनाम्नेति माठरपुत्रि । सुतस्येति सोमशर्मजननि ॥ ९० ॥

वेश्या स्वेन परिजनेन अज्जुके इति संभाष्या ॥ ९१ ॥

अनुवाद—धर्मपत्नी को 'आर्ये' अथवा उसके पिता या पुत्र के नाम से सम्बोन्धित कर आह्वान करें तथा समान अवस्था वाली स्त्रियों को 'हले' कहकर पुकारें ॥ ९० ॥

अभिनव—पत्नी का अर्थ है सहधर्मिणी। इसलिए नाट्यवेद के महासत्र में दीक्षित सूत्रधार नटी पत्नी को 'आर्ये' कहकर बुलाये है। अथवा पिता के नाम से बुलाये, जैसे—हे माठरपुत्रि ! आदि, अथवा पुत्र के नाम से बुलाये जैसे—हे सोमशर्मजननि आदि ॥ ९० ॥

अनुवाद—उत्तम स्त्रियाँ दासी (सेविका) को 'हञ्जे' शब्द से सम्बोधित करना चाहिये और परिजनों के द्वारा वेश्या को 'अज्जुके' शब्द से पुकारना चाहिये ॥ ९१ ॥

अभिनव—अपने परिजनों द्वारा वेश्या को 'अज्जुके' कहकर बुलाना चाहिए।

अनुवाद—अपने परिजनों के द्वारा गणिका के माता को 'अत्ता' कहकर बुलाना चाहिये। शृङ्गार के समय राजा अथवा अन्य लोग अपनी पत्नी को 'आर्ये' कहकर सम्बोधित करें ॥ ९२ ॥

१. ख. ग, हला भाष्याः परस्परम् ।
२. ग. भवेद्वाच्याः । ख. वेश्या वाच्या ।
३. ख. ग. या त्वत्र वृद्धा सा त्वत्ता भाष्या नाट्यजनेन तु ।

पुरोधः सार्थवाहानां भार्यास्त्वार्येति सर्वदा ।
तल्लिङ्गार्थानि नामानि कार्याणि कविभिः सदा[1] ॥ ९३ ॥
औत्पत्तिकानि यानि स्युर्न प्रख्यातानि नाटके ।
[2]ब्रह्मक्षत्रस्य नामानि गोत्रकर्मानुरूपतः ॥ ९४ ॥
काव्ये कार्याणि कविभिः शर्मवर्मकृतानि हि ।
दत्तप्रायाणि नामानि वणिजां संप्रयोजयेत् ॥ ९५ ॥

---

सर्वदेति यौवनेऽपि पुरोहितादिभिरार्येति भार्या वाच्या ॥ ९३ ॥

औत्पत्तिकानोति स्वयं वा येन कल्पयन्ते, अत एवाख्यातानि तल्लिङ्गार्थानि प्रकृतार्थसूचकाभिधेयमुक्तानि कार्याणि । एतदेव निदर्शनेन स्फुटयति ब्रह्मक्षत्रस्ये-त्याविना ॥ ९४ ॥

---

अनुवाद—पुरोहित और सार्थवाह को स्त्रियों को 'आर्ये' कहकर सम्बोधित करना चाहिये ॥

अभिनव—पुरोहित आदि को यौवन में भी भार्या का 'आर्ये' कहकर बुलाना चाहिए ॥ ९३ ॥

अनुवाद—कवि लोग नाटकों में गुण और कार्य के अनुसार नाम से सम्बोधित करें और जो अप्रख्यात पात्र हैं, उसे कल्पित नाम से बुलाना चाहिये ॥ ९३-९४ ॥

अभिनव—औत्पत्तिकानि अर्थात् जिसकी स्वयं कल्पना की गई हो, इसीलिए वह आख्यात है । तल्लिङ्गार्थानि का अभिप्राय है—प्रकृत अर्थ के सूचक अभिधेययुक्त अर्थात् नामों के साथ सम्बोधित करने चाहिए । इसी को निदर्शन द्वारा स्पष्ट करते हैं—ब्रह्मक्षत्रस्येत्यादि ।

अनुवाद—कवियों को काव्य में ब्राह्मणों एवं क्षत्रियों के नाम उनके गोत्र एवं कर्म के अनुसार रखने चाहिये । और उनके नाम के सामने शर्मा तथा वर्मा लगाना चाहिये अर्थात् ब्राह्मणों के नाम के साथ 'शर्मा' तथा क्षत्रियों के नाम के सामने 'वर्मा लगाना चाहिए । और बनियों के नाम के सामने 'दत्त' लगाकर पुकारना चाहिए ॥ ९४-९५ ॥

---

१. ख. ग. द्विजाः ।
२. ख. ब्राह्मक्षत्रस्य ।

कापालिकास्तु घण्टान्तनामानः समुदाहृता ।
शौर्योदात्तानि नामानि तथा शूरेषु योजयेत् ॥ ९६ ॥
विजयार्थानि नामानि [1]राजस्त्रीणां तु नित्यशः ।
[2]दत्ता मित्रा सेनेति वेश्यानामानि योजयेत् ॥ ९७ ॥
नानाकुसुमनामानः प्रेष्याः कार्यास्तु नाटके ।
मङ्गलार्थानि नामानि चेष्टानामपि योजयेत् ॥ ९८ ॥

---

शौर्योदात्तानीति । भीमपराक्रम इति यथा ॥ ९६ ॥

विजयार्थानीति शुभलक्षणविजयवतीत्यादीनि । देवदत्तावसन्तसेनाविदग्ध-मित्रेत्यादि वेश्यानाम् ॥ ९७ ॥

नानाकुसुमनामानीति मालती-मल्लिकेत्यादि कुसुमग्रहणं तन्मञ्जर्याद्युप-लक्षणं चूतलतिकेत्याद्यपि हि दृश्यते नाम । मङ्गलार्थानीति सिद्धार्थका इत्यादीनि ॥ ९८ ॥

---

अनुवाद—कापालिकों को घण्टान्त नाम से सम्बोधित करना चाहिये, और शूरवीरों को शौर्य, औदार्य आदि गुणों के सूचक नामों से बुलाना चाहिये ॥ ९६ ॥

अभिनव—जैसे भीमपराक्रम ।

अनुवाद—राजपत्नियों के नाम विजय अर्थ के सूचक होने चाहिये और वेश्याओं के नाम में दत्ता, सेना, मित्रा की योजना करें ॥ ९७ ॥

अनुवाद—नाटक में दासियों के नाम भिन्न भिन्न पुष्पों पर रखने चाहिये । तथा चेट के नामों में मङ्गल-सूचक शब्दों की योजना करनी चाहिए ॥ ९८ ॥

अभिनव—विजय के लिए शुभ लक्षणों वाली विजयवती आदि । वासवदत्ता बसन्तसेना, विदग्धमित्रा इत्यादि वेश्याओं के नाम होने चाहिए ॥ ९७ ॥

अभिनव—दासियों के नाम विभिन्न फूलों पर होने चाहिए । जैसे, मालती, मल्लिका इत्यादि । कुसुम पद का ग्रहण पुष्पों को मञ्जरियों का उपलक्षण है । क्योंकि दासियों के चूतकलिका, चूतलतिका इत्यादि नाम भी दिखाई देते हैं । मङ्गलार्थक नाम जैसे सिद्धार्थक आदि है ॥ ९७ ॥

---

१ ख. राज्ञां स्त्रीणां च कारयेत् । ग. राजस्त्रोणा च कारयेत् ।

२. क-भ दत्तां मित्रां च सेनां च ।

गम्भीरार्थानि नामानि ह्युत्तमानां प्रयोजयेत्[1] ।
यस्मान्नामानुसदृशं कर्म तेषां भविष्यति ॥ ९९ ॥
जातिचेष्टानुरूपाणि शेषाणामपि कारयेत् ।
नामानि पुरुषाणां तु स्त्रीणां चोक्तानि तत्त्वतः ॥ १०० ॥
एवं [2]नामविधानं तु कर्तव्यं कविभिः सदा ।
[3]एवं [4]भाषाविधानं तु ज्ञात्वा कर्माण्यशेषतः[4] ॥ १०१ ॥

---

गम्भीरार्थानि अक्षोभ्य इत्यादीनि । नास्ति संकेतको भार इत्याशयेन पृच्छति अत्रोत्तरं नामानुरूपमिति । नाम किलेश्वरेच्छावशात्स्वरूपक्रोडीकारेणैव जायते । तथा हि नामाक्षरे ग्रहाभिचारयन्त्रकर्मादिपीडिते शान्तिकपौष्टिकाद्युपचारभोजि वा तथैव पुरुषस्य फलोदय इत्यभिप्रायः ॥ ९९ ॥

---

अनुवाद—उत्तम पात्रों के नाम गम्भीर अर्थ के द्योतक होने चाहिये । क्योंकि उनके कर्म उनके नाम के अनुरूप ही रहते हैं ॥ ९९ ॥

अभिनव—उत्तम पात्रों के नाम गम्भीर अर्थ के सूचक होने चाहिए जैसे—अक्षोभ्य इत्यादि । संकेत करने में कोई भार नहीं है, इस आशय से पूछते हैं—क्या नाम होने चाहिए ? उत्तर देते हैं—नाम के अनुरूप कर्म होने चाहिए । क्योंकि ईश्वर की इच्छा के वश होकर नाम रखा जाता है । और भी नाम के अक्षर ग्रहों के अभिचार एवं यन्त्र-तन्त्र आदि के कर्मों से पीड़ित होते हैं, अतः शान्तिक, पौष्टिक उपचार किये जाते हैं । तभी पुरुष के फल का उदय होता है ॥ ९९ ॥

अनुवाद—इनके अतिरिक्त शेष स्त्री-पुरुषों के नाम उनकी जाति एवं चेष्टा के अनुरूप होने चाहिए ॥ १०० ॥

अनुवाद—इस प्रकार कवियों को नाटक में नामों का विधान करना चाहिये । इस प्रकार पात्रों के समस्त कर्मों को समझकर भाषा का विधान किया गया है ॥ १०१ ॥

---

१. ख. ग. याजयेदुत्तमेषु च । २. क. (टि०) नामाभिधानं ।
३. क. (टि०) एवं भाषाविधानादि । ख. एवं भाषाविधानादि ।
क. म. भाषाविधानं विज्ञेयं ततः प्रकृतिसम्भवाम् ।
ततः पाठ्यस्य वक्ष्यामि गुणांश्च द्विजसत्तमाः ।
स्वरैः षड्जादिभिर्युक्तं नानारससमन्वितम् । तद्यथा—
४. ख. ज्ञात्वा सर्वमशेषतः ।

पाठ्यगुणानिदानीं वक्ष्यामः । तद्यथा सप्तस्वराः, त्रीणि स्थानानि, चत्वारो वर्णाः, द्विविधा काकुः, षडलङ्काराः, षडङ्गानीति । एषामिदानीं [1]लक्षणमभिव्याख्यास्यामः ।

तत्र सप्तस्वरा नाम—षड्जर्षभगान्धारमध्यमधैवतनिषादाः । त-एते रसेषूपपाद्याः ॥ १०२ ॥

---

कवित्वयुक्तो नट इत्यभिप्रायेणाह भाषाविधानं ज्ञात्वा, तत इति, तत्परिज्ञातपूर्वकं काव्यं कृत्वा प्रयोगे पाठ्यं प्रयुञ्जीतेत्यर्थः । यदि त्वन्यः कविस्तदा पाठ्यस्य संज्ञा च मूलभूतत्वात् प्रयोक्तृत्वेनोक्तो द्रष्टव्यः । षडलङ्कारसंयुतमिति स्वरस्थानवर्णकाक्वलङ्काराङ्गानि षट् । अत्रालङ्कारशब्देन विवक्षितानि, एतैर्हि भूषितं काव्यं पाठ्यमुच्यते ॥ १०१ ॥

एवं हि वक्तव्यमुपादानस्य यदि सकलस्वविवक्षाविशिष्टार्थप्रतिपादकत्वं पठनार्हं च पाठ्यं तत्स्वराद्यायत्तं सर्वमिति । अत एवाह पाठ्यगुणानिति गुणाः उपकारकाः यदुपकृतं काव्यं भवतीत्यर्थः ।

---

**अभिनव**—नट कवित्व से युक्त भी होता है, इस अभिप्राय से कहते हैं कि भाषा विधान को समझकर अर्थात् परिज्ञान पूर्वक काव्य का निर्माण कर पाठ्य का प्रयोग करें। यदि कवि कोई दूसरा है तो पाठ्य की संज्ञा प्रयोग मूलभूत तत्त्व होने के कारण तदनुसार प्रयोक्ताओं को व्यवहार देखना चाहिए। स्वर, स्थान, वर्ण, काकु, अलङ्कार तथा अङ्ग ये छः अलङ्कार शब्द से विवक्षित है। इन छः अलङ्कारों से युक्त काव्य पाठ्य होता है ॥ १०२ ॥

**अभिनव**—उपादान के विषय में इस प्रकार वक्तव्य है कि यदि समस्त प्रकार को विवक्षाओं से विशिष्ट अर्थ के प्रतिपादक काव्य पाठ्य है, वह स्वरादि छः अलङ्कारों के अधीन है। अतः पाठ्य के गुणों को बतलाऊँगा। यहाँ गुण का अर्थ उपकारक है जिससे उपकृत काव्य पाठ्य होता है।

**अनुवाद—अब पाठ्य के गुणों को कहूँगा। वह जैसे—सात स्वर हैं, तीन स्थान हैं, चार वर्ण हैं, दो प्रकार के काकु है, छः अलङ्कार और छः अङ्ग हैं। अब इन पाठ्य गुणों का उद्देश क्रम से व्याख्यान करूँगा ॥**

## १. स्वर

**अनुवाद—षड्ज, ऋषभ, गान्धार, मध्यम, पञ्चम, धैवत और निषाद—ये सात स्वर हैं। रसों में इनका उपयोग करना चाहिए ॥**

---

१. क-न. लक्षणान्यभिधास्यामः । ख. लक्षणान्यभिव्याख्यास्यामः ।

उद्देशक्रमेण व्याचष्टे तत्रेत्यादि । स्वरगतं वितत्य गेयाधिकारे प्रकटयिष्यामः इह काकुषु स्वरा एव वस्तुत उपकारिणः । तत्परिकरभूतं तु स्थानादि । स्वरेषु प्रकृतिभूतेषु काकुरूपता जन्यते । तत्र स्थानशब्देनैषां स्वरूपनिष्पत्तेराश्रयो दर्शितः । उदात्तानुदात्तस्वरितकम्पितरूपतया स्वराणां यद्रक्तिप्रधानत्वमनुरणनमयं तत्त्यागे-नोच्चनीचमध्यमस्थानस्पर्शित्वमात्रं पाठ्योपयोगीति दर्शितम् । यदि हि स्वरगता रक्तिः पाठ्ये प्राधान्येनावलम्ब्येत तदा गानक्रियासौ स्यात्, न पाठः । पूर्णस्वरत्वा-भावादङ्गानां भेद इति चेत्, न, अपूर्णस्वरत्वेऽपि गानत्वप्रतिज्ञानात्, षाडवौडुवितयोः त्रिचतुरस्वरत्वेऽपि गानप्रतीतिर्भवत्येव, यथा कृत्रिमवंशिकायां त्रैस्वर्ये, भिन्नषड्ज-भाषायां च कालिन्द्यां चातुःस्वर्ये । तस्माद् गानवैलक्षण्याय रक्तिलक्षणं धर्ममनावृत्यो-च्चादिस्थानस्पर्श एवात्र प्रधानमिति वक्तुं वर्णोपादानम् । अन्यथा स्वरसप्तकाति-रिक्तस्योदात्तादेर्भावादनर्थकं तदुपादानम् ।

**अभिनव**—पाठ्य गुणों में प्रथम स्वरों के विषय में आगे गेयाधिकार प्रकरण में प्रकट करेंगे। स्वर ही काकु में भी उपयोगी होते हैं तथा स्थानादि उसके परिकर हैं। इन स्वरों में ही काकुरूपता उत्पन्न होती है। वहाँ स्थान शब्द से काकुओं के अपने स्वरूप की निष्पत्ति हेतु आश्रय दिखाया गया है। उदात्त, अनुदात्त, स्वरित और कम्पित नाम से विख्यात स्वरों में जो अनुरणन रक्ति ( अनुरञ्जन ) की प्रधानता है, उसको छोड़कर जो उच्च, नीच, मध्यम स्थान का स्पर्श है, वही पाठ्य में उपयोगी है, यह दिखाया गया है। यदि स्वरगत रक्ति का पाठ्य में प्रधानतः आश्रय ( आलम्बन ) लेते हैं तो यह गान क्रिया होगी, न कि पाठ्य, यदि यह कहा जाय कि यहाँ स्वरों की पूर्णता का अभाव होने से अङ्गों में भेद होगा, किन्तु ऐसा नहीं है। क्योंकि स्वरों की अपूर्णता में भी गान को स्वीकार किया गया है। षाडव और औडुवित में क्रमशः तीन और चार स्वरों के होने पर भी गान की प्रतीति होती है। जैसे कृत्रिम बाँसुरी में तीन स्वर हैं और भिन्न षड्ज की भाषा कालिन्दी में चार स्वर है, फिर भी यहाँ गान है। इसलिए ज्ञान की विलक्षणता के लिए रक्ति लक्षण धर्म की अपेक्षा न करके यहाँ उच्चादि का स्पर्श ही प्रधान है। इसी बात को बतलाने के लिए वर्णों का उपादान है, अन्यथा सात स्वरों के अतिरिक्त उदात्तादि के सद्भाव से उन वर्णों का उपादान व्यर्थ हो जायेगा।

यत्तु किञ्चिदुदात्तादिधर्माणां गात्रस्य निग्रहः कण्ठविवरस्य संवृतेत्यादि शिक्षापठितोदात्तादि धर्मप्राप्तेरुच्चाद्यलङ्कारेषु यथा स्यादिति प्रयोजनमुक्तं, तत्राप्य-स्मदुक्तं चेन्न प्रयोजनं कि तद्धर्मप्राप्त्या कृतमिति न विद्मः ॥

नन्वेवं स्वराभिधाने किं प्रयोजनं, उच्यते—प्राणभूतं तावद्ध्रुवागानं प्रयोगस्य, तत्र जात्यंशकविनियोगो भविष्यति तद्विदानो पाठावसरे किं सर्वथैव त्यक्तव्यमित्याशङ्काशमनाय तत्स्थायिस्वराश्रयणं प्रमुखीकृत्य पाठः कर्तव्य इत्येत-त्स्वराभिधानस्येह प्रयोजनम् ।

एवमुपगानवैलक्षण्ये संपन्ने बाह्यार्थसमर्पणेन चित्तवृत्तिसमर्पणया वाभिन-यानुभावरूपतालाभाय काकुरर्थरसभेदाभिधीयते । तत एव काकुरूपत्वमेव सर्वत्रा-नुयायि अतिशायित्वे मुख्योपयोगात् । तथा चोच्चदीप्ताद्यलङ्कारेष्वप्युत्तरत्र काकु-शब्देनैव मुनिर्व्यवहरिष्यति । काकोरेवोपकारसंपादकाः परिपूर्णतायायिनोऽलङ्काराः, अलमिति पर्याप्त्यर्थः, इह न भूषणार्थः । अङ्गानि तु विच्छेदादीनि रसमर्थम् शोभादि कर्म च पोषयितुं काकोरेवोपकारीणीति, एवं परमार्थतः काकुरेवायं पञ्चमो रूपान्तरैः पूर्णीक्रियते । काक्वा च पाठ्यमानस्य स्वोचितचिज्जडस्वरूपार्थाभिमुख्येन नयनेनाभिनतया नीयत इति काकुरेवात्र प्रधानम् । तथा चैतदध्यायान्ते चोपसंह-रिष्यति "उक्तं काकुविधान" मिति । अन्यथाङ्गषट्कमध्यपतितस्योपसंहारोऽन्यङ्ग-निरूपणं चाभिधानमिति सर्वमसमञ्जसं स्यात् । तस्मात्काकुरेवात्र प्रधानमिति उपाध्याया हि वचनस्य संकेतितमर्थमन्यथाकारं समर्थयन्ति ।

---

जो कि किसी ने कहा है कि उदात्तादि धर्मों के धर्मी ( शास्त्र, शरीर ) का निग्रह, कण्ठ विवर को संवृतता इत्यादि शिक्षादि ग्रन्थों में पठित उदत्तादि उच्च धर्म की प्राप्ति षट् अलङ्कारों में जैसे भी हो, वही प्रयोजन कहा गया है, फिर भी उसमें मेरा कहा हुआ यदि प्रयोजन नहीं है तो उस धर्म की प्राप्ति से क्या होगा, इसको हम नहीं जानते।

अब प्रश्न होता है कि धर्म की प्राप्ति को प्रयोजन नहीं मानेंगे तो स्वरादि के कथन का क्या होगा ? इस पर कहते हैं कि 'ध्रुवागान प्रयोग का प्राण है' उसमें जाति के अंशों का विनियोग होगा तो क्या इस पाठ के अवसर पर सर्वथा छोड़ देना चाहिए। इस आशङ्का के शमन के लिए स्थायी स्वरों के आश्रयण प्रमुख मानकर पाठ करना चाहिए, इस प्रकार स्वरों के कथन का यहाँ प्रयाजन है।

ननु श्रुतमर्थमनादृत्य कथं काकुरेवं कुर्यात्। तत्रोक्तमन्यैः वस्तुस्वभावोऽत्र द्रष्टव्यो न हि दृष्टेऽनुपपन्नं नामेति। वयं तु ब्रूमः—इह येयं प्रथमेन संवित्स्पन्देन प्राणोल्लासनया वर्णादिरूपविशेषहीना वाग् जन्यते सा नादरूपा सती हर्षशोकादि-चित्तवृत्ति विधिनिषेधाद्यभिप्रायं वा तत्कार्यलिङ्गतया वा तादात्म्येन वा श्रुत्यन्तादि गमयतीति तावस्थितम्।

इस प्रकार ध्रुवा गान की विलक्षणता सम्पन्न हो जाने पर बाह्य अर्थ के समर्पण के द्वारा अथवा चित्तवृत्ति के समर्पण द्वारा अभिनय क्रिया की अनुभाव-रूपता की प्राप्ति के लिए रसों के भेद से काकु का अभिधान करते हैं, कथन करते हैं। इसीलिए स्वर के आधिक्य में मुख्य उपयोग होने के कारण काकुओं का सर्वत्र अनुभव रूप होता है। इस प्रकार भरतमुनि आगे उच्च, दीप्त अलङ्कारों में काकु शब्द के द्वारा ही व्यवहार करेंगे। क्योंकि परिपूर्णता को प्राप्त ये अलङ्कार काकु के ही उपकार के सम्पादक हैं। यहाँ अलङ्कार में 'अलम्' शब्द पर्याप्ति अर्थ का वाचक है, भूषण अर्थ का वाचक नहीं है। विच्छेद आदि अङ्ग तो रस, अर्थ और शोभा आदि कर्मों को पुष्ट करने के लिए काकु के ही उपकार करने वाले हैं। इस प्रकार परमार्थतः काकु ही रूपान्तरों ( भिन्न-भिन्न रूपों से ) पांचवी की पूर्त्ति करता है। काकु के द्वारा ही जड़ और चेतन अर्थों के अभिनयन से अभिनेयता लाई जाती है। इसलिए काकु को यहाँ प्रधानता है। और 'उक्तं काकुविधानम्' इत्यादि के द्वारा इस अध्याय अन्त में उपसंहार करेंगे। अन्यथा छः अङ्गों के मध्य में पठित उपसंहार तथा अन्य अङ्गों का निरूपण आदि सब असमञ्जस हो जायेगा। इसलिए यहाँ पर काकु ही प्रधान है, ऐसा उपाध्याय जी ने अपने कथन के संकेतित अर्थ का अन्यथा करके समर्थन करते।

अब प्रश्न होता है कि श्रुत अर्थ का अनादर करके काकु को इस प्रकार क्यों प्रधान मानते हैं। इस विषय में अन्य लोगों का कहना है कि वस्तु के स्वभाव को ही यहाँ देखना चाहिए। क्योंकि प्रयक्ष दृष्ट वस्तु में अनुपन्नता नाम का कोई तत्त्व नहीं है, हमारा तो कहना है कि यहाँ जो प्रथम संवित् स्पन्दन रूप प्राणोल्लसन के द्वारा वर्णादि रूप विशेष से रहित वाणी उत्पन्न होती है, वह नाद रूप होती हुई हर्षशोकादि चित्तवृत्ति को अथवा विधि-निषेधादि अभिप्राय को भिन्न कार्यों के लिङ्ग द्वारा अथवा तादात्म्य के द्वारा श्रुतिपर्यन्त पहुँचा देती है।

ततः पाठ्यं प्रयुञ्जीत षडलङ्कारसंयुतम् ।
हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ ॥ १०३ ॥
[1]षड्जर्षभौ तथा चैव वीररौद्राद्भुतेष्वथ ।
[2]गान्धारश्च निषादश्च कर्तव्यौ करुणे रसे ॥
धैवतश्चैव कर्तव्यो बीभत्से सभयानके ॥ १०४ ॥

---

यथा च प्राण्यन्तरस्य मृगसारमेयादेरपि नादमाकर्ण्य भयरोषशोकादि प्रतिपद्यते, तदयं नादाच्चित्तवृत्त्याद्यवगमोऽनुमानं तावत् । ये त्वेते वर्णविशेषास्ते तन्नादरूपसामान्यात्मकपदतन्तुग्रन्थिमया इव प्राच्यप्रयत्नातिरिक्तनिमित्तान्तरापेक्षाः तत एवान्यत्रानभिप्रेतेऽन्यथापि प्रयोक्तुं शक्याः, अत एव दृष्टव्यभिचाराः । नादस्तु झटित्युद्भिन्नमुखरागपुलकस्थानीयो नान्यथासिद्धोऽन्यथासिद्धं शब्दार्थं बाधत एव वा । यथोक्तं "भीरु न मे भयम्" इति ब्रुवन्नाशयते भयमित्यन्यप्रकारतां वा वाक्यार्थस्य विशेषार्पणेन विधत्ते । एतच्च वक्ष्यामोऽग्र इत्यास्तां तावत् । सर्वथा पाठ्ये काकुः प्रधानमिति स्थितम् ।

---

और जिस प्रकार मृग, कुत्ते आदि अन्य प्राणियों के नाद को सुनकर भय, क्रोध, शोक आदि होते हैं। वहाँ नाद ( ध्वनि ) से चित्तवृत्ति आदि का अनुमान होता है और जो ये वर्ण विशेष हैं वे नादरूप सामान्य पद तन्तुओं की ग्रन्थियों के समान प्राचीन प्रयत्नों के अतिरिक्त निमित्त की अपेक्षा है, इसलिए अन्यत्र अनभिप्रेत अर्थ में अन्यथा प्रयोग किया जा सकता है। नाद तो शीघ्र ही उद्भिन्न हुए मुखराग एवं पुलकस्थानीय है। अन्यथासिद्ध शब्दार्थ को बाधित नहीं करता, जैसा कि कहा गया है कि 'हे भीरु! मुझे किसी से कोई भय नहीं है' ऐसा कहता हुआ भय को नष्ट कर देता है। इस प्रकार विशेष के अर्पण के द्वारा वाक्यार्थ के प्रकार को आगे कहेंगे, अतः रहने दिया जाय। अतः पाठ्य ये काकु प्रधान है, यह सिद्धान्त हुआ ॥

**अनुवाद**—छः अलङ्कारों से युक्त पाठ्य को प्रयोग करना चाहिए। हास्य और शृङ्गार रस में मध्यम और पञ्चम स्वर का प्रयोग करना चाहिये। वीर, अद्भुत और रौद्र रसों में षड्ज और ऋषभ स्वर का और करुण रस में गान्धार और निषाद स्वरों का तथा बीभत्स एवं भयानक रस में धैवत स्वर का प्रयोग करना चाहिये ॥ १०३-१०४ ॥

---

१. क. (भ.) षड्जर्षभौ च कर्तव्यौ ।
२. क-भ. निषादश्चैव गान्धारः करुणे संविधीयते ।

[1]त्रीणि स्थानानि—उरः कण्ठः शिर इति । भवत्यपि च[2] ।

शारीर्यामथ वीणायां त्रिभ्यः स्थानेभ्य एव तु ।

[3]उरसः शिरसः कण्ठात्स्वरः काकुः प्रवर्तते ॥ १०५ ॥

---

अत्र हास्यशृङ्गारयोरित्यादिना जात्यंशकविनियोगं भविष्यन्तमनुवदंस्तद्द्रुतस्थायिस्वरानुसारेण काकोः प्रयोग इति दर्शयति ॥ १०३–१०४ ॥

अथैषां स्वराणामाश्रयान् दर्शयति त्रीणि स्थानानीति ।

ननु पाठावसरे वर्णा यत्र मूर्धन्यास्तत्र कथमुरःस्थानस्वरनिष्पत्तिः ? एवमन्यत्र वाच्यम् । उक्तं मन्द्रनादात्मिकाया वाचः स्वरसप्तकं रूपं, सा चोरःस्थाननिष्पन्ना सती मूर्धानमभिघ्नन्ती मूर्धन्यं वर्णं तद्रूपं मन्द्रस्वरानुविद्धं दर्शयति ।

---

यहाँ पर 'हास्यशृङ्गारयोः' भविष्य के जात्यंशकों के विनियोग का अनुवाद करते हुए द्रुत स्तर के अनुसार काकु का प्रयोग होता है, यह दिखाते हैं ॥ १०३-१०४ ॥

## २. स्थान

अब 'त्रीणि स्थानानि' के द्वारा स्वरों के आश्रयों को दिखाते हैं—

**अनुवाद—स्थान तीन हैं—उरस्, कण्ठ और शिरस् । इस विषय में श्लोक भी है ।**

**अनुवाद—शारीरी वीणा में उरस्, कण्ठ और शिरस् इन तीन स्थानों से काकु स्वर प्रवृत्त होता है ॥ १०५ ॥**

**अभिनव**—यहाँ प्रश्न होता है कि पाठ के अवसर पर जहाँ मूर्धन्य वर्ण हैं वहाँ उरःस्थानीय स्वर की निष्पत्ति कैसे होगी ? इसी प्रकार अन्यत्र भी समझना चाहिए । इस पर कहते हैं कि मन्द्रनादात्मिका वाणी के सात स्वर हैं । वह वाणी उरःस्थान से निष्पन्न होती हुई मूर्धा से टकराती हुई मूर्धन्य वर्ण को मन्द्र स्वर से अनुविद्ध दिखाती है ।

---

१. ख. ग. त्रीणि स्थानान्युरः कण्ठशिरांसीति भवत्यपि ।

२. क. भवति चात्र श्लोकः ।

३. क. (टि०) उरसा शिरसा ।

न च मूर्धस्थानत्वेऽपि तस्योच्चताकृतं तारत्वमापद्यते । अन्यदेव हि वर्णनिष्पत्तिस्थानं, मूर्धान्तर्वर्त्यनुविवरमात्रं स्थानान्तरम् । स्वरनिष्पत्तिस्तु विततवितते मूर्धकाये निष्पद्यमाना तारत्वं संपादयन्ती एव तारमन्द्रमध्यता सवर्णानां सर्वं स्वरस्थानभेदसंपाद्यमानवपुषामप्युपपद्यते तत्र स्वरग्रहणादेवाक्षिप्ते स्थानभेदे पुनः स्थानोपादानं षट्षष्टिस्थानभेदनिवृत्त्यर्थम् । तथा हृदुरःस्थाने द्वाविंशतिस्थानानि यत्र श्रुतयः स्वराश्च । एवं कण्ठे मूर्ध्नि च । तावतां च स्पर्शे स्फुटं गानमेव स्यात्, न पाठ्यमित्यवोचाम । अत एव गुणशब्दो न धर्मवचनः पाठ्यगुणानिति, किं तु उपकरणवचनः । स्थानं च तद् यदेवोपकरणं भवति ॥ १०५ ॥

किन्तु मूर्धा स्थान होते हुए भी उसके उच्चता रूप तारत्व की प्राप्ति नहीं होती और भी वर्णों की निष्पत्ति का स्थान अन्य ही है और वह अन्य स्थान मूर्धा के अन्तर्वर्त्ती अनुविवर मात्र है। किन्तु स्वरों की निष्पत्ति तो अत्यन्त वितत मूर्धा स्थान में निष्पन्न होती हुई तारत्व को सम्पादन करती हुई इस प्रकार स्वर और स्थान के भेद से संपाद्यमान शरीर वाले सभी वर्णों की तारता, मन्द्रता और मध्यता भी उपपन्न होती है। वहाँ स्वरों के ग्रहण से ही स्थान-भेद का आक्षेप हो जायेगा, पुनः स्थान पद का ग्रहण ६६ प्रकार के स्थान भेदों से निवृत्ति के लिए है। उनमें उरःस्थान में २२ स्थान है, जहाँ श्रुतियां एवं स्वर हैं। इसी प्रकार कण्ठ में २२ स्थान और मूर्धा में भी २२ स्थान हैं। इन स्थानों के स्पर्श से गान ही स्पष्ट होता है, पाठ्य नहीं। यह कह चुके हैं। इसलिए पाठ्य-गुणान् में गुण पद धर्म का वाचक नहीं है, अपितु उपकरण वाचक है और स्थान वही है जो उपकरण होता है ॥ १०५ ॥

विशेष—स्वरों की उत्पत्ति के सम्बन्ध में बताया गया है कि आत्मा बुद्धि के साथ मिलकर मन को प्रेरित करता है, मन कायाग्नि को आहत करता है, वह आहत अग्नि वायु को प्रेरित करती हैं, और वह वायु नाभि स्थान से उठकर उरःस्थान में सञ्चारित होता हुआ 'मन्द्र' स्वर को उत्पन्न करता है, वही वायु कण्ठ स्थान में सञ्चारित होता हुआ 'मध्य' स्वर को उत्पन्न करता है और वही वायु शिरःस्थान से सञ्चारित होकर 'तार' स्वर को उत्पन्न करता है और वही वायु मूर्धा से आहत होकर मुख में पहुँच कर वर्णों को उत्पन्न करता है। इस प्रकार उरस्, कण्ठ और मूर्धा ये तीन स्वरों के स्थान हैं। इन्हीं तीन स्थानों से मन्द्र, मध्य और तार ये तीन ध्वनियाँ उत्पन्न होती हैं।

अपि च शारीर्यामथ वीणायामित्यादि केचिद् व्याचक्षते—इहार्थकाकुस्ताव-द्विधिनिषेधाद्यर्थावगमिका, स्वरकाकुस्तु चित्तवृत्तिसूचिका । एतद् व्यापारद्वय-शून्या नेपथ्यपाठवैतालीयपाठादिविषया दूरस्थाभाषणादिविषया च शोभासंपादन-दूरश्रवणादिप्रयोजना स्वरकाकुः सा तेन वक्ष्यत इति । एवं प्रष्टव्यास्तावत्—योऽयं स्वरकाकोर्विषय उक्तस्तत्र यद्यर्थरूपं किंचिदभिधेयं तत्रावश्यमर्थकाकोर्वा पृथक् स्वरकाकुः ।

तथा हि नेपथ्यपाठेऽपि कञ्चुकी पठति "वीरोऽयमङ्गदः पठति", यौगन्ध-रायणः पठति इति, एवंभूतवृत्तचित्तवृत्त्यादि विशेषप्रतिपादकेनैव पाठेन भवितव्यम् । वैतालीयपाठेऽपि समुचितावसरावेदनप्रधानेऽवश्यमर्थं आदातव्य एव । उक्तं चैतत्—अर्थानपेक्षया किमभिनयनमन्यचिन्तया, पुस्तकवाचकपाठो ह्यनुक्रियमाणोऽभिनयता-मवलम्बते । अन्यथाभिनयरूपत्वाभावे तदुपकरणधर्म्यादितत्फलरसादिव्यतिरिक्तत्वे स्वरातोद्यगानादिवैलक्षण्ये च चिन्तयैव किं प्रयोजनमिति । न स्यात्काकुसामान्य-लक्षणमेतेन किं घटत इत्यन्ये ।

---

और भी 'शारीर्यामथ वीणायां' को जो कुछ लोग व्याख्या करते हैं—यहाँ जो अर्थ काकु है वह विधि और निषेधादि रूप अर्थों को अवगमिका है और स्वर एवं काकु चित्तवृत्ति की सूचिका है। वह स्वर काकु विधि और निषेध रूप व्यापार से शून्य, नेपथ्य पाठविषया तथा वैतालीय पाठविषया, दूरस्थ आभाषणादि विषया तथा शोभा-सम्पादन करना एवं दूरस्थ श्रवण रूप प्रयोजन वाली स्वर काकु है, उसे आगे कहेंगे। उनसे यह पूछना है कि जो यह स्वर काकु का विषय कहा गया है उसमें यदि अर्थरूप कुछ अभिधेय है वहाँ अवश्य ही अर्थ काकु से भिन्न स्वर काकु है।

और नेपथ्य पाठ में कञ्चुकी कहता है कि 'यह वीर अङ्गद पढ़ता है' यह 'यौगन्धरायण पढ़ता है' इस प्रकार चित्तवृत्ति आदि के विशेष का प्रतिपादक होना चाहिए और वैतालीय पाठ में भी समुचित अवसर का आवेदन करना प्रधान है, अर्थ का अवश्य आदान करना चाहिए। और यह भी कहा गया है कि अर्थ की अपेक्षा किये विना अन्य विषय का चिन्तन करना क्या अभिनय होगा ? अथवा पुस्तक के वाचक के पाठ का अनुकरण करना क्या अभिनय का अवलम्बन करेगा ? अभिनयरूपत्व के अभाव में उसके उपकरण धर्म्यादि तथा अभिनय के फल रसादि से भिन्न होने और स्वर, आतोद्य ( वाद्य ) एवं गान आदि से बिलक्षण होने से अन्यथा चिन्तन से क्या प्रयोजन सिद्ध होगा ? इसमें काकु का सामान्य लक्षण नहीं होगा, अतः इसको चिन्तन व्यर्थ है।

एवमपि भवतोत्यसमर्थितं स्यात् तद्धि पूर्वप्रक्रान्तवस्तु समर्थनेन प्रयुञ्जत इति मुनेः शैली। तस्मात्पूर्वोक्तस्थानत्रयसमर्थनार्थोऽयं श्लोकः। तदयमर्थः—शारीर्यां वीणायां केवलमुरःशिरःकण्ठलक्षणेभ्यः त्रिभ्य एव स्थानेभ्यो न तु षट्षष्टिस्वरपरिव्यक्तरञ्जनात्मकगानोपयोगिव्यापारः काकुभूतः सूचकरूपः संप्रवर्तते।

अथ शब्दोऽवधारणे बाह्यायां हि प्रतिबिम्बितायां वीणायां रञ्जनात्मक-स्वरस्वरूपव्यतिरेकेण न काकुसंपत्तिः। वीणाग्रहणं शरीरगतविवृतमध्याकाशदेश-परिग्रहार्थं, न शरीरमात्रे स्वरनिष्पत्तिः, अपि तु तत्रैव। येयं बाह्यवीणादण्डस्थानीया उत्तरोत्तरस्थानपरम्पराविशिष्टा, सा स्थानसोपानपंक्तिस्वरनिष्पत्तिस्थानम्, अत एव काकुस्वरमपि लक्षितम् -कक लौल्ये, लौल्यं च साकांक्षे यथा स्वरवैचित्र्यं लक्ष्यते ईषद्यतो वाच्यभूमिः संपद्यते सा काकुः ईषदर्थे कुशब्दस्य कादेशः। काकुर्वा जिह्वा तद्व्यापारसंपाद्यत्वात् काकुः ॥ १०५ ॥

---

यदि यह कहा जाय कि ऐसा भी होता है तो वह समर्थित नहीं हुआ। वह तो पूर्व प्रक्रान्त वस्तु से समर्थन से प्रयुक्त होता है, यह मुनि की शैली है। इसलिए पूर्वोक्त स्थानत्रय के समर्थन से यह श्लोक है। उसका यह अर्थ है कि शारीरी वीणा में केवल उरस्, शिरस् एवं कण्ठ इन तीन स्थानों से न कि ६६ स्वरों से परिव्यक्त रञ्जनात्मक गान के उपयोगी व्यापार काकु के सूचक रूप में प्रवृत्त होता है ॥

प्रतिबिम्बित स्थानीया बाह्य वीणा में काकु की सम्पत्ति विद्यमान होती है जो रञ्जनात्मक स्वर रूप से भिन्न होती है। 'शारीर्यां वीणायां' में वीणा पद का ग्रहण शरीर के मध्य में विवृत हृदयाकाश के परिग्रहण के लिए है। क्योंकि विना आकाश के शरीर मात्र में स्वर की निष्पत्ति नहीं हो सकती, अपितु हृदयाकाश में ही होगी। जो यह तुम्बीघटिता दण्डस्थानीया उत्तरोत्तर स्थान परम्पराओं से विशिष्ट बाह्य वीणा है। वह सोपान पंक्ति के समान स्वरों के निष्पत्ति के स्थान हैं। अत एव इनसे काकु स्वर लक्षित होता है। 'कक लौल्ये' धातु का अर्थ लौल्य जो सांकाङ्क्ष स्थल में होता है, जिससे स्वर-वैचित्र्य लक्षित होता है जो वाच्य की भूमि बन जाती है, वह काकु है। यहाँ पर ईषत् अर्थ में कु शब्द को 'क' आदेश हो गया है। अथवा काकु का अर्थ जिह्वा है, अतः जिह्वा के व्यापार से संपाद्य होने से यह 'काकु' है।

[1]आभाषणं च दूरस्थे क्षिरसा संप्रयोजयेत् ।
[2]नातिदूरे च कण्ठेन ह्युरसा चैव पार्श्वतः ॥ १०६ ॥
उरसोदाहृतं वाक्यं शिरसा दीपयेद् बुधः[3] ।
[4]कण्ठेन शमनं कुर्यात्पाठ्यप्रयोगेषु सर्वदा ॥ १०७ ॥

---

एवं स्थानस्वरूपं विभज्य तस्य विषयभेदमादर्शयितुमाह—आभाषणं च दूरस्थ इत्यादि ।

शिरसेति शिरोनिष्पन्नेन तारेण नादेनेत्यर्थः । नातिदूरे कण्ठेनेति मध्येन, उरसा समीपे मन्द्रेणेति यावत् ॥ १०७ ॥

एवं स्थानत्रयस्य पृथगुपयोगमभिधाय युगपद्दर्शयति—उरसोदाहृतं वाक्यमित्यादिना ।

---

इस प्रकार तीनों स्थानों के रूपों का विभाग करके अब उनको विषय भेद दिखलाने के लिए कहते हैं—

अनुवाद—दूरस्थ व्यक्ति से बात करने में शिर हिलाना चाहिए, अधिक दूर न होने पर कण्ठ से तथा समीपस्थ व्यक्ति से उरस् से ( मन्द्रनाद से ) संकेत करना चाहिये ॥ १०६ ॥

अभिनव—यहाँ 'शिरसा' से तात्पर्य शिरोनिष्पन्न तार नाद से है। 'कण्ठेन' पद से मध्यनाद का ग्रहण होता है। इसका प्रयोग नातिदूरस्थल में होता है। 'उरसा' पद का तात्पर्य मन्द्र नाद से है। इसका उपयोग समीपस्थ सम्भाषण में होता है ॥ १०६ ॥

इस प्रकार इन तीनों स्थानों का अलग-अलग उपयोग कहकर अब एक साथ उपयोग दिखाते हैं—उरसादाहृतमित्यादि ।

अनुवाद—पाठ्य के प्रयोग में सर्वदा उरस् से उदाहृत वाक्य को विद्वान् शिर से दीप्त करें और कण्ठ से शमन करें ॥ १०७ ॥

---

१. क-भ. आभाषणं च दूरस्थं शिरस्थेन स्वरेण हि ।
२. ख. नातिदूरेऽपि कण्ठेनाप्युरसा चापि पार्श्वतः ।
ग. नातिदूरेऽपि कण्ठे च ह्युरसा च समीपतः ॥
क-भ; कण्ठेन नातिदूरे स्यादुरसा चैव पार्श्ववतः ।
३. ग. शिरसोद्दीपयेद्बुधः । ४. क. (टि०) कण्ठेन शमयेच्चैव ।

मन्द्रस्वरेण वा पाठमारभ्य क्रमेण तारं गत्वा मध्येन परिसमाप्नुयादिति श्लोकार्थः। यदा हि न दीप्तेन क्रोधादिना नापि मन्द्ररूपेण शोकादिना आविष्ट-हृदयो भवति तदा क्रमेण वक्तव्यवस्तुविषयोत्साहविस्फारणात् तारान्तं गच्छन्नुप-संहारे मध्य एव विश्राम्यतीत्यनवशिष्टस्यायं सामान्येन पाठधर्मः। अत एव शान्ते व्यभिचारिबलावेशशून्यतायामयमेव पाठधर्मः। वैतालीयपाठे चायमपि सामान्य-धर्मोऽस्तु। न तद्विषये स्वरकाकुः।

कस्तर्हि तस्या विषयः उच्यते—कदाचिदर्थस्य धर्मपुञ्जवाच्यस्य धर्मान्तरा-धानं काकुरुच्यते, कदाचित्स्वरजनकचित्तवृत्त्यर्पणं करोति। यत्र रसस्वरजनक-काकुव्यवहारः कदाचिद्वा नादात्मनि स्वरसूत्रे सुगुम्फितस्य स्वग्रन्थ्यात्मनो वर्णराशेर्दूरश्रवणं किंचिच्छ्रवणमश्रवणं वेत्यस्मिन्नर्थे व्याप्रियते। तथापि स्वरकाकुरुच्यते। तत्रोक्तमाभाषणं दूरस्थमित्यादि तदेवं व्यतिरिक्ते स्वसेवाव्यापाराद् व्यतिरिक्तजडचिद्भेदेन भेदात् तदर्थरसस्वरभेदात् त्रिधैव काकुः॥ १०७॥

---

अभिनव—मन्द्र स्वर से पाठ का प्रारम्भ करके तार स्वर तक ले जाकर मध्य स्वर पर उसे समाप्त कर देना चाहिए, यह श्लोक का अर्थ है। जब न तो दीप्त रूप क्रोधादि से और न मन्द्र रूप शोकादि से हृदय आविष्ट होता है तो क्रमशः वक्तव्य वस्तु विषयक उत्साह के विस्मारण से स्वर को तार तक ले जाकर उपसंहार के समय विश्राम लेता है। यही सामान्यतः अनवशिष्ट पाठ का धर्म है। अत एव शान्त में व्यभिचारी भावों के आवेश से शून्य अवस्था में यही पाठ धर्म है। वैतालीय पाठ में भी यही सामान्य धर्म है। उस विषय में स्वर काकु नहीं है।

अब प्रश्न उठता है कि जब उसमें काकु स्वर नहीं होता तो उसका विषय क्या है? इस पर कहते हैं कि कभी धर्मपुञ्ज के वाच्य अर्थ का धर्मान्तर में आधान काकु कहा जाता है। कभी स्वर जनक चित्तवृत्तियों का अर्पण करता है, जहाँ रस जनक स्वर काकु का व्यवहार होता है और कभी नादात्मक स्वात्मभूत पद एवं वाक्यरूप ग्रन्थियों वाली वर्णराशि का दूर से श्रवण होता है अथवा किञ्चित् श्रवण होता है। अथवा कुछ भी नहीं होता, इसी अर्थ में काकु व्यापृत है। वहाँ भी स्वर काकु होता है। इस प्रकार स्व सेवा व्यापार से भिन्न तथा जड़ एवं चेतन के भेद से भिन्न तदर्थ रस और स्वर के भेद से तीन प्रकार की काकु है॥ १०७॥

[1]उदात्तश्चानुदात्तश्च स्वरितः कम्पितस्तथा ।
वर्णाश्चत्वार एव स्युः पाठ्यप्रयोगे तपोधनाः ॥ १०८ ॥

एवं स्थानभेदमुक्त्वा क्रमप्राप्तं वर्णस्वरूपमाह—उदात्तश्चेति । उच्चता नीचता मध्यमता उच्चनीचोभयडोलावलम्बनमिति चत्वारः स्वरधर्माः । वर्णा गुणा यदि वा पाठक्रियाविस्तारका विवृण्वते प्रकटयन्ति स्वार्थविशेषमिति वा । पाठ्यप्रयोगे काव्ये स्वरस्य रक्तिभागमपहाय वर्णा एव वक्तव्याः । रक्तिभागाभिनिवेश तु गानयोगो, न पाठ्यप्रयोगः स्यादित्यवादिषुः । तत्रान्वयव्यतिरेकाभ्यां रक्तिभागेऽनुदात्तादिवर्णभागः कादिवर्णभागः । तस्य स्फुटत्वास्फुटत्वमित्याह—यो धर्मस्तन्त्र्यामनुरणनप्रधानायामरक्तकण्ठे गातरि यथाकथंचिद्वतं प्रवृत्ते हुडुक्कामुरजादौ च पृथग्लक्ष्यत एव । एवं प्रधानतया धर्मान्तराणि मग्नत्वेन तत्रापि सत्येव अत एवाह तपोधनाः सूक्ष्मवेदिनो यूयमत्राधिकृता विचार इत्याशयः ।

## ३. वर्ण

इस प्रकार स्थान-भेद क्रम से प्राप्त वर्णों के स्वरूप को कहते हैं—

**अनुवाद**—हे तपोधनों ! पाठ्य के प्रयोग में उदात्त, अनुदात्त, स्वरित और कम्पित ये चार वर्ण होते हैं ॥ १०८ ॥

**अभिनव**—उच्चता, नोचता, मध्यमता और उच्च-नीच रूप दोनों के अवलम्बन रूप ये चार स्वरों के धर्म है । इस प्रकार पाठविशेष की क्रिया का विस्तार करने वाले वर्ण गुण है अथवा स्वार्थ बिशेष को विवृत या प्रकटन करने वाले वर्ण गुण हैं ।

**अभिनव**—पाठ्य के उपयुक्त काव्य में स्वर के रतिभाग का परित्याग कर वर्ण ही कहना चाहिए, क्योंकि रतिभाग का अभिनिवेश करने पर तो काव्य गान के उपयोगी हो जायेगा, पाठ्य के उपयोगी नहीं होगा । यह कहा जा चुका है । वहाँ अन्वय-व्यतिरेक के द्वारा यह सिद्ध किया है कि रतिभाग में कादि वर्ण रूप अनुदात्तादि वर्ण भाग का उपयोग होता है । उसकी स्फुटता और अस्फुटता को कहते हैं । जो धर्म अनुरणन प्रधान तन्त्री में अरक्त कण्ठ वाले गायक के जिस किसो प्रकार गान में प्रवृत्त होने पर हुडुक्का, मुरज आदि में पृथक् लक्षित होता है । इस प्रकार प्रधान रूप से अन्य धर्म वहाँ मग्न होकर प्रतीत होने वाले धर्म अस्फुट हैं । अत एव यहाँ 'तपोधनाः' सम्बोधन कहने का तात्पर्य है कि आप सूक्ष्मवेदी हैं और इस विषय के विचार में अधिकारी हैं ।

१. ब. उदात्ता ।

तत्र हास्यशृङ्गारयोः स्वरितोदात्तैर्वर्णैः पाठ्यमुपपाद्यं, वीर-रौद्राद्भुतेषूदात्तकम्पितैः करुण[1]वीभत्सभयानकेष्वनुदात्तस्वरितकम्पितै-रिति[2]।

एषां वर्णानां विषयमाह—हास्यशृङ्गारयोरित्यादिना । मध्यपञ्चमावित्यादौ प्रकरणे यथासंख्यं न विवक्षितमित्येवं हास्ये मध्यमायाः पञ्चम्या वा जातेः स्थायि-स्वरत्वं गृहीत्वा तत्रैवोच्चमध्यमस्थानस्पर्शेन पठेत् । एवं शृङ्गारवीरादिषु त्रिषु षाड्ज्या आर्षभ्या वा स्वांशं गृहीत्वा तत्रैवोदात्तकम्पितैः पाठः, करुणे निषादवत्या गान्धार्या वा स्थायिनमालम्ब्यानुदात्तेन पाठः, वीभत्से धैवत्यंशस्वराश्रयेण स्वरित-कृतः पाठः । भयानके तत्स्वरावलम्बनेनैव धैवतांशकम्पितप्रधानः पाठः—इत्येवं भविष्यत् ( अ-२९ ) जातिविनियोगानुसारिस्वरानुवादेन वर्णेषूदात्तादिषु तात्पर्यं, न तु स्वरेषु । तेषां तु पृथगुद्देशप्रयोजनं षष्ठे दर्शितमन्तरालापपरिग्रहमिति ।

अब उन वर्णों के विषय में कहते हैं—हास्यशृङ्गारयोरित्यादि ।

अनुवाद – उनमें शृङ्गार तथा हास्य रस में स्वरित और उदात्त स्वरों से, वीर, रौद्र और अद्भुत रसों में उदात्त एवं कम्पित स्वरों से तथा करुण, बीभत्स और भयानक रसों में अनुदात्त, स्वरित और कम्पित स्वरों से पाठ्य करना चाहिये ।

अभिनव—'हास्य और शृङ्गार में मध्यम और पञ्चम स्वरों को रखना चाहिए' इत्यादि प्रकरण में जिस क्रम में पाठ है उस क्रम से योजना विवक्षित नहीं है । अतः हास्य में मध्यमा अथवा पञ्चमी जाति के स्थायी स्वरों को ग्रहण कर उसी अवसर पर उच्च मध्यम स्थान का स्पर्श करके पाठ करें । इसी प्रकार शृङ्गार वीर और हास्य इन तीनों रसों में षड्ज्या अथवा आर्षभी के अंश को लेकर उसी में उदात्त और कम्पित स्वरों से पाठ करना चाहिए । इसी प्रकार करुण रस में निषादवती अथवा गान्धारी के स्थायी स्वर का अवलम्बन करके अनुदात्त स्वर से पाठ करें, बीभत्स रस में धैवती के अंश स्वर का आश्रय लेकर स्वरित वर्ण से पाठ करें और भयानक रस में उसी धैवती के अंश स्वर का आश्रय कम्पित स्वरों से पाठ करना चाहिए । इस प्रकार आगे को जातियों के विनियोग के अनुसारी स्वरों के अनुवाद के द्वारा उदात्तादि वर्णों में तात्पर्य है, न कि स्वरों में । उन स्वरों का उद्देश प्रयोजन षष्ठ अध्याय में अलग दिया गया है—अन्तरालप-ग्रहणमिति ॥

१. ख. ग. वात्सल्य ।

२. ख. ग. कम्पितैर्वर्णैः पाठ्यमुपपादयेदिति ।

द्विविधा काकुः साकांक्षा निराकांक्षा चेति वाक्यस्य साकांक्ष-निराकांक्षत्वात् ।। १०९ ।।

अनियुक्तार्थकं वाक्यं [1]साकांक्षमिति संज्ञितम् ।
नियुक्तार्थं तु यद्वाक्यं निराकांक्षं तदुच्यते ।। ११० ।।

---

एवं काकोः स्वरूपोत्पत्ति प्रतिपाद्य तस्या अर्थविषये व्यापारं दर्शयन्नुद्देश-क्रममप्यनुसर्तुमाह—द्विविधा काकुरिति ।

वाक्यस्येति—साकांक्षं यत्र वाक्यं तत्र साकांक्षा काकुः, तथा वक्तृगता चाकांक्षा वाक्य उपचर्यते । सा च प्रकरणादिबलान्निश्चीयते । विशिष्टविषयत्वं चाकांक्षायास्तत एवागम्यते । तदाह—अनियुक्तार्थकं वाक्यमिति ।

यादृशो वाक्यात्सङ्केतबलेनार्थः प्रतीयते तादृश एव यत्र न्यूनाधिकः प्रमाण-बलेन निर्णययोग्यस्तद्वाक्यं निराकांक्षं तद्विपरीतं साकाङ्क्षम् ॥ ११० ॥

---

## ४. काकु

अभिनव—इस प्रकार काकु के स्वरूप और उत्पत्ति का प्रतिपादन करके अब उसके अर्थ के विषय में व्यापार दिखलाते हुए उद्देश क्रम का अनुसरण करने के लिये कहते हैं—

अनुवाद—वाक्य के साकाङ्क्ष और निराकाङ्क्ष रूप होने से काकु दो प्रकार की होती है—साकाङ्क्षा और निराकाङ्क्षा ।

अनुवाद—जहाँ पर वाक्य साकाङ्क्ष होता है वहाँ साकाङ्क्षा काकु होती है, और वक्तृगत आकाङ्क्षा का वाक्य में उपचार रहता है, उस आकाङ्क्षा का प्रकरणादि के बल से निश्चय होता है और आकाङ्क्षा की विशिष्ट विषयता को अवगम प्रकरण के बल से होता है। इसी बात को हम कारिका के द्वारा कहते हैं—

अनुवाद—जहाँ पर पूर्णरूप से अर्थ प्रकट नहीं होता अर्थात् जहाँ संकेत के बल से अर्थ की प्रतीति होती है, वहाँ साकाङ्क्ष काकु होती है। और पूर्णरूप से अर्थ प्रकट करने वाला वाक्य 'निराकांक्ष' कहलाता है ॥ १११ ॥

अभिनव—जिस प्रकार के वाक्य से संकेत बल के आधार पर अर्थ की प्रतीति होती है, उसी प्रकार का वाक्य जहाँ पर न्यून या अधिक रूप से प्रमाण के बल से निर्णय के योग्य है, वह वाक्य निराकाङ्क्ष है और उसके विपरीत अर्थवाला वाक्य साकाङ्क्ष है ॥ १११ ॥

---

१. ख. साकाङ्क्षकमिति ।

[1]तत्र साकांक्षं नाम ताराविमन्द्रान्तमनियुक्तार्थमनिर्यातितवर्णालङ्कारं कण्ठोरस्थानगतम्। [2]निराकांक्षं नाम नियुक्तार्थं निर्यातितवर्णालङ्कारं शिरःस्थानगतं मन्द्रादितारान्तमिति ॥ १११ ॥

एवं वाक्यस्य स्वरूपं प्रतिपाद्य तन्निष्ठां काकुमभिधातुमाह—तत्र साकाङ्क्षमित्यादि।

अनियुक्तार्थं यत्साकांक्षमुक्तं तन्मन्द्रोपक्रमं तारसमाप्तिकं पठनीयमिति। सर्वाणि क्रियाविशेषणानि कियन्ति यत्र तारतेत्याह कण्ठोरःस्थानगतानीति। तथा वर्णा उदात्तादयोऽलङ्काराश्चोच्चनीचदीप्तादयो परिसमाप्ता अर्धस्पृष्टयैव त्यक्ता यत्रेति क्रियाविशेषम्। एवंभूतो यः क्रियाविशेषणत्वेन वाक्ये पाठ्यमाने ध्वनिधर्मविशेषः सा काकुः। यदि वा सामाधिकरण्येनैव व्याख्येयम्। धर्मो हि न स्वतन्त्रो भाति अपि तु धर्मिनिष्ठ एवेति, तत्राकांक्षा अर्थान्तर एवातदर्थगत एव विशेषे तदर्थाभावे। तथा च—यद्रामेण कृतं तदेव कुरुते द्रोणात्मजक्रोधनः।

इस प्रकार वाक्य के स्वरूप का प्रतिपादन करके अब वाक्यनिष्ठ काकु का अभिधान करते हैं—

**अनुवाद**—उनमें साकाङ्क्ष काकु तार स्वर से लेकर मन्द्र स्वर पर समाप्त हो जाता है और अनियुक्तार्थक वाक्य जिसमें वर्ण और अलङ्कार अनिर्यातित है वह कण्ठ एवं उरःस्थानगत होता है और निराकाङ्क्ष काकु नियुक्तार्थक एवं निर्यातित वर्णालङ्कार से युक्त शिरःस्थानगत मन्द्रादि से प्रारम्भ कर मन्द्रान्त पर्यन्त होते हैं।

**अभिनव**—जिस अनियुक्तार्थक वाक्य को साकाङ्क्ष कहा गया है उसे मन्द्रादि स्वर से प्रारम्भ करके तार स्वर से समाप्ति करते हुए पढ़ना चाहिए। यहाँ समस्त क्रिया विशेषण कितने हैं जिन पर तारता है, इस पर कहते है कि कण्ठ और उरस् स्थान में है। उदात्तादि वर्ण और उच्च, नोच, दीप्त अलङ्कार जहाँ अपरिसमाप्ति दशा में अर्ध स्पष्ट रूप में छोड़ दिये जाते हैं वे क्रिया विशेषण हैं। इस क्रिया-विशेषण के रूप में पाठ्यमान वाक्य में ध्वनिगत जो धर्म-विशेष है, वह 'काकु' है। अथवा ध्वनिरूप है, इस प्रकार सामानाधिकरण्य से हो व्याख्येय है। धर्म स्वतन्त्र नहीं होता, अपितु धर्मि में ही रहता है, वहाँ आकांक्षा अर्थान्तर अर्थात् तदर्थगत होती है अन्यथा अतदर्थगत होतो है अथवा विशेष अर्थ में अथवा विशेष अर्थ में न रहने पर भी होती है। जैसे—

"जो राम ने किया था, वही क्रोधी द्रोण पुत्र अश्वथामा करता है।"

१. ग. अत्र साकाङ्क्षं मन्द्रादितारान्तम्। क-भ. तत्र साकांक्षा नाम वाच्यम्।

२. क. (द्वि०) निराकांक्षा नाम नियुक्तार्थं।

अत्र काकुः। कृतमित्युदात्तकम्पितवर्णस्योच्चदीप्तालङ्कारस्य चासमाप्त्या अतोऽप्यधिकं कुरुत इति काकुप्रभावादर्थान्तरे गतिः। 'स एष दशकन्धरमिति'[1] श्लोके 'तदात्मज इहाङ्गद' इत्यत्र साकांक्षा काकुः स्वगतान् वालिपुत्रोचितान्वि-शेषानर्पयति। 'स्वस्था भवन्ति मयि जीवति' इत्यत्र साकांक्षा काकुर्भावनारूपं स्वभावमाह, वचनोच्चारणं स्वर्ये संभावनां विदधतावश्यं निषेधात्मनो विषयमर्पयति। तदियमर्थाभिप्रायसमर्पकाभिनयरूपार्थंकाकुः साकांक्षा। एतद्विपरीता निराकांक्षा, तस्याः शिरःस्थान एव मन्द्रत्वं तारताप्रतिस्थानं, ह्युत्तरोत्तरतारत्वमधराधरमन्द्रत्वं च वक्ष्यामः।

यहाँ काकु है। 'कृतम्' यह उदात्त और कम्पित वर्णों की उच्च और दीप्त अलङ्कारों की परिसमाप्ति नहीं है। अतः राम से भी अधिक द्रोणपुत्र करता है, इस प्रकार काकु के प्रभाव से अन्य अर्थ की प्रतीति होती है।

'स एव दशकन्धरं कृतवतोऽपि कक्षान्तरे
गतः स्फुटमबन्ध्यतामधिपयोधि सान्ध्यो विधिः।
तदात्मज इहाङ्गदः प्रहित एष सौमित्रिणा
क्व स क्व स दशाननो ननु निवेद्यतां राक्षसाः॥

इस श्लोक में 'वालि के पुत्र अङ्गद को' इस अंश में साकांक्ष काकु है जो स्वगत वालिपुत्र के उचित विशेषताओं का अर्पण करती है। इसी प्रकार—

'स्वस्था भवन्ति मयि जीवति धार्त्तराष्ट्राः'

अर्थात् मेरे जीते जी धृतराष्ट्र के पुत्र स्वस्थ हों, यह कैसे हो सकता है। यहाँ साकाङ्क्ष काकु है। जो भावना रूप अपने भाव को कहती है। यहाँ पर वाक्य का कथन अर्थ के विषय में सम्भावना करते हुए अवश्य ही निषेधरूप विषय का अर्पण करता है। इस प्रकार यह अर्थ के अभिप्राय का समर्पक अभिनय रूप साकांक्ष अर्थ काकु है। इसके विपरीत निराकाङ्क्ष काकु है। उसके शिरः स्थान में तारता का प्रतिष्ठापक मन्द्रत्व है। इसमें उत्तरोत्तर तारता और अपराधर मन्द्रता है, यह आगे कहेंगे।

---

१. स एव दशकन्धरं कृतवन्तोऽपि कक्षान्तरेऽगतःस्फुटमबन्ध्यतामधयोधिसान्ध्यो विधिः।
तदात्मज अङ्गदः प्रहित एव सौमित्रिणा।
क्व स क्व स दशाननो ननु निवेद्यतां राक्षसः।

[1]अथ षडलङ्कारा नाम—

उच्चो दीप्तश्च मन्द्रश्च नीचो द्रुतविलम्बितौ[2] ।
पाठ्यस्यैते ह्यलङ्कारा लक्षणं च निबोधत ॥ ११२ ॥

उच्चो नाम शिरःस्थानगतस्तारस्वरः[3] । स च दूरस्थाभाषण-विस्मयोत्तरोत्तरसंजल्पदूराह्वानत्रासनाबाधाद्येषु[4] ।

अलं पर्याप्तं काकोः स्वरूपं येन संपाद्यते सोऽलङ्कारः । तत्स्वरूपं च स्थान-त्रयस्य प्रत्येकमूर्ध्वाधोमध्यकल्पनया उदात्तानुदात्तस्वरितकम्पितनिर्वाहात् । तत्र मध्यो भागस्तावदनावेशे सर्वत्र स्थित एव । इत्यावेशेनोर्ध्वमधरं वा स्थानत्रयस्य प्रत्येकमवलम्ब्यत इति षडलङ्कारा भवन्ति ॥ ११२ ॥

## ५. अलङ्कार

अनुवाद—अब छः अलङ्कारों के नाम कहते हैं—

उच्च, दीप्त, मन्द्र, नीच, द्रुत और विलम्बित ये छः पाठ्य के अलङ्कार हैं । अब इनके लक्षणों को समझिये ॥ ११३ ॥

अभिनव—जो पर्याप्त रूप में काकु के स्वरूप का सम्पादन करता है, वह अलङ्कार है । उन तीनों स्थानों में प्रत्येक की ऊर्ध्व, अधः एवं मध्य की कल्पना के द्वारा उदात्त, अनुदात्त, स्वरित और कम्पित स्वरों के निर्वाह से उसका स्वरूप निष्पन्न होता है । उनमें मध्य भाग आवेश के अभाव में सभी स्थानों में विद्यमान है । किन्तु आवेश के द्वारा ऊर्ध्व भाग अथवा अधो भाग तीनों स्थानों में प्रत्येक का अवलम्बन करने से छः अलङ्कार बनते हैं ॥ ११३ ॥

### १. उच्च

अनुवाद—शिरः स्थानगत तारस्वर उच्च कहलाता है । वह दूरस्थ पुरुषों से सम्भाषण, विस्मय, उत्तर-प्रत्युत्तर के संजल्प, दूर से आह्वान, त्रासन तथा बाधा आदि में उसका उपयोग किया जाता है ।

१. क. (ट०) अथालङ्काराः । ख. अथ षडलंकारा ।
२. क. (टि०) नीचद्रुतविलम्बिताः ।
३. ग. तारः स्वरः ।
४. क. भ. बाधाक्रुष्टकलहाभिवादेषु भावेषु ।

दीप्तो नाम शिरःस्थानगतस्तारतरः, स [1]चाक्षेपकलहविवादामर्ष[2]-क्रुष्टाकर्षणक्रोधशौर्यदर्पतीक्ष्णरूक्षाभिधाननिर्भर्त्सनाक्रन्दितादिषु[3] ।

मन्द्रो नाम [4]उरःस्थानगतो निर्वेदग्लानि[5]चिन्तौत्सुक्यदैन्य-व्याधिक्रीडागाढशस्त्रक्षतमूर्छामदगुह्यार्थवचनादिषु ।

नीचो नाम उरःस्थानगतो[6] मन्द्रतरः, स च स्वभावा-भाषण[7]व्याधिश्रमश्रमार्तत्रस्तपतितमूर्छितादिषु ।

द्रुतो नाम [8]कण्ठगतः स च त्वरितः, [9]लल्लनमन्मनभयशीत ज्वरत्रासायस्तात्ययिककार्यावेदनादिषु ।

२. दीप्त

अनुवाद—दीप्त स्वर शिरःस्थानगत तारतर अर्थात् अधिक तार होता है, इसका उपयोग आक्षेप, कलह, विवाद, अमर्ष, क्रुष्ट, आकर्षण, क्रोध, शौर्य, दर्प तीक्ष्ण, रुक्ष, अभिधान, निर्भर्त्सन तथा आक्रन्दन आदि में होता है ।

३. मन्द्र

अनुवाद—मन्द्र स्वर उरः स्थान से उत्पन्न होता है इसका उपयोग निर्वेद, ग्लानि, चिन्ता, औत्सुक्य, दैन्य, व्याधि, क्रीड़ा, गाढ़ शस्त्रक्षत, मूर्च्छा, मद, एवं गुह्यार्थ कथन में होता है ।

४. नीच

अनुवाद—नीच स्वर उरःस्थान गत मन्द्रतर होता है। इसकी योजना स्वाभाविक भाषण, व्याधि, श्रम, श्रमार्त, त्रस्त, पतित, मूर्च्छित आदि में की जाती है ।

५. द्रुत

अनुवाद—द्रुत नामक स्वर कण्ठस्थानगत त्वरित उच्चारित किया जाता है, इसका उपयोग बच्चों को लाड़-प्यार करने में, मनाने में, भय, शीत, ज्वर, त्रास, आयस्त, अत्ययिक कार्य तथा आवेदन आदि में किया जाता है ।

---

१. क-न. चाक्षेपवादविवाद । २. मर्षोत्कुष्टा । ३. ख. निर्भत्सनादिषु ।
४. क. (टि०) उरसि मन्द्रस्वरः । ५. ख. ग. शङ्काचिन्ता । ६. क. उरःस्थानस्थो ।
७. ख. ग. व्याधितपथिश्रान्तस्तपति ।
८. क. (टि०) कण्ठगतः । मण्डगतस्वरितोच्चगतस्वरकृतिः ।
स च स्खलितवल्गनमदवशीतज्वरार्त्तत्रस्तायस्तान्यैक कार्या वेदनादिषु ।
९. क. (टि०) स्खलितवेल्लनमदवाभयः । स्खलितलज्जितोत्खातमन्मनः ।

विलम्बितो नाम [1]कण्ठस्थानगतस्तनुमन्द्रः, स च [2]शृङ्गार-करुणवितर्कितविचाराम[3]र्षासूयिताव्यक्तार्थप्रवादलज्जाचिन्तातर्जन[4]विस्मयदोषानुकीर्तनदीर्घरोग[5]निपीडनादिषु ॥ ११४ ॥

---

तत्र शिरस्यधोभागे तार उच्यते दूरस्थाभाषणादौ, स विषयोऽत्र स्वरकाकोरित्युक्तम्। विस्मयावगतौ तु सैव रसकाकुः, परस्य त्रासनाभिप्रायेण तु सैव विभावकाकुः।

स्वरकाकोरेव श्रुतिकाकुश्चेति भेदेन शिरस्येव ऊर्ध्वस्तारतम आक्षेपादौ, तारशब्दः प्रकर्षोपलक्षणम्। अत्र ह्याक्षेपादौ यथावस्थं श्रुतिविभावरसकाकुभेदत्रयं विभजनीयम्।

---

## ६. विलम्बित

अनुवाद - विलम्बित स्वर कण्ठ स्थानगत क्षीण मन्द्र होता है। शृङ्गार, करुण, वितर्क, विचार, आमर्ष, असूया, अव्यक्तार्थ प्रवाद, लज्जा, चिन्ता, तर्जन, विस्मय, दोष-कथन, लम्बी बीमारी, निपीड़न आदि में इसकी योजना की जाती है ॥ ११४ ॥

अभिनव—उनमें शिर के अधोभाग में दूरस्थ व्यक्ति के साथ आभाषण में 'तार' स्वर कहा जाता है। वह स्वर काकु का विषय है, यह कहा जा चुका है। विस्मय का ज्ञान होने पर वही रस काकु है और दूसरों के त्रासन करने के अभिनय में वही विभाव काकु है।

स्वर काकु से ही श्रुतिकाकु होता है जो उससे भिन्न होने से आक्षेप आदि में ऊर्ध्व अर्थात् तारतम होता है जिसका स्थान शिरस् है। यहाँ तार शब्द प्रकर्ष का उपलक्षण है। यहाँ आक्षेप आदि में अवस्थाओं के अनुसार श्रुति, विभाव एवं रस के भेद से तीन रूप में काकुओं का विभाग करना चाहिए।

---

१. ख. कण्ठस्थानगतः मन्द्रः। ग. कण्ठस्थानस्थो।
२. ख. शृङ्गारवितर्कितः। ग. शृङ्गार वितर्क।
३. क. (टि०) मर्षाश्वसित।
४. क. (डि०) विस्मित।
५. क. (डि०) दोर्घरोष।

उरस्यूर्ध्वभागे स मन्द्रः, उरस्येव नीचभागे मन्द्रतमो नीचः। दैन्ये काकुर्द्विरूपतामेति—स्वचित्तवृत्त्यर्पणाद्रसकाकुः, परस्य रूपोत्पादनाद्विभाव-काकुः। उभयस्यापि तत्र प्राधान्येनादरणात्, अन्यत्र तूभयस्यानादरणात्प्रधानांशेनैव व्यपदेशः। स्वभावाभाषणं यत्र कश्चिदावृत्तकण्ठस्वर एव वक्ता भवति, त्रासेन पतितः त्रस्तपतितः त्रासावसरे तु दीप्तैव काकुर्भवति। कण्ठगत इति कण्ठस्थाने उर्ध्वभागे निष्पन्नः तेन स्थानभेद एवालङ्कारत्वे प्रयोजकः। अत एव त्वरित इत्यनेन पुनर्लयविधानम्।

लल्लं सविलासं, लडं विलासं लातीति क्विबन्ते कर्मण्युपपदे लडयोरैक्यमिति। मम्मनमव्यक्तं अहमेव मनो मन्ता यत्रेति, अनेनाश्रूयमाणानुनासिकोपलक्षितमित्यपरे। "लल्लमन्मनौ नायिकागतौ बालविनोदनसान्त्वनादौ, मुग्धेत्येवं प्रायपराभि-योगानङ्गीकरणादौ च" इत्युपाध्यायाः। मन्द्रापि काकुश्चात्र भवतीति संग्रहश्लोके वक्ष्यते।

---

जो उरस् के ऊर्ध्व भाग में है वह मन्द्र स्वर है और जो उसी उरस् के अधोभाग में है। वह अत्यन्त मन्द्र (मन्द्रतम) नीच स्वर है। दैन्यावस्था में वही काकु दो रूपों को प्राप्त करती है—अपनी चित्तवृत्ति के अर्पण करने से रसकाकु तथा दूसरे के रूप में उत्पादन करने पर विभाव काकु होती है। प्रधान रूप से यहाँ दोनों का आदर अन्यत्र (अन्य स्थानों पर) इन दोनों का आदर न किये जाने से प्रधान के अंश से व्यपदेश होता है। जहाँ पर आवृत्त कण्ठ स्वर वाला (संवृत स्वर से युक्त कण्ठ वाला) वक्ता होता है वहाँ स्वाभाविक आभाषण होता है। 'त्रस्तपतित' का अर्थ है भय से गिरा हुआ। त्रास के समय दीप्त काकु होती है। कण्ठगत का अभिप्राय है कण्ठभाग में ऊर्ध्व स्थान में निष्पन्न। इस सिद्ध है कि स्थान भेद ही अलङ्कारता का प्रयोजक है। अत एव 'त्वरित' इस पद के द्वारा पुनः 'लय' का विधान है।

लल्ल का अर्थ विलास से युक्त है। 'लड़ विलासं लाति' इस अर्थ में क्विबन्त कर्म के उपपद होने पर लल्ल शब्द बनता है। ल और ड का ऐक्य है। 'मन्मन' का अर्थ अव्यक्त है, मैं ही जहाँ मानता हूँ। कुछ लोग कहते हैं कि यह अश्रूयमाण से उपलक्षित है। हमारे उपाध्याय जो कहते हैं कि "लल्ल और मन्मन शब्द नायिका गत बालकों के मनोविनोद एवं सान्त्वना देने आदि के उपयोगी हैं। यहाँ काकु मन्द्रा भी होती है। यह संग्रह श्लोक में कहेंगे।

[1]अत्रानुवंश्या श्लोका भवन्ति—

[2]उत्तरोत्तरसंजल्पपरुषाक्षेपणेषु च ।
तीक्ष्णरुक्षाभिनये आवेगे[3] क्रन्दिते तथा ॥ ११५ ॥
[4]परोक्षस्य समाह्वाने तर्जने त्रासने तथा ।
दूरस्थानभाषणे चैव तथा निर्भर्त्सनेषु च ॥ ११६ ॥
[5]भावेष्वेतेषु नित्यं हि नानारससमाश्रया[6] ।
उच्चा दीप्ता द्रुता चैव काकुः कार्या प्रयोक्तृभिः ॥ ११७ ॥

---

आयस्तमावेगः । आत्ययिकं शीघ्रसंपाद्यं यत्कार्यम् । कण्ठस्थाने तु नीचभागे निष्पन्नो विलम्बितः । मन्द्रत्वमविवक्षितमेव । अव्यक्तार्थः प्रवादः—अन्तरङ्गत्त इति लोके प्रसिद्धो यत्र । परे बुध्यतां वा न बुध्यतां वेति वक्तुरभिप्रायो भवति यन्न स्वगतं न परगतमत्रेति ॥ ११४ ॥

---

आयस्त का अर्थ आवेग है और आत्ययिक का अर्थ शीघ्र सम्पाद्य कार्य है। कण्ठ स्थान में नीच भाग में निष्पन्न विलम्बित स्वर है। यहाँ मन्द्रत्व अविवक्षित है। अव्यक्त का अर्थ 'मन्मन' प्रवाद है। यह अन्तरङ्ग है, यह लोक में प्रसिद्ध है। दूसरे लोग समझें अथवा न समझें, वक्ता का अभिप्राय यहाँ न स्वगत है न परगत ॥ ११४ ॥

इस विषय में कुछ आनुवंश्य श्लोक है—

अनुवाद—उत्तरोत्तर कथोपकथन में, परुष अर्थात् कठोर वचनों के आरोप-प्रत्यारोप में, रूखे एवं तीखे ( तीक्ष्ण ) विषयों के अभिनय में, आवेग में, क्रन्दन में, परोक्ष व्यक्ति के बुलाने में, तर्जन, में त्रासन ( डराने ) में, दूरस्थ व्यक्ति के साथ संभाषण में इन भावों को प्रकट करने के लिए नाट्य-प्रयोक्ताओं के नाना रसों के आश्रित उच्च, दीप्त एवं द्रुत काकु का प्रयोग करना चाहिए ॥ ११५-११७ ॥

---

१. क-भ. अत्र श्लोकाः ।
२. ख. ग. उत्तरोत्तरसंजल्पे परुषाक्षेपणे तथा ।
३. क-भ. तथाक्रन्दे च नित्यशः । क-न शीते चाक्रन्दिते तथा ।
४. क-भ. परोक्षह्वयने चैव तर्जनत्रासनेषु च ।
५. क-भ. एषु नानारसोपेता नित्यमर्थप्रदर्शिका ।
६. ख. समाश्रयात् ।

व्याधिते च ज्वरार्ते च भयार्ते शीतविप्लुते[1] ।
नियमस्थे वितर्के च गाढ़शस्त्रक्षतेषु च ॥ ११८ ॥

[2]गुह्यार्थवचने चैव चिन्तायां तपसि स्थिते ।
[3]मन्द्रा नीचा च कर्तव्या काकुर्नाट्यप्रयोक्तृभिः ॥ ११९ ॥

[4]लल्ले च मम्मने चैव भयार्ते शीतविप्लुते ।
मन्द्रा द्रुता च कर्तव्या काकुर्नाट्यप्रयोक्तृभिः ॥ १२० ॥

[5]दृष्टनष्टानुसरणे इष्टानिष्टश्रुते तथा ।
[6]इष्टार्थख्यापने चैव [7]चिन्ताध्याने तथैव च ॥ १२१ ॥

उन्मादेऽसूयिते चैव उपालम्भे तथैव हि ।
[8]अव्यक्तार्थप्रवादे च कथायोगे तथैव च ॥ १२२ ॥

---

अनुवाद—व्याधि से युक्त, ज्वर से पीड़ित, भयार्त्त, शीत से त्रस्त, नियमस्थ वितर्क, शस्त्र के द्वारा किये गये गाढ़ ( गहरा ) क्षत ( घाव ), गुह्यार्थ-कथन, चिन्ता, एवं तपस्या की स्थिति में नाट्य-प्रयोक्ताओं को मन्द्रा एवं नीच काकु का प्रयोग करना चाहिए ॥ ११८-११९॥

अनुवाद—लल्ल अर्थात् बाल-विनोद में, मनाने, भयार्त्त तथा शीत से पीड़ित दशा में नाट्य-प्रयोक्ताओं को मन्द्रा एवं द्रुता काकु का प्रयोग करना चाहिए ॥ १२० ॥

---

१. ख. चित्तविप्लुते ।
२. क. (टि०) गूढार्थवचने ।
३. क. मन्द्रा । ख. विलम्बिता चैव ।
४. क. (टि०) मल्लि च मवने ।
५. ख. ग. दृष्टनष्टानुसारेण इष्टानिष्टश्रुतौ तथा ।
६. क. (च) दृष्टार्थं ।
७. ख. चिन्तयाने । ग. चिन्ताग्रस्ते ।
८. ख. ग. अव्यक्तार्थे प्रदाने च । तथा लोके ।

उत्तरोत्तरसंजल्पे कार्येऽतिशयसंयुते ।
[1]विकृते व्याधिते क्रोधे दुःखे [2]शोके तथैव च ॥ १२३ ॥

[3]विस्मयामर्षयोश्चैव [4]प्रहर्षे परिदेविते ।
विलम्बिता च दीप्ता च काकुर्मन्द्रा[5] च वै भवेत् ॥ १२४ ॥

[6]लघ्वक्षरप्रायकृते गुर्वक्षरकृते तथा ।
उच्चा दीप्ता च कर्तव्या काकुस्तत्र प्रयोक्तृभिः ॥ १२५ ॥

यानि सौम्यार्थयुक्तानि [7]सुखभावकृतानि च ।
मन्द्रा विलम्बिता चैव तत्र काकुर्विधीयते ॥ १२६ ॥

---

अलङ्कारेषूच्चा दीप्ता द्रुता चेति यथायोगं स्थानत्रयमत्र स्वीकृतमित्यर्थः ॥ १२५ ॥

---

अनुवाद—दृष्ट-नष्ट के अनुसरण में, इष्ट और अनिष्ट के श्रवण में, इष्ट वस्तु के स्थापन में, चिन्ता पूर्वक ध्यान में, उन्माद और असूया में, उपालम्भ में अव्यक्त अर्थ के प्रवाद में, कथा के योग में, उत्तरोत्तर सम्भाषण में, अतिशय युक्त कार्य में, विकृत एवं व्याधिग्रस्त अवस्था में, क्रोध, दुःख एवं शोक में, विस्मय और आमर्ष में, प्रहर्ष में, तथा परिदेवन में विलम्बिता, दीप्ता और मन्द्रा काकु का प्रयोग करना चाहिए ॥ १२१-१२४ ॥

अनुवाद—जहाँ प्रायः लघु अक्षर और गुरु अक्षर हों, वहाँ नाट्य-प्रयोक्ताओं को उच्च और दीप्त काकु का प्रयोग करना चाहिये ॥ १२५ ॥

अभिनव—अलङ्कारों में उच्चा, दीप्ता और द्रुता काकु होती है, जिसके लिए योग्यतानुसार तीनों स्थानों को स्वीकृत किया गया है ॥ १२५ ॥

अनुवाद—जो सौम्य अर्थ से युक्त तथा सुखकृत भावों के हेतु एवं कार्य है, वहाँ मन्द्रा और विलम्बिता काकु होती है ॥ १२६ ॥

---

१. ख. ग. विक्षते व्याधिते त्वङ्गे ।
२. ख. ग. दुःखशोके तथैव च ।
३. क-भ. अमर्षे विस्मये चैव ।
४. ख. ग. हर्षे च ।  ५. ख. मन्द्रा ।
६. अयं श्लोको ख. ग. पुस्तकयोर्नास्ति ।
७. ख. सुखभावकृतानि च । क-भ. सुखनादकृतानि वै ।

यानि स्युस्तीक्ष्णरूक्षाणि दीप्ता [1]चोच्चा च तेष्वपि ।
एवं नानाश्रयोपेतं पाठ्यं योज्यं प्रयोक्तृभिः ॥ १२७ ॥
हास्यश्रृङ्गारकरुणेष्विष्टा काकुर्विलम्बिता ।
वीररौद्राद्‌भुतेषूच्चा दीप्ता वापि[2] प्रशस्यते ॥ १२८ ॥
भयानके सबीभत्से द्रुता नीचा च कीर्तिता ।
एवं भावरसोपेता काकुः[3] कार्या प्रयोक्तृभिः ॥ १२९ ॥

---

अथ सर्वसंग्रहार्थमाह—यानि सौम्यार्थयुक्तानीति । सोम इव ह्लादकः सौम्यः, शाखादित्वाद्यः । सुखस्य हेतवः कार्यश्चेति सुखभावकृतशब्देन सुखस्य भावैः हेतुभिः कृतो जन्यः । स येषु तानीति समासभेदात्संगृहीतम् ॥ १२६ ॥

नानाश्रयोपेतमिति नानास्थाननिविष्टं कृत्वेत्यर्थः, स्थानभेदः काकूनां पर्याप्तताकारीत्युक्तम् ॥ १२८-१२९ ॥

---

अभिनव—सर्व संग्रह के लिए कहते हैं कि जो सौम्य अर्थ से युक्त है । यहाँ 'सौम्य' का अर्थ सोम को तरह आह्लादक है, यहाँ 'शाखादिभ्यो यत्' से यत् प्रत्यय हो गया है । यहाँ सुख के हेतु और कार्य दोनों का सुखभावकृत शब्द से समास भेद से संग्रह हो गया है ॥ १२६ ॥

अनुवाद—जो तीक्ष्ण एवं रुक्ष भाव है, वहाँ उच्च एवं दीप्त काकु का विधान होता है । इस प्रकार नाट्य-प्रयोक्ताओं को नाना आशयों से युक्त पाठ्य की योजना करनी चाहिये ॥ १२७ ॥

अभिनव—'नानाश्रयोपेतम्' अर्थात् नाना आश्रयों से युक्त का नाना स्थानों में निवेश करके पाठ्य का विधान करना चाहिए । आश्रयों या स्थानों का भेद काकुओं को पर्याप्त कर देने में कारण है ॥ १२७ ॥

अनुवाद—श्रृङ्गार, हास्य और करुण रसों में विलम्बिता काकु इष्ट है । वीर, रौद्र और अद्‌भुत रसों में उच्चा और दीप्ता काकु प्रशस्त है । वीभत्स के साथ भयानक रस में नीच और द्रुत काकु स्वर कहा गया है । इस प्रकार नाट्य प्रयोक्ताओं को नाना भाव एवं रसों से युक्त काकु का प्रयोग करना चाहिये ॥ १२८-१२९ ॥

---

१. क (टि०) दीप्तमुच्चं च । दीप्तमुच्चैश्च ।
२. क. (टि०) चापि चैव । ३. ख. काकुर्योज्या ।

[1]अथाङ्गानि षट्—विच्छेदोऽर्पणविसर्गोऽनुबन्धो दीपनं [2]प्रशमनमिति। तत्र विच्छेदो नाम विरामकृतः। अर्पणं नाम [3]लीलायमानमधुरवल्गुना स्वरेण पूरयतेव [4]रङ्गं यत्पठ्यते तदर्पणम्। विसर्गो नाम वाक्यन्यासः[5]। अनुबन्धो नाम [6]पदान्तरेष्वपि विच्छेदः, अनुच्छ्वसनं वा। दीपनं नाम त्रिस्थानशोभि वर्धमानस्वरं चेति। प्रशमनं नाम तारगतानां [7]स्वराणां प्रशाम्यतामवैस्वर्येणावतारणमिति[8]।

अतः काकोरेव प्राधान्यात्तामेवोपसंहरति। अथाङ्गानीत्यादिना।

अतः काकु को ही प्रधानता होने के कारण अब उसका उपसंहार करते हैं—

## ६. अङ्ग

अनुवाद—अङ्ग छः होते हैं—विच्छेद, अर्पण, विसर्ग, अनुबन्ध, दीपन और प्रशमन। इनमें विच्छेद विराम के लिये होने वाला अङ्ग है। लीला से पूर्ण मधुर एवं मनोहर स्वरों से रङ्गभूमि को पूरण करते हुये जो पाठ किया जाता है वह 'अर्पण' है। वाक्य का विन्यास 'विसर्ग' है। पदान्तर अर्थात् पदों के मध्य में विच्छेद अथवा उच्छ्वसन न होना 'अनुबन्ध' है। तीनों स्थानों में शोभायमान वर्धमान स्वर 'दीपन' कहलाता है। तारगत अर्थात् तार में उच्च ध्वनि में पहुँचकर प्रशान्त अवस्था में आये हुये स्वरों का बिना विस्तर के उतार देना 'प्रशमन' है।

१. क-न. अथ षडङ्गानि। ख. अथाङ्गानि।
२. ख. प्रशमनमिति षड्गानि।
३. ख. ख. लीलावर्णस्वरेणापूरयादिव।
क-न. लीलायमानमधुरवर्णस्वरेणापूरयदिव।
क. (टि०) लीलायमासानुवर्णेन स्वरेण।
४. क. (टि०) रसं।
५. क-न. वाक्यस्योपन्यासः। क. (टि०) वाक्योपन्यासः।
६. ख. पादान्तरेष्वविच्छेदानुच्छासनं वा।
क-भ. पदस्य विच्छेदमन्तरेणानुच्छासनं।
७. क. (टि०) स्वराणामेकस्वर्येण।
८. ख. स्वरेणावतरणमिति।

प्रस्तावान्तरं दर्शयति—तत्र वर्णोच्चारणे वर्णध्वनिशून्यो यः कालस्तदाश्रयोऽङ्गव्यवहार इति वृद्धाः, स हि षोढा कालः "ततश्च भूयान् पुनरादिमध्यौ" भूयान् पुनरित्ययं हि विच्छेदः। आदौ मध्यः स्वल्पो मध्यान्ते चार्पणं वाक्ये पूर्वं भूयान्मध्ये द्रुतश्च विपरीतको यः स विसर्गः। बहुषु द्रुतोऽथ मध्यो मनाग् द्रुतोऽन्तेऽनुबन्धः स्यात्। त्रिस्थाने द्रुतमध्यविलम्बितयुग्दोपनं सदारोहि विपरीतं प्रशमनं स्यात्, लयत्रयं चैकरूपनिर्वाहादिति संग्रहकारः।

एतन्मतेनैव लक्षणानि व्याचक्षते। एतच्चासत्। द्रुतमध्याविलयैरेवास्यार्थस्य न तत्त्वान्न च लयव्यवहारसाम्ये कालस्येति नियमकारणमस्ति। किं च लयवैषम्यस्य वाक्यचैतन्यापेक्षया च भागत्रयकल्पनयैव भेदा उक्ताः, भुजङ्गविजृम्भितादिवाक्येऽनन्तभागसंभावनात्। भागत्रये च द्रुतमध्यविलम्बितानां द्विभेदत्रिभेदत्वानन्त्ये षट्संख्यानियमविप्लवः। "क्वाकार्यं" इति हि श्लोकप्रथमखण्डेषु मध्यमलयो भूयोऽपि

अभिनव—अब दूसरे प्रस्ताव को दिखाते हैं कि वहाँ वर्णों के उच्चारण में वर्ण ध्वनि से शून्य जो काल में उसका आश्रय अङ्ग है, ऐसा वृद्धों का व्यवहार है, वह काल छः प्रकार का होता है। "ततश्च भूयान् पुनरादिमध्यौ" यहाँ 'भूयान् पुनः' यह विच्छेद है। आदि में वर्ण मध्य है और मध्य के बाद अन्त में पुनः उनका अर्पण है, वाक्य में पहले 'भूयान्' वर्ण है, मध्य में द्रुत है, और जो विपरीत है वह 'विसर्ग' है। जहाँ बहुतों में पहिले द्रुत है, बीच में मनाक् द्रुत है। वहाँ अन्त में अनुबन्ध होना चाहिए। तोनों स्थानों में द्रुत, मध्य और विलम्बित से युक्त दीपन अर्थात् सदा आरोही स्वर होनी चाहिए और इसके विपरीत प्रशमन होना चाहिए। इस प्रकार तीनों लयों का युगपत् निर्वाह होना चाहिए। यह संग्रहकार का कथन है।

इस पर आचार्य कहते हैं कि यह ठोक नहीं है, क्योंकि द्रुत, मध्य आदि लयों से हो इस अर्थ का न तत्त्व से और न लय एवं व्यवहार के साम्य होने पर काल का अङ्गत्वेन व्यवहार होता है, इस प्रकार नियम में कारण है। और भो लय वैषम्य के वाक्य-चैतन्य की अपेक्षा से, न कि भागत्रय को कल्पना से भेद कहे गये है। क्योंकि भुजङ्गविजृम्भितादि वाक्यों में अनन्त भाग हो सकते हैं। उक्त भागत्रय मानने पर द्रुत, मध्य, विलम्बित में प्रत्येक के कभी दो भेद और कभी तीन भेद होने से अनन्त भेद हो जाने से छः संख्या के नियम में विप्लव हो जायेगा। "क्वाकार्यं शशलक्ष्मणः" इस श्लोक के प्रथम खण्ड में मध्य लय अधिक दिखाई देता

एषां च रसगतः प्रयोगः—तत्र हास्यशृङ्गारयोराकांक्षायामर्पणविच्छेददीपनप्रशमनयुक्तं [1]पाठ्यं कार्यम्। दीपनप्रशमनयुक्तं करुणे। [2]विच्छेदप्रशमनदीपनानुबन्धबहुलं वीररौद्राद्भुतेषु, [3]विसर्गविच्छेदयुक्तं बीभत्सभयानकयोरिति।

---

दृश्यते। सेत्यादिषु पाश्चात्यखण्डेषु तत्स्मरणजनितसुखविश्रान्तिदायिषु विलम्बित इति द्विलयभेदः प्रयोगः। भागत्रयकलनायामपि साम्येन वैषम्येण चानन्तप्रकारता भवतीति कथं स्यात्। कस्मादेतत्सर्वं लयाभिधानेनैव संगृहीतम्। तस्मात्सूत्रस्थानीयपदरत्नानां पाठकाले त्वादावुक्ततद्धर्मषट्कमङ्गषट्कमुच्यते। तथा च मध्ये त्रुटितत्वमत्रुटितत्वं वा तावन्तौ विच्छेदानुबन्धौ वा, पीवरत्वमपीवरत्वं वा, इमावर्पणविसर्गौ वा, आरोहणमवरोहणं वा, एते दीपनप्रशमने। एवं भावाभावतः, उपचयोपचयतः, आरोहावरोहतश्च षड्भेदो नादः। वाक्यस्य न्यासं त्यजनमनादरणं तन्नादस्येति यावत्। वैस्वर्यं स्वरत्वेन विहितेषु अन्तरालश्रुतिविशेषेषु ध्वनिविसंवादनाद्भवतीति सर्वत्राभ्यूह्यम्।

---

है, और 'सा बाला वयमप्रगल्भमनसः' इस पाश्चात्य खण्ड में 'उसके स्मरण से उत्पन्न सुख में विश्रान्तिदायी' अंश में विलम्बित लय है। इस प्रकार विलय भेद है। भागत्रय को साम्य और वैषम्य के द्वारा आकलन करने पर अनन्त भेद हो जायेंगे यह कैसे होगा? क्यों नहीं इन सबका लय के कथन से ही संग्रह हो गया। इसलिए सूत्रस्थानीय पद रत्नों के पाठ-काल में आदि में कथित धर्म षट्क को अङ्गषट्क कहा जाता है। तथा मध्य में त्रुटितत्व या अत्रुटितत्व है, उतने ही जो विच्छेद और अनुबन्ध हैं, अथवा पीवरत्व और अपीवरत्व है। अथवा अर्पण एवं विसर्ग है अथवा आरोहण और अवरोहण है। वे सब दीपन और प्रशमन है। इस प्रकार भाव-अभाव, उपचय-अपचय, आरोहावरोह के कारण नाद छः प्रकार के होते हैं। वस्तुतः वाक्य का जो न्यास, त्यजन एवं अनादरण है वह नाद का ही न्यास, त्यजन और अनादरण है। स्वर के रूप में विहित अन्तराल विशिष्ट श्रुतियों में जो वैस्वर्य है वह ध्वनिगत विसम्बाद से होता है। यह सर्वत्र समझने चाहिए।

---

१. ख. वाक्यं।

२. ख. ग. करुणवीराद्भुतेषु समाकाङ्क्षाविच्छेदप्रशमनार्पणदीपनानुबन्धनबहुलं पाठ्यं प्रयोज्यम्। क-न. वीररौद्राद्भुतेषु सत्त्वाकांक्षयाविच्छेदोच्छेदन।

३. ख. ग. बीभत्सभयानकयोर्विसर्गविच्छेदाकांक्षणप्रायमिति।

सर्वेषामप्येषां [1]मन्द्रमध्यतारकृतः । प्रयोगस्त्रिस्थानगतः । तत्र दूरस्थाभाषणे तारं शिरसा, नातिदूरे मध्यं कण्ठेन, पार्श्वतो मन्द्रमुरसा प्रयोजयेत्पाठ्यमिति [2]मन्द्रात्तारं न गच्छेत्, ताराद्वा मन्द्रमिति ॥ १३० ॥

---

हास्यादयः शब्दास्तद्व्यभिचारिणोऽपि स्वीकुर्वते । ततश्च तद्व्यभिचारिणोऽन्यरसान्, रसान्तरेऽपि तदा व्यभिचार्याश्रये वा काकुरिति मन्तव्यम् ।

सर्वेषामित्यादिनाङ्गानां मूलभूतं स्थानभेदं स्मारयति । तत्र दूरस्थ इत्यादिना विनियोगवाक्यानां लक्ष्ये एकवाक्यतां सूचयति ।

---

अनुवाद—इसका रसगत प्रयोग होता है—उनमें शृङ्गार और हास्य रस में आकाङ्क्षा में अर्पण विच्छेद, दीपन, एवं प्रशमन से पाठ्य करना चाहिये । करुण रस में दीपन एवं प्रशमन से युक्त तथा वीर, रौद्र और अद्भुत रसों में विच्छेद प्रशमन, दीपन और अनुबन्ध बहुल पाठ्य करना चाहिये । बीभत्स और भयानक रस में विसर्ग और विच्छेद युक्त पाठ्य होना चाहिये ।

अभिनव—हास्यादि शब्दों से रस और उनके व्यभिचारी भावों का ग्रहण होता है उससे भी उनके व्यभिचारी भावों तथा अन्य रसों को तथा रसान्तर में भी अथवा व्यभिचारिभावों के आश्रय में काकु होता है, ऐसा मानना चाहिये ।

अनुवाद—इन सभी अङ्गों का मन्द्र, मध्य और तार इन तीन स्थानों में प्रयोग होता है । उनमें किसी दूरस्थ व्यक्ति के साथ आभाषण में शिर से उद्भूत तार स्वर का, अत्यन्त दूर न होने पर कण्ठ से उद्भूत मध्य स्वर का और पार्श्व अर्थात् बगल के व्यक्ति के साथ उरस् से उद्भूत मन्द्र स्वर से पाठ्य करना चाहिये । मन्द्र से तार स्वर अथवा तार से मन्द्र स्वर पर नहीं जाना चाहिये ॥ १३० ॥

अभिनव—'सर्वेषाम्' इत्यादि के द्वारा अङ्गों के मूलभूत स्थान भेद को दिखाते हैं । 'तत्र दूरस्थ' इत्यादि के द्वारा विनियोग वाक्यों के लक्ष्य में एकरूपता की सूचना देते हैं ।

---

१. ख. ग. मन्द्रमध्यतारव्यवस्थायामित्यानगतः प्रयोगः ।
२. ख. मन्द्रात्तारं गच्छेत्ताराद्वा मन्द्रमिति । ग. मन्द्रात्तारं गच्छेद् ।

एषां च द्रुतमध्यविलम्बितास्त्रयो लया [1]रसेषूपपाद्याः। तत्र हास्यश्रृङ्गारयोर्मध्यलयः, [2]करुणे विलम्बितो, वीररौद्राद्भुतबीभत्सभयानकेषु द्रुत इति।

---

तथा हि श्रृङ्गारे यदुदात्तस्वरितमुक्तमर्पणविच्छेदाद्यङ्गजातं विलम्बितं चालङ्कारः तद् दूरस्थाभाषणे कर्त्तव्ये शिरस्थाने षड्पञ्चमयोरन्यतरस्थायिस्वराश्रयेणांशस्वरविभावचतुश्चतुष्कसम्मिश्रं कर्तव्यमित्येवं तात्पर्येणेवं व्याख्येयम्। अन्यथाभाषणं दूरस्थे शिरसेत्यादिना पौनरुक्त्यं स्यात्। अथ दीपनप्रशमनयोर्वक्तव्यशेषमाह—मन्द्रात्तारं न गच्छेदित्यादि। मन्द्रतरात्तारं तारतमान्मन्द्रं चेत्यर्थः।

उद्देशग्रन्थ एव केचिल्लया विरामाश्चेत्यभिधीयन्ते।

---

अभिनव—श्रृङ्गार रस में जो उदात्त और स्वरित को अर्पण एवं विच्छेद आदि अङ्गों को तथा विलम्बित को अलङ्कार कहा गया है, वह दूरस्थ पुरुष के साथ आभाषण में कर्त्तव्य हैं। शिरःस्थान में षड्ज और पञ्चम में से किसी एक के स्थायी स्वर के आश्रय के द्वारा अंश स्वर के विभाग से चार-चार को मिलाकर करना चाहिए। इस प्रकार के तात्पर्य में इसकी व्याख्या करनी चाहिए। अन्यथा तो दूरस्थ व्यक्ति के साथ आभाषण शिर से करना चाहिए, इत्यादि सभी कथन पुनरुक्त हो जायेंगे। अब दीपन और प्रशमन के विषय में अवशिष्ट वक्तव्य को कहते हैं कि—मन्द्र से तार पर नहीं जाना चाहिए इत्यादि। इसी प्रकार मन्द्रतर से तार को और तारतर से मन्द्र को भी नहीं करना चाहिए ॥ १३० ॥

अनुवाद—इनमें द्रुत, मध्य और विलम्बित इन तीनों लयों का रसों में उपयोग करना चाहिए। उसमें श्रृङ्गार और हास्य रस में मध्य लय, करुण रस में विलम्बित लय तथा वीर, रौद्र, अद्भुत, बीभत्स और भयानक रसों में द्रुत लय का प्रयोग करना चाहिए ॥ १३१ ॥

अभिनव—कुछ लोग उद्देश ग्रन्थ से ही लय और विरामों को कहते हैं।

---

१. क-भ. रसेषूपयोज्याः।

२. क-भ. वीभत्सकरुणयोर्विलम्बितः।

अथ विरामः अर्थसमाप्तौ कार्यवशान्न छन्दोवशात् । कस्मात्, [1]दृश्यन्ते ह्येकद्वित्रिचतुरक्षरा विरामाः । यथा—

किं ! गच्छ, मा विश सुदुर्जन ! वारितोऽसि
कार्यं त्वया न मम सर्वजनोपयुक्तं ।
[2]सूचासु चाङ्कुरगते च तथोपचारे-
ष्वल्पाक्षराणि हि पदानि भवन्ति काव्ये[3] ॥ १३२ ॥

---

अन्ये त्वाहुः—कालस्य सर्वस्यापरिभाव्यत्वान्नोद्देशेन प्रयोजनं मतिमन्तस्तु मन्यन्ते । विच्छेदेनैव च एष लय एतत्स्वीकृतः । विच्छेदो विरामः, स च कियन्तं कालं यावदीति लयोऽपि तेनैव स्वीकृतः । तेन विच्छेदस्य परीक्षेयं कथितेति ।

---

अन्य लोग तो कहते हैं कि—काल के सर्वथा अपरिभाव्यमान होने से उद्देश से कोई प्रयोजन नहीं है, ऐसा बुद्धिमान् लोग मानते हैं । विच्छेद से ही इस लय को स्वीकार कर लिया है । विच्छेद का अर्थ है विराम । यह विराम कितने समय तक रहता है ? इस प्रश्न से लय भी मान लिया गया है । इससे विच्छेद की यह परीक्षा कह दी गई ।

अनुवाद—अर्थ की समाप्ति के लिए कार्य के अनुसार विराम किया जाता है, केवल छन्द के अभिप्राय से विराम नहीं किया जाता है । क्योंकि एक, दो, तीन, चार अक्षरों पर भी विराम देखे जाते हैं । जैसे—

किं, गच्छ, मा विश, सुदुर्जन, वारितोऽसि,
कार्यं, त्वया न, मम सर्वजनोपभुक्तम् ।
सूचासु, चाङ्कुरगते च तथोपचारेष्व-
ल्पाक्षराणि हि पदानि भवन्ति काव्ये ॥

"क्या है, जाओ, आगे मत बढ़ो, हे दुर्जन ! तुम रोक दिये गये हो, सब जनों के उपयोगी मेरा कार्य तुमसे नहीं होगा । काव्य में सूचा और अङ्कुर अभिनयों में तथा उपचार में स्वल्प अक्षरों वाले पद होते हैं ।"

यहाँ एक, दो, तीन, चार अक्षरों पर विराम देखे जाते हैं ।

---

१. ख. दृश्यते ।
२. ग. शोकं सूचं कुरु गते च तथोपचारे । क-न. सूचाङ्कुराभिनयसेषु ।
३. ग. कार्ये ।

तत्रेति विच्छेदे अर्थसमाप्तिनिमित्तं विरामो वास्य कार्यः। अर्थोऽवान्तर-वाक्यार्थं। न च्छन्दोवशादित्येन कविना प्रयोगपरतन्त्रेण भाव्यम्। तदा तेन स तदवसरोचितविरामवति वृत्ते ग्रहणप्रयत्नः कार्यः। प्रयोगेन कविपरतन्त्रेण न भाव्यमित्यत्रापि तेनार्थवशाद्विरामः कार्यं इत्याख्यातम्। संख्यात्र नियमोपलक्षणं एकद्वित्रीति। किमित्येतावत्यथान्तरवाक्यार्थे विच्छेदः। किं गच्छेति।

नन्वेवमेकवाक्यत्वाभावो दूषणमित्याशंक्य प्रत्युत भूषणमेतदित्युपपादयन्नाह—"सूचासु चाङ्कुरगते च यथोचारेऽल्पाक्षराणि हि पदानि भवन्ति काव्ये" इति। बहुप्रकारैः सूचाभिनयैः अङ्कुरप्रकारैश्च युक्तमित्थं काव्यं भवति यदि स्वल्पाक्षराणि पदान्यसमस्तानि भवन्ति। बह्वक्षरपदे, दरिद्राश्च कियन्तस्ते इत्यादौ न मध्ये सूचाङ्कुरयोरुपपत्तिः ॥ १३२ ॥

---

अभिनव - विच्छेद में अर्थ की समाप्ति के लिए कार्य के निमित्त विराम किया जाता है। अर्थ पद से अभिप्राय है अवान्तर वाक्य का अर्थ। 'न छन्दोवशात्' इससे यह कहा गया है कि कवि को प्रयोग के परतन्त्र नहीं होना चाहिए। यदि कवि परतन्त्र हो तो उसे उस अवसर के उचित विराम वाले वृत्त में विराम के लिए प्रयत्न करने चाहिए। प्रयोग कवि के अधीन नहीं होना चाहिए, यहाँ इसलिए अर्थ के अधीन बिराम करना चाहिए, यह कहा गया है। यहाँ पर एक, दो, तीन आदि संख्या का निर्देश नियम का उपलक्षण है। 'किं, गच्छ, मा विश, सुदुर्जन, वादितोऽसि' इत्यादि श्लोक में इतने अवान्तर वाक्य के अर्थ में विराम का विधान है।

अब प्रश्न होता है कि 'किं गच्छे' इत्यादि में एक वाक्यता न होने से 'वाक्यभेद' रूप दूषण हो जायेगा, इस प्रकार आशङ्का करके कहते हैं कि यहाँ एकवाक्यताभाव दूषण नहीं, अपितु भूषण है, इसके उपपादन में यही कहा जा सकता है कि किसी वस्तु की सूचना देने में अथवा अङ्कुरगत अर्थ के कहने में तथा उपचार में अल्प अक्षर वाले पदों का काव्य में प्रयोग करना चाहिए! क्योंकि काव्य में अनेक प्रकार के सूचाभिनय तथा अङ्कुर के प्रकारों से युक्त काव्य होता है यदि वह स्वल्पाक्षर वाले असमस्त पद हो तो। क्योंकि बहु अक्षर वाले 'दरिद्रश्च कियन्तस्ते' इत्यादि पदों के मध्य में सूचा और अङ्कुर की उपपत्ति नहीं होती है।

"तस्यास्तन्मुखमस्ति सौम्यसुभगं किं पार्वणेनेन्दुना।
सौन्दर्यस्य पदे दृशौ च यदि किं ते नाम नीलोत्पलैः॥
किं वा कोमलकान्तिभिः किसलयैः सत्येव तत्राधरे।
ह्री धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः॥

इत्यादौ तु तस्या इत्युक्त्या मध्ये सूचया तदित्यसाधारणविशेषस्मरणं स्वात्मनि तच्चावलोकने तथाकर्णने च प्रच्छन्नस्थितताया नायिका निवृत्त्यङ्कुरे-वैचित्र्यं पुनः परिचुम्बनाभिलाषसूचायोगपूर्वकं मुखमिति पाठस्तत्कृतो नायिकाया रणरणकादरदर्शको निवृत्त्यङ्कुर इत्यादिवैचित्र्ये उत्प्रेक्षणीयम्। अङ्कुरस्त्वनिर्वचन एवेति निवृत्त्यङ्कुर एवात्र मन्तव्यः। यत्राङ्कुरो भविष्यति तद्विषयमेतदिति त्वसत्, पुष्पापचयनाटने यथोचितपरिक्रमणादौ पूर्वभाविना स्वल्पाक्षरे पदयोगेन वैचित्र्या-भावात्।

अथास्य विच्छेदस्याङ्गस्य प्राधान्यं दर्शयति—एवं विराम इत्यादि।

"तस्यास्तन्मुखमस्ति सौम्यसुभगं किं पार्वणेन्दुना,
सौन्दर्यस्य पदं दृशौ च यदि ते किं नाम नीलोत्पलैः।
किं वा कोमलकान्तिभिः किसलयैः सत्येव तत्राधरे,
ह्री धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः॥"

इत्यादि में 'तस्याः' इस कथन से मध्य में सूचा के द्वारा 'तद्' इस असाधारण विशेष का स्मरण करना अपने आप में उस अवलोकन तथा श्रवण में प्रच्छन्न रूप में स्थित नायिका के निवृत्यङ्कुर में वैचित्र्य, फिर परिचुम्बन के अभिलाष की सूचक 'मुख' इस प्रकार का पाठ और उसके कारण नायिका के सम्बन्ध में प्रेम या उत्कण्ठा के साथ आदर दिखाने वाला निवृत्यङ्कुर इत्यादि वैचित्र्य की उत्प्रेक्षा करनी चाहिए। क्योंकि अङ्कुर तो अनिर्वचनीय है, अतः यहाँ निवृत्यङ्कुर ही मानना चाहिए। जहाँ अङ्कुर होगा तद्विषयक यह अङ्कुर पर्व है, ऐसा कहना ठीक नहीं क्योंकि पुष्पों के अपचयन के अभिनय में जब उचित परिक्रमण आदि में, पहिले कहे जाने वाले स्वल्पाक्षर पदों के प्रयोग में वैचित्र्य का अनुभव नहीं होगा। अतः अङ्कुर ग्राह्य नहीं है।

अब विच्छेद के अङ्ग की प्रधानता को कहते हैं—

एवं [1]विरामे प्रयत्नोऽनुष्ठेयः । कस्मात्, [2]विरामो ह्यर्थानुदर्शकः, अत्र श्लोकः[3]—

[4]विरामेषु प्रयत्नो हि नित्यं कार्यः प्रयोक्तृभिः ।
[5]कस्मादभिनयो ह्यस्मिन्नर्थापेक्षी यतः स्मृतः[6] ॥ १३३ ॥

---

अस्मिन्निति विरामे सत्यभिनयस्थितो यथाविषयं प्रयोक्तुं शक्यः । स च विरामाद् गम्यते । विरामे सत्यर्थं दर्शयति अभिनयेऽन्यथा असमञ्जसत्वं स्यादिति तात्पर्यम् । यदि वाभिनयो विरामे स्थित इत्यभिनयकार्यं विराम एवोद्वहतीति तात्पर्यम् ॥ १३३ ॥

---

अनुवाद—इसलिये विराम में प्रयत्न करना चाहिए, क्योंकि विराम अर्थ का अनुदर्शक होता है ।

इस विषय में श्लोक है—

अनुवाद—नाट्यप्रयोक्ताओं को विराम के विषय में नित्य प्रयत्न करना चाहिये । क्योंकि अभिनय अर्थापेक्षी कहा गया है अर्थात् अभिनय अर्थ की अपेक्षा करता है ॥ १३३ ॥

अभिनव—'अस्मिन्' अर्थात् विराम के होने पर अभिनयस्थ पदार्थ का विषयानुरूप प्रयोग किया जा सकता है । यह विराम से अवगत होता है और विराम किसी कार्य की समाप्ति पर होता है । विराम के होने पर अभिनय अर्थ को दिखाता है अन्यथा अर्थात् विराम के अभाव में असमञ्जस हो जायेगा । यह तात्पर्य है । अथवा यदि अभिनय विराम में स्थित है । अत एव अभिनय के कार्य को विराम ही वहन करता है, यह यहाँ तात्पर्य है ॥ १३३ ॥

इसी बात को कहते हैं—

---

१. त. विरामः प्रयत्नतोऽनुष्ठेयः ।
२. ग. विराम इहार्थानुदर्शको भवति । अपि च । ख. विरामार्थानुदर्शकः भवति ।
३. अपि च श्लोकः ।
४. ख. विरामे तु प्रयत्नस्तु । ५. ख. तस्मादभिनये ह्यस्मात् ।
६. ख. ग. स्थितः । क-म. प्रतिष्ठितः ।

यत्र व्यग्रावुभौ हस्तौ तत्र दृष्टिसमन्वितः[1] ।
[2]वाचिकाभिनयः कार्यो विरामैरर्थदर्शकैः[3] ॥ १३४ ॥

[4]प्रायो वीरे च रौद्रे च करौ प्रहरणाकुलौ ।
बीभत्से [5]कुत्सितत्वाच्च भवतः कुञ्चितौ करौ ॥ १३५ ॥

हास्ये चोद्देशमात्रेण करुणे च प्रलम्बितौ ।
अद्भुते [6]विस्मयात्स्तब्धौ भयाच्चैव भयानके ॥ १३६ ॥

---

पूर्वं दृष्टिप्राधान्यतात्पर्येणेत्यपौनरुक्त्यम् ॥ १३४ ॥

व्यापकत्वमस्या दर्शयति—

प्रायो वीरे च रौद्रे चेति ।

कुञ्चिताविति सङ्कोचवन्तावित्यर्थः । भयाच्चेति श्लथावेव ॥ १३५-१३६ ॥

---

अनुवाद—जहाँ पर दोनों हाथ व्यग्र हों, वहाँ अर्थदर्शक विरामों के द्वारा दृष्टि से समन्वित वाचिक अभिनय करना चाहिए ॥ १३४॥

अभिनव—इसी बात को पहिले दृष्टि की प्रमुखता के तात्पर्य से कहा था। अब दृष्टि समन्वित हाथों को प्रमुखता से बतलाने से पुनरुक्ति नहीं है ॥ १३४॥

अब इसकी व्यापकता को दिखाते हैं—

अनुवाद—प्रायः वीर और रौद्र रस में दोनों हाथ शस्त्र प्रहरणन में व्यस्त रहते हैं और बीभत्स रस में कुत्सित होने के कारण दोनों हाथ कुञ्चित हो जाते हैं। हास्य और करुण रस में उद्देशमात्र से दोनों हाथ प्रलम्बित होते हैं और अद्भुत रस में विस्मय के कारण स्तब्ध तथा भयानक रस में भय के कारण स्तब्ध रहते हैं ॥ १३५-१३६ ॥

अभिनव—'कुञ्चितौ' पद का अर्थ सङ्कोच युक्त होना है और 'भयाच्च' कहने से अभिप्राय है कि दोनों हाथ शिथिल हो जाते हैं ॥ १३५-१३६ ॥

---

१. क. (टि०) दृष्टिसमन्वितैः ।
२. क. (टि०) वाचिकोऽभिनयः ।
३. ख. दर्शिभिः ।
४. इतः त्रयो श्लोकाः च पुस्तकेन सन्ति ।
५. क. (टि०) कुञ्चितत्वाच्च । ६. ग. विस्मयाविष्टौ ।

एवमादिषु [1]चान्येषु [2]प्रविचारेऽथ हस्तयोः ।
अलङ्कारविरामाभ्यां [3]साध्यते ह्यर्थनिश्चयः ॥ १३७ ॥
ये विरामाः स्मृता [4]वृत्ते तेष्वलङ्कार इष्यते ।
समाप्तेऽर्थे पदे वापि तथा प्राणवशेन वा ॥ १३८ ॥
पदवर्णसमासे च द्रुते वह्वर्थसंकटे ।
कार्यो विरामः पादान्ते तथा प्राणवशेन वा ।
शेषमर्थवशेनैव विरामं सम्प्रयोजयेत् ॥ १३९ ॥

---

उच्चादीप्तादिरलङ्कारः । स च वृत्तिविरामेषु यथा "योः यः शास्त्रं विभर्ति" इत्यत्रोच्चदीप्तकाकुः पदान्तेन, वीररौद्रयोरपि स्रग्धरादिवृत्ते अर्धादौ विरामो न कार्यः, अपि तु पादान्ते पठितस्तावत् प्राणसंवेदाभावात् । प्राणवशेन वेत्यगतिका गतिरिति वृद्धाः । तच्चासत् । शिक्षावशेनाहरणीयो हि तत्राविच्छेदः ॥ १३८ ॥

---

अनुवाद—इस प्रकार के तथा अन्य प्रकार के कार्यों में हाथों के संचालन में अलङ्कार और विरामों के द्वारा अर्थ का निश्चय किया जा सकता है ॥ १३७ ॥

अनुवाद—वृत्तों ( छन्दों ) में जो विराम कहे गये हैं, उनमें अलङ्कार इष्ट है और अर्थ की समाप्ति पर, पद में अथवा प्राण वायु के कारण या रसभावादि के औचित्य से, वर्ण, पद और समास में, शीघ्रता से उच्चारण में, अनेक अर्थों के सङ्कट के समय, पाद के अन्त में अथवा प्राणवायु के आधार पर विराम करना चाहिए । शेष स्थानों पर अर्थ के अनुसार विराम करना चाहिए ॥ १३८-१३९ ॥

अभिनव—उच्च, दीप्तादि रूप अलङ्कार है, उसे वृत्त के विराम रखना चाहिए । जैसे—

यो यः शस्त्रं विभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य एवमपि जगतामन्तकस्यान्तकोऽहम् ॥

( वेणीसंहार ३।३२ )

---

१. ख. सर्वेषु । २. ग. विचारेषु । ख. अधिकारेषु ।
३. ख. साध्यन्ते ह्यर्थनिश्चयाः । ४. क-भ. वृत्ते ।

[1]अत्र च भावगतानि [2]रसगतानि च कृष्याक्षराणि बोद्धव्यानि, तद्यथा—

[3]आकारैकारसंयुक्तमैकारौकारसंयुतम् ।
[4]व्यञ्जनं यद्भवेद्दीर्घं कृष्यं तत्तु विधीयते[5] ॥ १४० ॥

---

तस्मादयमर्थः—पदान्ते विच्छेदः कार्यो, यदि वा प्राणवशेन प्राणा रसभावाद्याः, तदौचित्येन छेदः। पादादावपि तावदनेनानुबन्धोऽपि विच्छेद उपयोगीति दर्शितम् ॥ १३९ ॥

---

इसमें किया गया है। उच्च-दीप्तादि काकु को वीर और रौद्र रस में भी स्रग्धरा अदि वृत्तों में अर्थ या आदि में विराम नहीं रखना चाहिए, किन्तु पद के अन्त में करना चाहिये। क्योंकि अर्ध में और आदि में प्राण वायु का संवेग नहीं होता, अतः पद के अन्त में ही विराम करना चाहिए। वृद्ध लोग तो कहते हैं कि 'प्राणवशेन' यह पाठ अगतिक गति है। किन्तु यह कथन ठीक नहीं है। वहाँ शिक्षा के कारण ही विच्छेद-अविच्छेद होता है। इसलिए यहाँ यह अर्थ है कि पद के अन्त में विच्छेद करना चाहिए। अथवा 'प्राणवशेन' में प्राण शब्द का अर्थ रस-भावादि है। अतः रस-भावादि के औचित्य से यहाँ विच्छेद है। अतः पाद के आदि में विराम किया जा सकता है। इससे अनुबन्ध ( आरम्भ ) भी विच्छेद में उपयोगी है, यह दिखा दिया है।

शेषमिति—जहाँ चित्तवृत्ति की प्रधानता नहीं है, अपितु विभावादि की प्रधानता है वहाँ अर्थवश ( अर्थ के अनुसार ) विराम करना चाहिए ॥ १३८-१३९ ॥

**अनुवाद—यहाँ पर भावगत और रसगत कृष्याक्षरों को भी समझ लेना चाहिये। जैसे—**

**अनुवाद—जो व्यञ्जन आकार, ऐकार, ओकार, औकार के संयोग से दीर्घ होते हैं, उन्हें कृष्याक्षर कहते हैं ॥ १४० ॥**

---

१. ख. क्षत्रानुगतानि चत्वार्यक्षराणि रसभावानुगतानि कृष्टान्यक्षराणि चोद्बोध्यानि ।
२. ग. रसजातानि कृष्याण्यक्षराणि । कृष्याद्यक्षराणि ।
३. ख. अकारे करसंयुक्तमेकारे कारसंयुतम् । ग. एकारैकारसंयुक्तमोकारौकारसंयुतम् ।
४. क-म. एकारौकारसंयुक्तं दीर्घं यद्व्यञ्जनं भवेत् ।
५. ख. ग. भवेदिह ।

विषादे च [1]वितर्के च प्रश्नेऽथामर्ष एव च ।
कलाकालप्रमाणेन पाठ्यं कार्यं प्रयोक्तृभिः ॥ १४१ ॥
[2]शेषाणामर्थयोगेन विरामे [3]विरमेदिह ।
एकद्वित्रिचतुःपञ्चषट्कलं च विलम्बितम् ॥ १४२ ॥

---

कृष्याक्षराणीति कृषतीति कृषो विलम्बितो लयः तत्र साधूनि कृष्याणि सन्ध्यक्षराणि, यथा आ, ई, ऊ इति दीर्घाः कलालक्षणो यः कालः तत्प्रमाणेन विलम्बितेन पाठ्यं कार्यमिति विच्छेदस्यैव प्रमाणं दर्शितम् ॥ १४१ ॥

शेषाणामिति ह्रस्वानाम्। अर्थयोगेनेति यथा स्फुटा प्रतीतिर्भवति तथा विच्छेदः कार्यो न त्वतिविलम्बितं पठेदित्यर्थः। ननु कियत्कलाप्रमाणमित्याह—विलम्बितमिति ॥ १४२ ॥

---

अनुवाद—विषाद, वितर्क, प्रश्न और अमर्ष में नाट्यप्रयोक्ताओं को कलात्मक काल के प्रमाण के अनुसार पाठ्य करना चाहिये ॥ १४१ ॥

अभिनव—कृष्याक्षर का अर्थ है सन्ध्यक्षर अर्थात् जो कर्षण करता है वह कृष है, कृष का अर्थ विलम्बित लय है। उसमें जो साधु है वह कृष्य है। इस प्रकार कृष्य अक्षर सन्ध्यक्षर हैं। जैसे—आ, ई, ऊ, ये दीर्घ अक्षर हैं। कला के प्रमाण वाला जो काल है तदनुसार विलम्बित लय में पाठ करना चाहिए। इस प्रकार विच्छेद ही प्रमाण है यह दिखा दिया है ॥ १४१ ॥

अनुवाद—शेष अक्षरों के अर्थ के योग से विराम के अवसर पर विराम रखें, विलम्बित काकु में एक, दो, तीन, चार, पाँच, छः कलाएँ होती हैं ॥ १४२ ॥

अभिनव—'शेषाणाम्' का अर्थ है ह्रस्व अक्षरों का। 'अर्थयोगेन' पद का तात्पर्य है, जिस प्रकार स्फुट अर्थ को प्रतीति हो, उसी प्रकार विच्छेद करना चाहिए, न कि अतिविलम्बित लय से पाठ करें। अब प्रश्न होता है कि कला का प्रमाण कितना हो, इस पर कहते हैं कि विलम्बित एक, दो, तीन, चार, पाँच, छः कलाओं तक होता है ॥ १४२ ॥

---

१. ख. विवर्त्ते च ।
२. ख. शेषाणामर्थयोगेन विरामो । ३. विभिद्ध् ब्ः ।

[1]विलम्बिते विरामे हि सदा गुर्वक्षरं भवेत् ।
षण्णां कलानां परतो [2]विलम्बो च विधीयते ॥ १४३ ॥

अथवा कारणोपेतं प्रयोगं कार्यमेव च ।
समीक्ष्य वृत्ते कर्तव्यो[3] विरामो रसभावतः ॥ १४४ ॥

ये विरामाः स्मृताः [4]पाठ्ये वृत्तपादसमुद्भवाः ।
उत्क्रम्यापि क्रमं तज्ज्ञैः कार्यास्तेऽर्थवशानुगाः[5] ॥ १४५ ॥

---

गुर्वक्षरमिति कृष्यं। वा शब्दादधिकमनुजानाति कारणोपेतमिति कारणं दीर्घकालं स्मरणमिति चिन्तनादिभिः, व्याध्यपस्मारादिभिर्वा कारणैरुपेतं, स्पष्टास्पष्टादिभिरित्यन्ये ॥ १४४ ॥

वृत्तविरामादर्थविरामः प्रथममिति । दर्शयितुमाह—ये विरामा इति ।

---

अनुवाद—विलम्बित विराम ( काकु ) में सदा गुरु अक्षर होने चाहिये। किन्तु छः कलाओं के बाद विलम्ब ( विराम ) नहीं होना चाहिए ॥ १४३ ॥

अभिनव—यहाँ गुर्वक्षर का अर्थ है कृष्याक्षर अर्थात् सन्ध्यक्षर ॥ १४३ ॥

अनुवाद—अथवा कारण के अनुसार प्रयोग करना चाहिए और रस एवं भावों को समीक्षा करके वृत्त में विराम करना चाहिए ॥ १४४ ॥

अभिनव—'अथवा' में वा शब्द से अधिक के लिए अनुज्ञा देने का संकेत है। 'कारणोपेतम्' में कारण पद का अर्थ है चिन्तन आदि के द्वारा दीर्घ काल तक स्मरण। अथवा अपस्मार आदि व्याधि रूप कारणों से उपेत। अन्य लोग स्पष्ट और अस्पष्ट कारणों से उपेत यह अर्थ करते हैं ॥ १४४ ॥

वृत्त विराम से अर्थ विराम प्रथम है, इस बात को दिखलाने के लिए कहते हैं—

अनुवाद—पाठ्य में वृत्त के पादों से समुद्भुत जो विराम कहे गये हैं, उन्हें वृत्त के जानकार लोग क्रम का उल्लंघन करके अर्थ के अनुसार विराम करें ॥ १४५ ॥

---

१. ग विरामे च बिलम्बे च ।
२. ग. लम्बनं । क. लङ्घनं ।
३. कर्त्तव्या विरामा रसभावतः ।
४. ख. ग. काव्ये । क-द. वाक्ये ।
५. ख. तेऽर्थवशास्तदा । ग. अर्थवशाश्रयाः ।

नापशब्दं पठेत्तज्ज्ञो भिन्नवृत्तं[1] तथैव हि।
विश्रमेन्नाविरामेषु दैन्ये काकुं न [2]दीपयेत् ॥ १४६ ॥

---

तज्ज्ञैस्तद्विरामात्मकं वृत्तगतं वस्तु। उत्क्रम्यापीति विशेषोपक्रमेऽपीति सामान्योपसंहारः। तादृशा विरामेण, पठेत्, येनावगतो विवक्षितः शब्दो भवति 'वरदं ध्यायति' इत्यत्र वरद शब्दे यदा विच्छेदः क्रियते तदा मध्य इतिशब्दान्तर-प्रतिभया ध्यायति शब्दोऽवगतो भवतीति ॥ १४५ ॥

भिन्नवृत्तं च कृत्वा न पठेत् तथा विच्छेदं न कुर्याद्येनान्यवृत्तभ्रान्तिर्भवति। तथा हि—'भव शंकर भाजनं ये जगतीह भवन्ति केचन' इत्यत्र ये इति शब्दस्य पूर्वपादेन सह पाठे उपवेद उपजातिवृत्तभेदो यद्यपि भवति तथापि द्वितीयपादे वृत्तभङ्गः। तेन भिन्नवृत्तं न पठेदिति विच्छेदस्यैव प्राधान्यज्ञापनार्थमेतदुक्तमिति शब्दच्युतभिन्नवृत्तदोषाभिधाने न पौनरुक्त्यम्। इह वस्तुतस्तदभावेऽपि विच्छेदवशेन तत्प्रतिभोदयात्।

---

अभिनव—'तज्ज्ञैः' में 'तत्' पद का अर्थ विरामात्मक वृत्तगत वस्तु है। 'उत्क्रम्य' का अर्थ है कि यद्यपि विशेष का उपक्रम है किन्तु उपसंहार सामान्य में है। अतः विराम को इस प्रकार पढ़े जिससे विवक्षित शब्द की प्रतीति हो जाय। जैसे 'वरदं ध्यायति' में यदि 'विरद' शब्द में विच्छेद करते हैं तो मध्य में शब्दान्तर के प्रतिभान से 'ध्यायाति' का ज्ञान होता है ॥ १४५ ॥

अनुवाद—नाट्यवेत्ता लोग अपशब्द का पाठ न करें और न वृत्तों को तोड़कर पढ़ें। विराम-स्थान से भिन्न स्थान पर विराम न करें और दैन्य अवस्था में काकु को दीप्त न करें ॥ १४६ ॥

अभिनव—वृत्त को तोड़कर नहीं पढ़ना चाहिए और ऐसा विच्छेद न करें जिससे किसी दूसरे वृत्त को भ्रान्ति होने लगे। जैसे—

"भव शङ्कर भाजनं ये जगतीह भवन्ति केचन"

यहाँ पर 'ये' इस पद का प्रथम ( पूर्व ) पाद के साथ पाठ करने पर यद्यपि उपजाति छन्द का भेद हो जाता है तथापि द्वितीय पाद में छन्दोभङ्ग हो जाता है। इसलिए 'भिन्नवृत्तं न पठेत्' अर्थात् भिन्नवृत्त का पाठ न करें, इसे वृत्त की प्रधानता को ज्ञापित करने के लिए कहा हैं। शब्दच्युत तथा भिन्नवृत्त दोषों के कहने से पुनरुक्ति नहीं समझना चाहिये। क्योंकि यहाँ वस्तुतः उसके अभाव में भी विच्छेद के वश उसकी प्रतीति हो जाती हैं।

---

१. भिन्नवृत्ते न चैव हि।
२. ख. ग. न काकुरसहीनकम्। न काकुरसदीपवद्।

[1]वर्जितं काव्यदोषैस्तु लक्षणाढ्यं गुणान्वितम् ।
स्वरालङ्कारसंयुक्तं पठेत्पाठ्यं[2] यथाविधि ॥ १४७ ॥

---

एतदेव तात्पर्येणाह—विश्रमेन्नाविरामेष्विति । एवं विच्छेदस्य भूयो विषयव्यापकत्वमभिधाय तन्न्यूनां दीप्तां दर्शयितुमाह—दैन्ये काकुं न दीपयेदिति शोकाविमग्नचित्तवृत्तिं विमुच्यान्यत्र दीपनं सर्वत्र शोभावहमिति भावः ॥ १४६ ॥

एवं स्वराः क्रमो मर्यादा स्थानत्रयमाश्रयः उदात्तादयः स्वरूपं अलङ्काराः स्वरूपपरिपूरकाः इति कर्तव्यतारूपाण्यङ्गानि । स्वरभेदाच्च काकोर्विशेषः स्वरभेदो हि तस्यामेव काकौ विवक्षितायां रसभावादिधर्मान्तरोदयो, न हि स्वराणां स्थानभेदोऽलङ्कारोऽङ्गाविकृतः । वर्जितं काव्यदोषैरित्यादिना प्राक्तनाध्यायार्थेन सह सङ्गतिमस्याध्यायस्य दर्शयति ॥ १४७ ॥

---

इस अभिप्राय से कहते हैं कि अविराम स्थल पर विराम नहीं करना चाहिये। इस प्रकार विच्छेद की व्यापकता बतलाकर न्यूना और दीप्ता को दिखलाने के लिए कहते हैं कि दैन्यावस्था में काकु को दीपन न करें, इससे यहाँ यह बतलाया गया है कि शोकादि से मग्न चित्तवृत्ति छोड़कर अन्य प्रसङ्गों में सर्वत्र काकु का दीपन शोभाधायक होता है ॥ १४६ ॥

अनुवाद—काव्य के दोषों से रहित, लक्षणों से समन्वित, गुणों से युक्त, स्वर एवं अलङ्कारों से संयुक्त पाठ्य को यथाविधि पढ़ें ॥ १४७ ॥

अभिनव—इस प्रकार स्वर, क्रम, मर्यादा, स्थानत्रय, उनके उपयोगी उदात्तादि वर्ण, उनके स्वरूप, स्वरूप के परिपूरक अलङ्कार, इतिकर्त्तव्यता रूप अङ्गों को यहाँ कहा गया है। स्वर-भेद से काकु का भेद होता है और स्वरभेद तब होगा जब काकु की विवक्षा होगी और काकु की विवक्षा होने पर रस-भावादि धर्मान्तरों का उदय होता है, स्वरों के स्थानों का भेद अलङ्कारों एवं अङ्गादि के के कारण नहीं होता है। यहाँ पर 'वर्जितं काव्यदोषेश्च' इत्यादि के द्वारा यह दिखाया गया है कि पूर्व अध्याय के साथ इस अध्याय की सङ्गति दिखाते हैं ॥ १४७ ॥

---

१. व्यपेतं वाक्यपदोषैस्तु ।
२. ब. ग. काव्यं ।

[1]अलङ्कारा विरामाश्च ये पाठ्ये संस्कृते स्मृताः ।
[2]त एव सर्वे कर्तव्या स्त्रीणां पाठ्ये स्वसंस्कृते ॥ १४८ ॥

एवमेतत्स्वरकृतं[3] कलातालल्यान्वितम् ।
दशरूपविधाने तु पाठ्यं योज्यं प्रयोक्तृभिः ॥ १४९ ॥

---

एवं सस्कृते काकुविधानं प्राकृताध्यायप्रमेयभूते प्राकृतेऽप्यतिदिशति अलङ्कारा विरामाश्चेत्यादिना ।

अध्यायार्थमुपसंहरन् भाविनोऽध्यायस्यार्थमासूत्रयति दशरूपेति ।

दशरूपविधाने यत्पाठ्यं तदनेन त्रिप्रकारेण योज्यमित्युपसंहारः ।

---

**अभिनव**—इस प्रकार संस्कृत भाषा के लिए कथित काकु विधान का प्रस्तुत अध्याय के प्रमेयभूत प्राकृत भाषा में भी अतिदेश करते हैं—

**अनुवाद—संस्कृत पाठ्य में जो अलङ्कार और विराम कहे गये हैं, उन सभी का प्रयोग स्त्रियों के प्राकृत पाठ में भी करने चाहिए ॥ १४८ ॥**

**अभिनव**—प्रस्तुत अध्याय के अर्थ का उपसंहार करते हुए अगले अध्याय के अर्थ का आसूत्रण करते हैं—

**अनुवाद—नाट्य-प्रयोक्ताओं को दशरूप के विधान में इस प्रकार स्वरों से युक्त तथा कला, ताल एवं लय से समन्वित पाठ्य की योजना करनी चाहिए ॥ १४९ ॥**

**अभिनव**—दश रूपकों के विधान में जो पाठ्य बताया गया है उनकी योजना इन तीन प्रकारों से करनी चाहिए। इस प्रकार उपसंहार है ॥ १४९ ॥

---

१. ख. ग. अलङ्कारविशेषा ये पाठ्यसंस्कृतसंश्रयाः ।

२. ख. ते सर्वे संप्रकर्तव्या स्त्रीणां पाठ्ये तु संस्कृते ।

३. ख. स्वरयुतं ।

[1]उक्तं काकुविधानं तु यथावदनुपूर्वशः ।
[2]अत उर्ध्वं प्रवक्ष्यामि दशरूपविकल्पनम् ॥ १५० ॥

इति भरतीये नाट्यशास्त्रे वागभिनये [3]काकुस्वरव्यञ्जनो नाम सप्तदशोऽध्यायः[4] ।

---

तु शब्दो व्युत्क्रम सूचयति । प्रसङ्गादक्रमप्राप्तमपि काकुविधानमुक्तम् । अनुपूर्वश इत्यादि । यत्तु क्रमापन्नं तद्दशरूपं विकल्प्यमानं वक्ष्यामीति शिवम् ॥ १४८-१५० ॥

इति काकुविकल्पलक्षणेऽस्मिन्नध्याये मुनिविवसमर्थितेऽर्थम् ।
प्रकटीकुरुते स्म चन्द्रमौलेरभिनवगुप्तसमाख्य एकदेशम् ॥

इति श्रीमन्महामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेद-
विवृतावभिनवभारत्यां काकुविधानं नाम
सप्तदशोऽध्यायः ॥

---

**अनुवाद**—इस प्रकार मैंने यथावत् क्रमशः काकु विधान को कहा है। अब इसके बाद दश रूपकों के स्वरूप को कहूँगा ॥ १५० ॥

इस प्रकार भरतमुनि कृत नाट्य शास्त्र में वागभिनय में काकु-स्वर व्यञ्जन नामक सत्रहवाँ अध्याय समाप्त हुआ ॥ १७ ॥

**अभिनव**—यहाँ पर 'तु' शब्द से व्युत्क्रम की सूचना दी गई है। इस प्रकार प्रसङ्ग से जो क्रम प्राप्त नहीं है, उस काकु-विधान को भी कह दिया। 'अनुपूर्वशः' का अभिप्राय है जो क्रम प्राप्त दशरूप विधान है, उसके विकल्पों को कहूँगा। शिवम् ॥ १५० ॥

**अभिनव**—इस प्रकार अभिनव भरतमुनि से समर्थित काकु विकल्प नामक इस अध्याय में चन्द्रमौलि के एकदेश जिह्वा रूप अर्थ को प्रकट कर दिया है अर्थात् कह दिया है ॥ १७ ॥

इस प्रकार अभिनवगुप्तपादाचार्य विरचित अभिनवभारती का सत्तरहवाँ अध्याय समाप्त हुआ ॥ १७ ॥

इति डा० पारसनाथद्विवेदिविरचितायां नाट्यशास्त्रस्याभिनवभारत्याश्च हिन्दीव्याख्यायां सप्तदशोऽध्यायः ॥ १७ ॥

---

१. ग. यथा । २. क-म. अतः परं ३. म. स्वरकाकु ।
४. काकुव्यञ्जको नामाध्यायोऽष्टादशः ।

# [1]अष्टादशोऽध्यायः

[2]वर्तयिष्याम्यहं विप्रा ! दशरूपविकल्पनम् ।
नामतः कर्मतश्चैव तथा चैव प्रयोगतः ॥ १ ॥

## अभिनवभारती

रूपं यदेतद्बहुधा चकास्ति तद्येन भावी भविता न जातु ।
तच्चक्षुरर्कात्मिकमीश्वरस्य वन्दे वपुस्तैजससारधाम्नः ॥ १८ ॥

---

## अभिनवभारती

गत अध्याय में दशरूपकों काकु के विधान की योजना बताई गई है। अब दश रूपकों के स्वरूप का अभिधान करेंगे। दृश्य होने के कारण नाट्य को 'रूप' कहते हैं। नाट्य को रूपक भी कहा जाता है, क्योंकि इसमें आरोप पाया जाता है।

**अनुवाद—हे विप्रो ! अब मैं उद्देश ( नाम ), कार्य और प्रयोग के अनुसार दश रूपकों के विधान का वर्णन करता हूँ ॥ १ ॥**

**अभिनव**—जो यह रूप बहुधा प्रकार से प्रकाशित होता है, जिसके कारण वह न कभी भावी होता है और भविता ( अनद्यन भविष्य )। ईश्वर का वह अर्कात्मक चक्षु जो तेज रूप ईश्वर का वपु ( शरीर ) है, उसको मैं बन्दना करता हूँ ॥ १८ ॥

**विशेष—दशरूपविकल्पनमिति**—नाट्यशास्त्र में दश रूपकों का विधान बताये गया है—नाटक, प्रकरण, भाण, व्यायोग, समवकार, वीथी, प्रहसन, डिम, ईहामृग और अङ्क। इनके अतिरिक्त भरत ने नाटक और प्रकरण के मिश्रण से रूपक का एक अन्य भेद 'नाटी' का उल्लेख किया है, जिसे परवर्ती काल में 'नाटिका' संज्ञा प्राप्त हुई। धनञ्जय ने दश रूपकों और भोज तथा रामचन्द्र गुणचन्द्र ने बारह रूपकों का निरूपण किया है। धनञ्जय ने अवस्थानुकृति को 'नाट्य' कहा है यही नाट्य दृश्य होने से 'रूप' कहलाता है और यही रूप का आरोप होने से 'रूपक' कहलाता है। इस प्रकार 'रूप' और 'रूपक' दोनों शब्द नाट्य के वाचक हैं।

---

१. ग. ड. विंशोऽध्यायः ।

२. ख. ग. कथयिष्यामि ।

नायकदेवीगुरुजनपुरोहितामात्यसार्थवाहानाम्[1] ।
नैकरसान्तरविहितो ह्यङ्कः[2] इति स वेदितव्यस्तु ॥ १८ ॥

[3]पञ्चाक्षरा दशपरा ह्यङ्काः स्युर्नाटके प्रकरणे च ।
निष्क्रामः सर्वेषां यस्मिन्नङ्कः स विज्ञेयः ॥ १९ ॥

---

एवं प्रधानवर्णनीयस्य वृत्तमुक्त्वा तदुपयोगि वृत्तस्य दिशं दर्शयितुमाह—नायकदेवीत्यादि ।

नायका मुख्याः नायिकाः देव्यो महादेवीभोगिनीप्रभृतयः । गुरुजनो मातृपितृभ्रात्राचार्यादिः । सार्थवाहोऽत्र सेनापतिः । इतिवृत्तवशाद्वणिगेव वा, एषां संबन्धी अङ्क एतदर्थाभिधायक इति यावत् । अत एव नैकेन विचित्रेण रसविशेषेण युक्तस्तथा हि देवीयोगो शृङ्गारः नायके वीर इत्येवमन्यदुत्प्रेक्ष्यम् । नाटकानां वेश्यादय इत्यन्ये । अङ्क इति । अनेकरसाङ्कितत्वादपि अङ्क इति नामेत्यर्थः ॥ १८-१९ ॥

---

प्रतिनायक में स्थिति नाना प्रकार के अवस्था वाले चरित और सम्भोग अनुपादेय और अविषय होने से हेय हैं। और नायक में तो उसके विपरीत अर्थात् उपादेय होते हैं, यह 'तु' शब्द का अर्थ है। अविप्रकृष्ट का अर्थ है अदीर्घ अर्थात् जो लम्बा हो। क्योंकि जो दीर्घ अभिनेय होता है वह प्रयोक्ता अभिनेताओं और दर्शकों को खेद उत्पन्न करता है ॥ १७ ॥

इस प्रकार वर्णनीय प्रधान वृत्त को कहकर अब तदुपयोगी वृत्त को दिशा दिखलाने के लिए कहते हैं—

अनुवाद—नायक, देवी, गुरुजन, पुरोहित, अमात्य तथा सेनापति के अनेक रसों से विहित इतिवृत्त को 'अङ्क' समझना चाहिए ॥ १८ ॥

अनुवाद—नाटक और प्रकरण में पाँच से लेकर दस अङ्क तक अङ्क होने चाहिए, जिसमें सभी पात्रों का निष्क्रमण होता है उसे 'अङ्क' समझना चाहिये ॥ १९ ॥

---

१. क-न. परिजन । गुणजन ।
२. ग. ह्यङ्कः खलु वेदितव्यः सः ।
३. ब. भ. पुस्तकयोरयं श्लोकः नास्ति ।

[1]क्रोधप्रसादशोकाः शापोत्सर्गोऽथ[2] विद्रवोद्वाहौ ।
[3]अद्भुतसंभवदर्शनमङ्के प्रत्यक्षजानि स्युः ॥ २० ॥

---

न केवलं चरितसंगोगावेव प्रत्यक्षौ किन्त्वन्यदपि यत्र रञ्जनातिशयोऽस्तीति दर्शयन्नाह—क्रोधप्रसादशोका इति ।

शापोत्सर्गः शापकृतस्यानर्थस्य नाशः, यथोक्तस्यानर्थकाभावस्य शङ्काभयत्रासकृतो विद्रव इति गर्भसन्धौ वक्ष्यते । उद्वाहो विवाहः । अद्भुतस्य संभवोऽभ्युपगमः । उपक्रमो दर्शनं न निर्वाह इत्येतच्चान्यस्यापि रञ्जकवर्गस्योपलक्षणम् । अक्षजं ज्ञानं प्रति गतानीति प्रत्यक्षजानि । प्रत्यक्षशब्देन तदेकदेश उच्यते तत्र जातानीत्यन्येन्द्रियवर्गस्य प्रत्यक्षता तावद्भवति, कदाचित्त्वप्रत्यक्षमपि ॥ २० ॥

---

**अभिनव**—नायक मुख्य और पताका नायक अमुख्य होता है, देवी महादेवी, भोगिनी आदि हैं, गुरुजन माता, पिता, ज्येष्ठ भ्राता और आचार्य आदि हैं, सार्थवाह पद यहाँ सेनापति का वाचक है अथवा इतिवृत्त के कारण वणिक् है । इनका सम्बन्धी अङ्क अर्थात् इसी अभिप्राय वाला अङ्क है । इसलिए यह किसी एक ही विचित्र रस से युक्त नहीं है, जैसे देवी के सम्बन्ध में शृङ्गार रस, नायक के सम्बन्ध से वीर रस है । इसकी स्वयं उत्प्रेक्षा कर लेनी चाहिए । अन्य लोग कहते हैं कि देवी आदि नायकों की होती है । अङ्क का तात्पर्य है कि यह अनेक रसों से अङ्कित है, इसलिए 'अङ्क' यह नाम है ॥ १८-१९ ॥

केवल चरित और सम्भोग ही प्रत्यक्ष नहीं हैं, अपितु अन्य भी प्रत्यक्ष होते हैं, अतः रञ्जनातिशय को दिखलाते हैं—

**अनुवाद**—क्रोध, प्रसाद, शोक, शापोत्सर्ग, विद्रव, विवाह तथा संभाव्य अद्भुत वस्तु का दिखलाना—ये सब अङ्क में प्रत्यक्ष होने चाहिए ॥ २० ॥

**अभिनव**—शापोत्सर्ग का अर्थ है शापकृत अनर्थ का नाश । जैसा कि अनर्थ के अभाव का कहा जा चुका है । शङ्का, भय, त्रास से होने वाला विद्रव को गर्भ सन्धि में कहेंगे । उद्वाह का अर्थ विवाह है, अद्भुत रस का सम्भव (उत्पत्ति), उसका अभ्युपगम, उपक्रम, दर्शन और निर्वाह आदि रञ्जक वर्ग के उपलक्षण हैं । अक्ष अर्थात् इन्द्रियों से होने वाले ज्ञान के प्रति अनुगत हैं वह प्रत्यक्षज है । यहाँ प्रत्यक्ष शब्द से उसके एकदेश को कहा गया है अतः उसमें होने वाले कहने का अभिप्राय है कि अन्य इन्द्रिय वर्ग की प्रत्यक्षता भी होती है और कभी-कभी तत्त्व प्रत्यक्ष भी होता है ॥ २० ॥

---

१. ख. ग. प्रमादः क्रोधः ।
२. ग. अब्दः । ३. ख. ग. अद्भुतसंभवः ।

[1]एकदिवसप्रवृत्तः [2]कार्यस्त्वङ्कोऽर्थबीजमधिकृत्य[3] ।
आवश्यककार्याणामविरोधेन प्रयोगेषु[4] ॥ २१ ॥
एकाङ्केन कदाचिद्बहूनि कार्याणि योजयेद्धीमान्[5] ।
आवश्यकविरोधेन तत्र कार्याणि कार्याणि[6] ॥ २२ ॥

---

अथाङ्कस्य प्रयोगकालपरिमाणमियदिति दर्शयति—एकदिवसप्रवृत्तमिति ।

तादृशमन्वान्तरेणार्थेन प्रयोजनेन युक्तं बीजमुपायानुष्ठानं वर्णनीयताया अधिकृत्याङ्कः कर्तव्यो यस्य प्रकृष्टं च यद्वर्तनं प्रयोगरूपं तदेकदिवसेनेति मुहूर्तपञ्चदशकेनैव, यतस्तावन्तं कालमावश्यकानि भोजनादीनि अशक्यनिरोधनानि । ततः परन्तु प्रयोगकालश्चेत् तत्प्रेक्षकप्रयोक्तृणां तदाप्यावश्यकस्य सन्ध्यावन्दनभोजनादेरविरोधेनेत्येवं कार्यानेकत्वमेकत्राङ्के निषिद्धम् । क्वचित्त्वभ्युपगतमपि । अन्ये तु सर्वामिवार्या निषेधपरत्वेनाहुः । अन्ये त्वेकाङ्केनेति तृतीयां मन्यमानाः सर्वेयमार्या विधिपरेत्याहुः ॥ २१-२२ ॥

---

अब अङ्क के उपयोगी काल को जो कि इसमें इतना काल अपेक्षित है, बतलाते हैं—

अनुवाद—नाट्य प्रयोग में आवश्यक कार्यों का बिना विरोध किये एक दिन में होने वाली बीज रूप अर्थ का आश्रय करके अङ्क को करना चाहिए ॥ २१ ॥

अनुवाद—बुद्धिमान् को कभी एक अङ्क के द्वारा बहुत से कार्यों की योजना करनी चाहिए, किन्तु वहाँ आवश्यक वस्तुओं का विरोध किये बिना आवश्यक कार्यों को करना चाहिए ॥ २२ ॥

अभिनव—इस प्रकार के अवान्तर प्रयोजन से युक्त बीज को अर्थात् अनुष्ठान के उपाय की वर्णनीयता को स्वीकार कर अङ्क को करना चाहिए, जिसका प्रकृष्ट प्रयोग रूप जो वर्णन है उसका सम्पाद एक दिन में १५ मुहूर्त में करना चाहिए, क्योंकि उतने समय तक जिनका विरोध ( निषेध ) नहीं किया जा सकता, ऐसे आवश्यक कार्य भोजनादि है । उसके बाद भी यदि प्रयोग करना हो तो प्रेक्षक

---

१. क. (टि० एकदिवसप्रयोज्य। एकदिवसप्रवर्त्यः ।
२. क. (टि०) कार्यस्त्वङ्कोऽत्र ।
३. ख. आश्रित्य । ४. क. (प.) प्रबन्धेषु ।
५. ख. (न.) योजयेद्वापि । ६. ख. ग. काव्यानि ।

रङ्गं तु प्रविष्टाः सर्वेषां भवति तत्र निष्क्रामः[1] ।
बीजार्थयुक्तियुक्तं[2] कृत्वा काव्यं यथार्थरसम् ॥ २३ ॥

न बहूनीह कार्याणि त्वेकाङ्के विनियोजयेत् ।
आवश्यकानां कार्याणां विरोधो हि तथा भवेत् ॥ २४ ॥

---

यान्यवश्यंभावेन कार्याणि भोजनादीनि तानि किं प्रत्यक्षेणैव दर्शनीयानीति यः शङ्कते तं प्रत्याह—रङ्गन्विति ।

तत्रेत्यावश्यके कर्तव्ये न चासमाप्तावुपक्षिप्तावान्तरकार्ये पात्रनिष्क्रमणमिति दर्शयति । बीजार्थेति उपक्षेपात्मनो बीजस्य यत्प्रयोजनं तेन या युक्तिः संबन्धस्तत्र युक्तमुपायभूतं कार्यं प्रयोजनानुसारि विशिष्टरससम्पदोपेतं विधाय तत्परिसमाप्तौ यवनिकया तिरोधानरूपं निष्क्रमणं दर्शनीयम् । बीजार्थयुक्तिरुत्पत्त्युद्घाटनोद्भेदगर्भ-निर्भेदफलसमानयनात्मेत्यन्ये ॥ २३ ॥

---

और प्रयोक्ताओं ( अभिनेताओं ) के सन्ध्या-वन्दन, भोजनादि कार्यों को अविरोधी स्थिति में करने चाहिए। इस प्रकार अनेक कार्यो का एक अङ्क में करने का निषेध भी किया है किन्तु कहीं पर स्वीकार भी किया है कि एक अङ्क में अनेक कार्य हो भी सकते हैं । किन्तु अन्य लोग तो समस्त आर्या को निषेध परक ही मानते हैं। अन्य आचार्य तो यहाँ अङ्केन में तृतीया विभक्ति मानते हुए समस्त आर्या को विधिपरक कहते हैं ॥ २१-२२ ॥

अत्यन्त आवश्यक जो भोजनादि है, उन्हें क्या प्रत्यक्ष अभिनय पर दिखाना चाहिये ? जो इस प्रकार जो आशङ्का करते हैं उनके प्रति कहते हैं—

अनुवाद—बीज भूत अर्थ ( प्रयोजन ) से युक्त यथार्थ ( उचित ) रस के अनुकूल कार्य करके रङ्ग में जो पात्र प्रविष्ठ हैं उन सभी का रङ्ग से निष्क्रमण होता हैं ॥ २३ ॥

अनुवाद—नियमानुसार एक अङ्क में बहुत से कार्यों की योजना नहीं करना चाहिए। क्योंकि ऐसा करने पर आवश्यक कार्यों से विरोध होता है ॥ २४ ॥

---

१. क-भ. यत्र निष्क्रामः ।

२. ख. ग. युक्तं ।

ज्ञात्वा [1]दिवसावस्थां क्षणयाममुहूर्तलक्षणोपेताम्[2] ।
[3]विभजेत्सर्वमशेषं पृथक्पृथक्काव्यमङ्केषु ॥ २५ ॥

---

एवमितिवृत्तनियममङ्के प्रदर्श्य तदितिवृत्तकालनियमं दर्शयति—

क्षणयाममुहूर्तानां यानि लक्षणानि कर्तव्यान्यस्मिन् क्षणे सन्ध्यानुष्ठेयेत्यादीनि तैरुपेतां दिवसस्यावस्थां ज्ञात्वा सर्वं कार्यं प्रत्येकं सर्वात्मना परिपूर्णरूपमत एवाशेषं विभजेत् विभागेन दर्शयेत् । नाडिकाभिरष्टधा दिनं रात्रिं विभज्य छायाप्रमाणेन वेति तेन एकदिवससंपादितमुपयोगि चेष्टितमङ्के बध्नीयादिति तात्पर्यम् ॥ २५ ॥

---

**अभिनव**—यहाँ अवश्य कर्त्तव्य कार्य के समाप्त हुए विना तथा उपक्षिप्त अवान्तर कार्य के प्राप्त किये विना निष्क्रमण नहीं होता है, इसलिये आवश्यक कर्त्तव्य की समाप्ति में ही निष्क्रमण होना चाहिए, इसको दिखाते हुए कहते हैं— बीजार्थेति । उपक्षेपात्मा बीज का जो प्रयोजन और उसकी युक्ति में जो उपायभूत कर्त्तव्य है उसे प्रयोजन के अनुसार विशिष्ट रस-सम्पदा से युक्त ( पूर्ण ) करके उसकी परिसमाप्ति होने पर यवनिका के द्वारा तिरोधान रूप निष्क्रमण दिखलाना चाहिए । अन्य आचार्य कहते हैं कि बीजभूत अर्थ की युक्ति, या उत्पत्ति, उद्घाटन, उद्भेद, गर्भ, निर्भेद एवं फल को समानयन है ॥ २३-२४ ॥

इस प्रकार इतिवृत्त के नियम को अङ्क में दिखलाकर अब उसी इतिवृत्त के काल के विषय में नियम को दिखलाते हैं—

**अनुवाद** क्षण, याम, मुहूर्त्त के लक्षणों से युक्त दिन की अवस्था को जानकर अवशिष्ट समस्त कार्यों का अङ्कों में अलग-अलग विभाग करना चाहिए ॥ २५ ॥

**अभिनव**—क्षण, याम, मुहूर्त्त जिन लक्षणों को करना है कि इस क्षण में सन्ध्या करनी चाहिए, इत्यादि । उनसे युक्त दिवस की अवस्था को जानकर सबको करना चाहिए जो सर्वात्मना प्रत्येक परिपूर्ण हो, तब सबका विभाग करके दिखलायें । नाड़िकाओं से दिन और रात को आठ प्रकार से विभक्त कर अथवा छाया के प्रमाण से विभाग करके एक दिवस सम्पाद्य उपयोगी अभिनय का अङ्क में निबन्धन करें, यह तात्पर्य है ॥ २५ ॥

---

१. ख. दिवसांस्तान् । २. ख. उपेतान् ।

३. ख. विभजेन्नाट्याभिसो ह्यङ्कच्छेदेऽर्थमभिवीक्ष्य ।

दिवसावसानकार्यं[1] यद्यङ्के नोपपद्यते सर्वम् ।
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधातव्यम्[2] ॥ २६ ॥
[3]विप्रकृष्टं तु यो देशं गच्छेत्कार्यवशानुगः ।
अङ्कच्छेदेऽथ संक्षेपान्निर्दिशेत्तं प्रवेशकैः ॥ २७ ॥

ननु तन्मध्ये तत्कार्यं मध्याह्नस्नानभोजनादि तद्दिवसमध्य एव वा यद्वृत्तं दूरस्थं दशरथमरणादि तत्कथं वाच्यमित्याह—दिवसावसानकार्यमिति ।

दिवसेऽवसानं समाप्तिर्यस्य तत् सर्वं कार्यं यद्यङ्के प्रत्यक्षेण प्रदर्शयितुं न युज्यते तदाङ्कच्छेदं कृत्वा प्रवेशकैः चूलिकाङ्कावताराङ्कमुखप्रवेशकविष्कम्भका इहाभिप्रेताः । तथा च कोहलोऽर्थोपक्षेपपञ्चकमुक्तवान् ॥ २६-२७ ॥

एवमङ्कलक्षणं वितत्याभिहितमर्धेनोपसंहरन्नर्धान्तरेणाङ्कसन्धानरूपस्य प्रवेशकस्य सामान्यलक्षणं दर्शयन्नार्यां पठति—सन्निहितनायक इत्यादि ।

जो कार्य मध्याह्न स्नान, भोजन आदि हैं, उन्हें दिन के मध्य में करना अथवा जो कार्य दूरस्थ है । जैसे—दशरथ-मरण आदि, उसे कैसे कहना चाहिये ? इस पर कहते हैं—

अनुवाद—जब कार्य दिन के अन्त में पूरा न हो सके तब अङ्कच्छेद करके प्रवेशकों के द्वारा उनका विधान करना चाहिए ॥ २६ ॥

अनुवाद—जो कार्य अपनी अवस्था के अनुसार बहुत दूर तक जाता हो, उसे अङ्कच्छेद में प्रवेश के द्वारा संक्षेप में दिखाये ॥ २७ ॥

अभिनव—दिन भर में जिसकी समाप्ति हो सके, उन सब कार्यों को यदि अङ्क में प्रत्यक्ष दिखाना युक्त नहीं है तो अङ्कच्छेद करके प्रवेशकों के द्वारा दिखाना चाहिए। यहाँ प्रवेशक पद से अङ्कावतार, अङ्कमुख, प्रवेशक एवं विष्कम्भक अभिप्रेत है और कोहल ने अर्थोपक्षेपक पञ्चक अर्थात् पाँच अर्थोपक्षेपकों को कहा है ।

## प्रवेशक

इस प्रकार अङ्क के लक्षण का विस्तार करके तथा कथित अर्थ का आधे से उपसंहार करके शेष अर्धभाग से अङ्कानुसन्धान रूप प्रवेशक के सामान्य लक्षण को दिखलाते हुए आर्या को पढ़ते हैं—'सन्निहित नायक' इत्यादि—

१. (टि०) यद्येकेन । २. ग. तद्विधेयं हि ।
२. अयं श्लोकः ख. पुस्तके नास्ति ।

सन्निहितनायकोऽङ्कः कर्तव्यो नाटके प्रकरणे वा ।
परिजनकथानुबन्धः प्रवेशको नाम विज्ञेयः[1] ॥ २८ ॥

---

नायकशब्देन तच्चरितसंभोगौ तौ सन्निहितौ प्रत्यक्षौ यत्रैकाङ्केऽपि रूपकेऽङ्को नायकचरितप्रत्यक्षताशून्यः कार्यः किंपुनरन्यत्रेति प्रकरणे नाटके वेत्युक्तम् ।

अन्ये त्वेतदुत्तरार्धेन संबन्धयन्तो रूपकान्तराणि प्रवेशकशून्यानि भवन्तीत्याचक्षते । परिजनकथानुबन्ध इति चतुर्णां लक्षणं सूतमागधादेश्चूलिकाङ्कस्य स्त्रीपुरुषादेर्वाङ्कमुखोपकरणस्य चेष्टीकञ्चुकादेर्वा प्रवेशकविष्कम्भोपयोगिनः परिजनस्य कथयैव परस्परश्लिष्टयानुबद्धोऽङ्कावतारः । यथोक्तम्—

अङ्कान्तर एवाङ्को निपतति यस्मिन्प्रयोगमासाद्य ।
नाट्यार्थकथायोगाद् विज्ञेयोऽङ्कावतारोऽसौ ॥ इति २८ ॥

---

अनुवाद—जहाँ पर नाटक और प्रकरण के अङ्क में नायक सन्निहित हो और परिजन को कथा का अनुबन्ध हो तो उसे 'प्रवेशक' समझने चाहिए ॥ २८ ॥

अभिनव—यहाँ पर नायक शब्द से उसके चरित और सम्भोग ये दोनों जहाँ सन्निहित अर्थात् प्रत्यक्ष हों, ऐसे एकाङ्क रूपक में अङ्क में नायक के चरित को प्रत्यक्ष दिखाना चाहिए, अर्थात् प्रत्यक्षता से शून्य अङ्क नहीं करना चाहिए। अन्यत्र नाटक और प्रकरण में कहना ही क्या ?

अन्य लोग तो इसे उत्तरार्द्ध से जोड़ते हुए रूपकान्तर प्रवेशकों से शून्य होते हैं, ऐसा कहते हैं । 'परिजनकथानुबन्धः' यह चारों अर्थोपक्षेपकों का लक्षण है। चूलिका के अङ्क सूत-मागधादि अङ्कमुख के उपकरण स्त्री-पुरुषादि अथवा प्रवेशक और विष्कम्भक, चेटी, कञ्चुकी आदि परिजनों के परस्पर श्लिष्ट कथा से अनुबद्ध होना 'अङ्कावतार' है । जैसा कि कहा गया है—

"जहाँ पर नाट्य के अभिनेय अर्थ सम्बन्धी कथा के योग के प्रयोग के अनुसार अङ्क के मध्य में ही जब अङ्क का निपतन होता है उसे अङ्कावतार समझना चाहिए ।"

---

1. ख. प्रवेशके वापि कर्तव्यः ।

[1]प्रकरणनाटकविषये पञ्चाद्या दशपरा भवन्त्यङ्काः ।
अङ्कान्तरसन्धिषु च प्रवेशकास्तेषु तावन्तः ॥ २९ ॥

---

तत्रायं प्रवेशकोऽङ्कार्थसन्धनाय भवतीति पूर्वोपक्षिप्तमङ्कं संख्यानुवाद-द्वारेण दर्शयति—प्रकरणनाटकविषय इति ।

सन्ध्यवस्थानपरिपूर्णोपनिबद्धा एवाङ्का उपक्रमोपसंहारवैतत्ये दश, कस्य-चित्संक्षेपेण षडित्येवम्, अन्यतो न्यूनाधिकत्वमनुचितमित्यर्थः । अङ्कमध्येषु तु सन्धानानि षट् चित्राणि संपादयितुं पञ्चविधः प्रवेशकः कार्यः अङ्कान्तरसन्धिष्विति निमित्तात् कर्मसंयोगे सप्तमी । अपिशब्देन प्रवेशक शब्दस्यावृत्तिः सूच्यते । चो हेतौ । प्रवेशकशब्दश्च महासामान्यवचनः पञ्चसु वृत्तः, इह तु मध्यमसामान्ये प्रवेशकविष्कम्भकद्वये वर्तते ॥ २९ ॥

---

जहाँ यह प्रवेशक अङ्क के अर्थ के अनुसन्धान के लिए होता है, अत एव पूर्व में उत्क्षिप्त अङ्क को संख्या के अनुवाद के द्वारा दिखाते हैं—प्रकरणेत्यादि ।

**अनुवाद—प्रकरण और नाटक में पाँच से दस अङ्क तक होते हैं और अङ्कान्तर सन्धियों में उतने ही प्रवेशक होते हैं ॥ २९ ॥**

**अभिनव**—सन्धि और अवस्थाओं से परिपूर्ण रूप से उपनिबद्ध रूपकों में होने वाले अङ्क उपक्रम और उपसंहार के विस्तार से दश और किसी रूपक के संक्षेप से छः अङ्क होते हैं । इससे कम और अधिक अङ्क होना अनुचित है । अङ्कों के मध्य में छः प्रकार के अनुसन्धानात्मक चित्रों को सम्पादन करने के लिए पाँच प्रकार के प्रवेशक करने चाहिए । 'अङ्कान्तरसन्धिषु' के निमित्त से कर्म के योग में सप्तमी है । 'अपि' शब्द से प्रवेशक शब्द की आवृत्ति सूचित होती है । 'सन्धिषु च' में 'च' शब्द हेतु में है । प्रवेशक शब्द महासामान्य का वाचक है, अतः पाँचों में रहता है । यहाँ पर तो मध्यम विष्कम्भक के अर्थ में और सामान्य प्रवेशक के अर्थ में है । दोनों में है ॥ २९ ॥

---

१. इतः प्रारभ्य पद्यद्वयं ख. पुस्तके नास्ति ।
ग. प्रकरणविषये...दशपरास्तया चैव ।
अङ्काः कर्तव्याः स्युर्नानारसभावसंयुक्ताः ॥ इति पाठः ।

[1]अनयोरन्तरविहितः प्रवेशकोऽर्थक्रियां[2] समभिवीक्ष्य ।
संक्षेपार्थः सन्धिष्वर्थानां संविधातव्यः ॥ ३० ॥

[3]अङ्कच्छेदं कृत्वा मासकृतं वर्षसंचितं वापि ।
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित् ॥ ३१ ॥

---

तद्यमर्थः—यस्मान्मासकृतं वर्षसञ्चितं वा यच्च तत्कार्यं सामाजिकानां हृदयगतं तस्मात् प्रवेशकविष्कम्भौ कर्तव्यौ। परिमितन्तु यदनुसन्धेयं तत्राङ्कमुखमल्पानुसन्धेये चूलिका, अल्पतमे अङ्कावतारः। तत्र केचित् वनवासादयोद्ध्याप्रवेशानन्तरं रामानुसन्धानमनुसन्धानीयं मा भूदित्याशयेन व्याचक्षते मासेन मासाभ्यां मासैर्वर्षेण वर्षाभ्यां वर्षैः इति कदाचित्तु वर्षादूर्ध्वंन्तु ये महाप्रभावाश्चिरातीतमप्यनुसन्दधते रामादेस्तेषां बहुतरो हि कालः प्रवेशकैर्वर्णनीयः। ये तु पुरुषप्रायास्तेषां वर्षादूर्ध्वमनुसन्धानं नैवास्ति। तथा च मार्गशीर्षी तैषीं चान्तरेण दीर्घकालयात्रा आवर्षारात्रान्मासाष्टकमुक्तेति सङ्गिरन्ते।

---

अनुवाद—अर्थ की क्रिया को देखकर इन दोनों के अन्तर्गत सन्धियों में अर्थों के संक्षेप के लिए प्रवेशक का विधान करना चाहिये ॥ ३० ॥

अनुवाद—एक मास तक अथवा एक वर्ष तक संचित घटना हो, उन्हें अङ्कच्छेद करके करना चाहिए। एक वर्ष के बाद का समय कभी भी नहीं होना चाहिये ॥ ३१ ॥

अभिनव—इस लिए यहाँ यह अर्थ है कि मास में सम्पाद्य अथवा वर्ष में सञ्चित जो है, वह कार्य सामाजिकों के हृदय में स्थित है इसलिए विष्कम्भक और प्रवेशक को करना चाहिए, किन्तु जो अनुसन्धेय परिमित है वहाँ अङ्कमुख होता है, अल्प अनुसन्धेय में चूलिका है और अल्पतम में अङ्कावतार होता है। यहाँ कुछ लोग कहते हैं कि वनवास से अयोध्या में प्रवेश करने के पश्चात् राम का अनुसन्धान अनुसन्धानीय न हो, इस आशय से व्याख्या करते हैं कि एक मास से, दो मासों से, बहुत से मासों से अथवा एक वर्ष से, दो वर्ष से, बहुत से वर्षों से करणीय है। कभी तो एक वर्ष के ऊपर रामादि के महाप्रभावशाली चिरकाल से अतीत बातों का अनुसन्धान करते हैं उनके बहुत से काल का वर्णन प्रवेशकों के द्वारा करने चाहिए। जो साधारण पुरुष हैं उनके कार्यों का वर्ष भर के ऊपर अनुसन्धान नहीं है। जैसाकि मार्गशीष और पौष मास को छोड़कर वर्षा की रात्रि तक आठ महीने की दीर्घकाल यात्रा कही है।

---

१. क. (टि०) अङ्कान्तरालसहितः। अङ्कान्तरालविहितः।
२. क-भ. अङ्कक्रियां। ३. ख. कुर्यात् नामकृतं। क-भ. अङ्कच्छेदे कार्यं।

एतच्चासत्, मासवर्षादीनां स्वीकृतनियतपरिमाणानां द्विवचनबहुवचनान्तत्वे वृत्त्ययोगस्य दर्शितत्वात् ।

सौर्यके मासजाते च परिमाणं स्वभावतः ।
उपाधिभृतमाश्रित्य संख्याभेदेन वर्तते ॥
वयस्त्विति परिच्छेदः क्रियतेऽपि न गम्यते ।
दृष्टो भेदावृते तत्र परिमाणमनर्थकम् ॥

इत्यादिबहु च वर्षादूर्ध्वमिति च निषेधः फल्गुफल एव स्यात् । तस्मादेकवचनान्तेनैव समासः । न च रामायणभारतादिचरितत्यागप्रसङ्गः कार्यग्रहणं ह्येतदर्थं मुनिना कृतं, यत्र हि यत्ननिष्पाद्यं सञ्चितं तदेव वर्षं गण्यते । वर्षान्तराणि तु तत्र विद्यमानान्यपि अविद्यमानकल्पानि । रामचरिते हि चतुर्दशवर्षाण्यरण्यनिवासो यद्यपि कार्यः, वर्षाणि त्रिचतुराणि भवन्ति यत्र मारीचवधसुग्रीवराज्यदानाद्यवान्तरकार्यं संभवति । तस्माद्वर्षादूर्ध्वमित्यनेन कार्यं वर्षद्वयादि निषिध्यत इत्येवं वर्षसहस्रायुषोऽपि वर्षशतान्तरालवृत्तचरितव्याख्यानेऽपि न किञ्चिद् दुष्यति । तेन पञ्चाङ्के नाटके पञ्च कार्यदिनानीति संक्षेपः, दशाङ्के तु दशेति विस्तरः ॥ ३१ ॥

किन्तु यह सब असत् है। मास, वर्ष आदि के रूप स्वीकृत नियत परिमाणों के द्विवचनान्तत्व और बहुवचनान्तत्व में वृत्तियों का याग नहीं दिखाई देता है।

"सौर मास में जो परिमाण स्वभावतः होता है वह उपाधियों का आश्रय लेकर संख्या के भेद से होता है। अवस्था है, इस प्रकार परिच्छेद किया जाता है, गम्य नहीं होता। वहाँ भेद के अतिरिक्त परिमाण निरर्थक है।"

इत्यादि बहुत वर्षों के ऊपर जो निषेध है, उसका फल निरर्थक ही होगा। इसलिए मास, वर्ष में एकवचनान्त से ही समास करना चाहिए। इस प्रकार शङ्का नहीं करनी चाहिये कि एकवचनान्त समास करने पर बहुकाल साध्य रामायण और महाभारत के चरितों के त्याग का प्रसङ्ग हो जायेगा। जहाँ पर सञ्चित कार्य वर्ष यत्न साध्य है उसी को वर्ष के रूप में गणना करते हैं। क्योंकि अन्य वर्ष रहते हुए भी नहीं के समान हैं। जैसे रामचरित में राम का चौदह वर्ष का यद्यपि वनवास है। तथापि मारीच के वध, सुग्रीव को राज्य प्रदान आदि अवान्तर कार्य सम्भव है वहाँ तीन-चार वर्ष ही होते हैं इसलिए एक वर्ष के ऊपर नहीं करना चाहिये। इसीलिये वर्षद्वय आदि का निषेध लिया जाता है और इसीलिये एक हजार वर्ष की आयु वाले के चरित्र को सौ वर्ष के अन्तराल में घटित करने में कोई दोष नहीं है। इसलिये पाँच अङ्क के नाटक में कार्य करने के लिए पाँच दिन संक्षेप हैं और दश अङ्क के नाटक में दस दिन होना विस्तार है॥ ३१ ॥

[1]यः कश्चित्कार्यवशाद्गच्छति पुरुषः प्रकृष्टमध्वानम् ।
तत्राप्यङ्कच्छेदः कर्तव्यः पूर्ववत्तज्ज्ञैः[2] ॥ ३२ ॥

[3]अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य विन्दूनाम् ।
प्रकरणनाटकविषये प्रवेशकः संविधातव्यः[4] ॥ ३३ ॥

---

अङ्कछेदे निमित्तान्तरमप्याह—यः कश्चित्कार्यवशादिति ।

कार्यवशात्कार्यस्य तत्रायतत्वात् यः पुरुषो नायकः सोऽनेकयोजनव्यहित-मध्वानं यदा गच्छति तदा प्रतिदिनं गमनं विश्रान्तिः शय्येत्येवमादि कथं रङ्गे प्रदर्श्यः, तदन्तेनाङ्कच्छेदः कार्यः । डिमादिनायकस्य तु दिव्यस्याकाशयानकादिना सर्वं युज्यते । अनायकपुरुषस्त्वविच्छिन्न एवाङ्के निष्क्रामति । ननु दिवसावसानकार्यं केनोपपद्यत इति आवश्यकाविरोधेनेत्यादिना यदुक्तं ततस्तिलमात्रेणाप्यधिकं वाच्यमस्य न लभ्यते वाक्यस्य । अत एवैतत् भट्टलोल्लटाद्यैर्न पठितमेव ।

---

अब अङ्कच्छेद के अन्य निमित्तों को कहते हैं—

अनुवाद—यदि कोई पुरुष कार्यवश लम्बे रास्ते पर जाता है तो वहाँ पर भी तत्ववेताओं को पूर्ववत् अङ्कच्छेद करना चाहिये ॥ ३२ ॥

अनुवाद—'पूर्व अङ्क के अनुसार बिन्दु के अर्थ को संक्षेप में करके प्रकरण और नाटक में प्रवेशक का विधान करना चाहिए ॥ ३३ ॥

अभिनव—कार्यवश अर्थात् कार्य आयत (विस्तृत) होने से जहाँ पुरुष नायक है वह जब अनेक योजन लम्बे मार्ग पर जाता है तब प्रतिदिन का गमन, मध्य में विश्राम एवं शयन आदि कार्यों को रङ्ग के मध्य में कैसे दिखाना चाहिए? इसलिये अन्त में अङ्कच्छेद करना चाहिये । डिम आदि रूपकों में दिव्य नायक के आकाशयान आदि के द्वारा सब युक्तिसङ्गत है । नायक से भिन्न पुरुष तो अविच्छिन्न अङ्क में यदि निकल जाता है तो दिन के अवसान में होने वाला कार्य विना पात्र के किस प्रकार उपपन्न होता है? इस प्रकार 'आवश्यकाविरोधेन' इत्यादि जो कहा गया है अर्थात् जब किसी आवश्यक कार्य का विरोध नहीं होता तभी पात्र का निष्क्रमण होता है उससे तिल मात्र भी अधिक इस वाक्य का अर्थ नहीं मिलता अन्यथा नहीं, इत्यादि । इसीलिए भट्टलोल्लट आदि इसे नहीं पढ़ा है ।

---

१. क-य. यदि । २. क-प. पूर्वतन्त्रज्ञैः ।

३. क (टि०) अङ्कान्तराधिकारी संक्षेपमधिकृत्य विन्दूनाम् ।

४. ख. प्रवेशको भवति काव्येषु ।

उपाध्यायास्त्वाहुः—नेदं निमित्तान्तरं अपि तु पूर्वं तावत्कथितं यद्यङ्के नोपपद्यत इति तस्यैवोदाहरणमनयैवार्यया दर्शितम्। यथा नायकस्य प्रकृष्टाध्वगमनमिति पूर्ववदिति तदहमिति भवति पूर्वलक्षणाद्दोऽङ्कच्छेदोऽयमिति यावत्। अपि शब्द उदाहरणान्तरमपि सूचयति। अङ्कार्थसन्धानप्रयोजनस्य प्रवेशकस्य स्थानं वाच्यम्।

विषयं चाह अङ्कान्तरानुसारीति अङ्कमध्ये भवतीति यावत्। अङ्कान्तरं पूर्वाङ्कान्तरमनुसरति तस्य पश्चाद्भवतीत्यर्थः। प्रत्यङ्कान्तं यो बिन्दुः अनुसन्धानाभिधायिवाक्यं यत्संक्षिप्तं प्रयोजनं तदधिकताकरणं विस्तारमुद्दिश्येति वाच्यमुक्तं, प्रकरणे नाटके चावश्यं प्रवेशकस्तस्यावश्यमुत्तमकृतिविषये उपदेशाय प्रवृत्तोऽपरिमितेनोपायेन भूयस्तरावान्तरकार्यं प्रत्युत्पत्तिबहूनां चामात्यादीनामपि स्वकार्यनिरूपणाय प्रवेशकः, अन्यत्र रूपके परिमितकार्योपदेशात् न तथा प्रवेशकोपयोग इति वितनिष्यामः॥ ३२॥

उपाध्याय जी तो कहते हैं कि यह निमित्त नहीं है, अपितु पहले कहा जा चुका है कि यदि कोई कार्य अङ्क में उपपन्न नहीं होता इत्यादि। उसी का उदाहरण इस आर्या के द्वारा दिखाया गया है। जैसे नायक का प्रकृष्ट अध्वगमन, पूर्ववत् इत्यादि। इसलिए होता है कि यह अङ्कच्छेद पूर्वकथित लक्षण के योग्य है। अपि शब्द उदाहरणान्तर को सूचित करता है। अङ्कार्थ के सन्धान के प्रयोजनार्थ प्रवेशक का स्थान कहना चाहिए।

अब विषय को कहते हैं कि अङ्कान्तर के अनुसार आदि भाव यह है कि यह अंक के मध्य में होता है। अगला अंक पूर्व अंक का अनुसरण करता है अर्थात् वह उसी के पश्चात् होता है। प्रत्येक अंक के अन्त में जो बिन्दु है तथा जो अनुसन्धान करने वाले वाक्य के प्रयोजन का संक्षिप्त तत्त्व है वह अधिकताकरण रूप विस्तार के उद्देश्य से कहा गया है। इसलिए नाटक और प्रकरण में प्रवेशक अवश्य रहता है क्योंकि अपरिमित उपाय से उत्तम प्रकृति के विषय में उपदेश के लिये प्रवृत्त होता है। अतः भूयस्तर अवान्तर कार्य के विषय में प्रत्युत्पन्न मति वाले बहुत अमात्य आदि के स्वकार्य के निरूपण के लिये प्रवेशक होता है। अन्यत्र रूपकों में परिमित कार्य का उपदेश होने से वहाँ उस प्रकार प्रवेशकों का उपयोग नहीं होता, यह आगे विस्तार से कहेंगे॥ ३२-३३॥

**नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः ।**
**प्राकृतभाषाचारः प्रयोगमाश्रित्य[1] कर्तव्यः ॥ ३४ ॥**

---

**अथ विष्कम्भकाद्भेदमस्य दर्शयन् प्रवेशकशब्दोऽतिविशेषशब्दवाच्यपि भवतीति दर्शयति—नोत्तममध्यमपुरुषैरिति ।**

**उत्तमावयोऽपि भवन्ति परिजनास्तन्निवृत्यर्थमेतत् । उदात्तं संस्कृतवचनं तस्य निषेधः । अन्ये त्वाहुः—उदात्तं स्वात्मकार्यविश्रान्तं वचनं निषिध्यते, "आणत्तंमि भट्टिदारि आये" इत्यादिना हि स्वकृत्यं प्रधानोपयोग्येव दृश्यते, न स्वतन्त्र । तत्र प्राकृती भाषा आचारश्च व्यवहारः प्राकृतः एव । प्रयोगमाश्रित्येति क्वचित्तु प्रयोगवशात्संस्कृतभाषाचारो विष्कम्भकेऽपि कर्तव्य इति दर्शयति ॥ ३४ ॥**

---

अब विष्कम्भक से प्रवेशक का भेद दिखाते हुए प्रवेश शब्द अतिविशेष शब्द का भी वाचक है, इस बात को दिखाते हैं—

**अनुवाद—नाट्यप्रयोग का आश्रय लेकर जहाँ उत्तम तथा मध्यम पुरुषों का आचार हो, न उदात्त वचनों में व्यवहार हो, ऐसे अभिनय करें। प्राकृत भाषा का उच्चारण करना चाहिए ॥ ३४ ॥**

**अभिनव**—परिजन भी उत्तम होते हैं अथवा उत्तम परिजन होते हैं, आशंका की निवृत्ति के लिए यह कथन है। उदात्त का अर्थ संस्कृत वचन है और उसका निषेध है। अन्य लोग तो कहते हैं कि उदात्त का अर्थ अपने कार्य से विश्रान्ति होने वाले वचन का निषेध है। 'आज्ञप्तास्मि भर्तृदारिकया' इत्यादि के द्वारा उनका अपना कृत्य प्रधान के उपयोगी दिखाई देता है, स्वतन्त्र नहीं। वहाँ पर प्राकृती भाषा और आचार-व्यवहार प्राकृत ही है। प्रयोग का आश्रय करके। कहीं तो प्रयोगवश संस्कृत भाषा का आचार विष्कम्भक में भी करना चाहिए, यह दिखाते हैं ॥ ३४ ॥

---

१. ख. प्रयोगयासाद्य कर्तव्यः ग. प्रयोशको नाम विज्ञेयः ।

'कालोत्थानगतिरसौ व्याख्यासंरम्भकार्यविषयाणाम् ।
अर्थाभिधानयुक्तः[2] प्रवेशकः स्यादनेकार्थः[3] ॥ ३५ ॥

---

संक्षेपार्थमधिकृत्येति यदुक्तं तदेव विभजति—कालोत्थानगतिरसाविति ।

कालोदयस्य गतिरवगमो यतः कालोदयसूचकः कश्चित् प्रवेशकः । यथा—"अज्ज वसन्तमहूसवे सबहुमाणमाहूय" इत्यादि ( रत्ना: १ ) ।

अर्थाभिधानेति प्रत्येकं संबध्यते, तेन व्याख्यादीनां विषयान्तानां चतुर्णां योऽर्थस्तदभिधाने युक्तस्तदुद्देशेनप्रवृत्त इति पञ्चप्रकारः प्रवेशकः इति यावत् । व्याख्यायत इति व्याख्या ।

---

अनुवाद—संक्षेप का आश्रय लेकर यह जो कहा था, अब उसी का विभाग करते है—

अनुवाद—जहाँ पर काल के उत्थान ( उदय ) की गति ( ज्ञान ) हो तथा जहाँ पर व्याख्या, संरम्भ, कार्य एवं विषय का अर्थाभिधान हो ऐसे अनेक अर्थो वाला 'प्रवेशक' होता है ॥ ३५ ॥

अभिनव—काल के उत्थान ( उदय ) की गति ( ज्ञान ) जिससे हो, ऐसा कालोदय का सूचक कोई 'प्रवेशक' होता है । जैसे—रत्नावली में "आज वसन्तोत्सव में बड़े आदर के साथ बुलाकर......" इत्यादि ।

यहाँ अर्थाभिधान का प्रत्येक के साथ सम्बन्ध है, इसलिये व्याख्या से लेकर विषय पर्यन्त चारों का जो अर्थ है उसके अभिधान से युक्त, उस उद्देश से प्रवृत्त, इस प्रकार पाँच प्रकार का 'प्रवेशक' है, व्याख्यान करना ही व्याख्या है । जैसे किसी प्रवेशक के द्वारा गूढ अर्थ का व्याख्यान किया जाता है ।

---

१. ब. कालार्थान्तरसङ्गव्यत्यासारम्भ कार्यविषयाणाय ।

२. ब. न. अर्थाभिधानपूर्वः ।

३. क-म. प्रवेशको नाम विज्ञेयः ।

यथा तापसवत्सराजे अमात्यप्रणिधिः "मामिज्जई असवासएहि हालाहलस्स पमावसंकिवा ( भ्राम्यते पार्श्वकैः प्रमावशङ्कितैः । )" तापस-अ-४ ( इत्यादि ), अनेन हि नातिव्यवधानोक्तं पद्मावतीगृहे च यद्वासवदत्तास्थापनं तस्य गूढं प्रयोजनं व्याख्यातम् । संरम्भः कार्यविशेषः विषयः अभिप्रायस्तस्यार्थं उपायान्वेषणादि तदभिधानयुक्तः प्रवेशको, यथा नृत्तपा ( वा ) रे गति "उपस्थितमिदं तत्प्रयोजन" मित्यादि । अनेन वासवदत्तामपहृत्योज्जोयनीं निनीषोर्वत्सराजस्य प्रयोजकत्वं प्राप्तानाममात्यानां संरम्भः शालङ्कायनेनोक्तः । कार्यं तु यदाधिकारिकमित्यादि ( १९-३ ), तस्यार्थः पञ्चाङ्गस्यानुष्ठानम् । तद्यथा—कर्मणामारम्भोपायः, पुरुषद्रव्यसंपद्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिरिति तथाभूताभिधानयुक्तश्च प्रवेशको बाहुल्येन तापसवत्सराजप्रतिभाचाणक्यमुद्राराक्षसादिषु । विषयस्तु भाविनोऽङ्कावतारस्येतिवृत्तं तस्यार्थो विशेषरूपः, तदभिधानेन युक्तः प्रवेशको यथा नागानन्दे द्वितीयेऽङ्के चेटिकाद्वयेन मदनावस्थेतिवृत्तस्य विशेषवर्णनं चन्दनलतागृहादि दर्शितम् । अन्यान्यपि प्रवेशकस्य प्रयोजनानि सन्ति । न त्वेत्परिगणनमित्याह—अनेकार्थं इति ॥ ३५ ॥

---

जैसे—तापसवत्सराज में अमात्य का प्रणिधि ( दूत ) "प्रसाद से शङ्कित पार्श्वक भ्रमण करते हैं" इत्यादि व्याख्या करते हैं। इससे अत्यन्त व्यवधान से रहित कहे हुए पद्मावती के घर में जो वासवदत्ता का स्थापन किया गया है, उसका गूढ़ प्रयोजन व्याख्यात है। संरम्भ का अर्थ कार्य-विशेष है, विषय अभिप्राय है, उसका अर्थ उपायान्वेषण इत्यादि है, उस अभिधान से युक्त प्रवेशक है। जैसे—तापसवत्सराज में नृत्त को समाप्ति पर "गतिवश यह उसका प्रयोजन उपस्थित हो गया" इत्यादि। इससे शालङ्कायन ने वासवदत्ता का अपहरण कर उज्जयिनी ले जाने के इच्छुक वत्सराज को प्रेरणा देने वाले अमात्यों का संरम्भ कह दिया। कार्य तो आधिकारिक है, इत्यादि। उसका अर्थ है पञ्चाङ्ग का अनुष्ठान। जैसे—(१) कर्मों के आरम्भ का उपाय अर्थात् किस उपाय के आश्रय से कर्मों का अनुष्ठान हो। (२) पुरुष और द्रव्य की सम्पत्ति की परिपूर्णता (३) देश और काल का विभाग (४) विनिपात का प्रतीकार (५) कार्य की सिद्धि। इस प्रकार के अभिधानों से युक्त प्रवेशक अधिकतर तापसवत्सराज, प्रतिभाचाणक्य, मुद्राराक्षस आदि में है। विषय तो भावी अङ्कावतार का इतिवृत्त है उसका अर्थ विशेष रूप। उसके अभिधान से युक्त प्रवेशक जैसे नागानन्द के द्वितीय अंक में दो चेटियों के कामावस्था रूप इतिवृत्त का। विशेष वर्णनीय चन्दनलता गृह को दिखा दिया। इनके अतिरिक्त प्रवेशक के और भी प्रयोजन है, केवल परिगणना नहीं है, इसीलिए अनेकार्थ कहा है ॥ ३५ ॥

[1]बह्वाश्रयमपि [2]कार्यं प्रवेशकैः संक्षिपेच्च सन्धिषु वा ।
बहुचूर्णपदैर्युक्तं जनयति खेदं प्रयोगस्य ।। ३६ ।।

---

नन्वेवंभूतोऽर्थो यः प्रवेशके प्रदर्श्यते समासेन विस्तरेण वेत्याशंक्याह—बह्वाश्रयमपीति ।

सन्धि चिकीर्षव इति अङ्कार्थसन्निवेशनिमित्तं ये प्रवेशकाः पञ्चाप्युक्ताः चूलिकादयस्तैर्वाङ्काश्रयं बहुवक्तव्यं विततमपि कार्यं संक्षिपेत् यावत्सन्धानोपयोगि तावत्तत्र ब्रूयात् । यतो, बहुभिर्गद्यगतैरसमस्तैः पदैरसंस्कृतप्रायैः खेदो भवति । अनेन प्रवेशकादौ उत्कलिकाप्रायं बहुतरसमाससङ्कीर्णमभिनयशाखाङ्गत्रोटनकारित्वात् समाससंशयेनार्थानिश्चायकत्वाच्च न कर्तव्यमित्यपि दर्शयति ।

दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम् ।
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधातव्यम् ।। १८-२६ ।।

---

इस प्रकार का कौन सा अर्थ है जो प्रवेशक में संक्षेप या विस्तार से दिखलाया जाता है, इस प्रकार आशंका करके कहते हैं—

**अनुवाद**—बहुतों के आश्रय पर निर्भर कार्य को अथवा सन्धियों में विद्यमान कार्य को प्रवेशकों के द्वारा संक्षेप में करना चाहिये । अनेक चूर्णपदों से युक्त प्रयोग का विस्तार खेद को उत्पन्न करता है ।। ३६ ।।

**अभिनव**—सन्धि-विधान करने का इच्छुक अर्थात् जो नाटकादि में मुखादि सन्धियों की योजना करने का इच्छुक हो उसके लिए अङ्कार्थ के सन्निवेश के लिए जो चूलिका आदि पाँच प्रवेशक कहे गये हैं उनके द्वारा अंकों में कथनीय विस्तृत कार्य को संक्षेप में कहे जितना जहाँ सन्धान के उपयोगी हैं, वहाँ उतना कहे, क्योंकि गद्य में असमस्त ( समास-रहित ) असंस्कृत अनेक पदों के कथन से सामाजिकों को खेद होता है । इनसे यह सूचित किया गया है कि नाट्य उत्कलिका-प्राय गद्य का प्रयोग नहीं करना चाहिए, क्योंकि बहुतर समास से संकीर्ण होने से वह अभिनय की शाखा के अंकों को तोड़ने वाला है और समास में संशय होने से अर्थ का अनिश्चायक भी है ।

"जो दिन के अवसान में पूरा होने वाला कार्य पूरा न हो सके तो उसे अङ्कच्छेद करके प्रवेशकों के द्वारा दिखाना चाहिए ?"

---

१. बह्वाश्रयमप्यर्थं प्रवेशकै संक्षिपेत्प्रबन्धेषु अङ्केषु संयुक्तो जनयति खेदं प्रयोगस्य ।

२. ब. ब्रह्वाश्रयमप्यर्थं ।

यत्रार्थस्य समाप्तिर्न [1]भवत्यङ्के प्रयोगबाहुल्यात् ।
[2]वृत्तान्तस्वल्पकथैः प्रवेशकैः सोऽभिधातव्यः[3] ॥ ३७ ॥

---

इति यदुक्तं तत्रानुपपत्तिर्बहुप्रकारा भवतीति दर्शयितुमाह—यत्रार्थस्य समाप्तिरिति । यत्प्रत्यक्षप्रयोज्यमपि प्रयोगवशादङ्के समाप्तं भवति तत्प्रवेशकेन कर्तव्यम्, बहुतज्ञत्वं प्रयोगस्य बहुमानास्पदत्वम् ॥ ३६ ॥

तदयमत्रार्थः—यत्र दिवसकार्याण्यनेकानि तत्र तन्मध्ये यत्सुन्दरप्रयोगकमुपदेशोपयोगि च तत्प्रत्यक्षेण दर्शनीयम् । अन्यत्सर्वं प्रवेशकेन वृत्तान्तार्थां तदवशिष्टेनेति वृत्तनिर्वाहफला अल्पा संक्षिप्ता कथा यस्य प्रवेशकस्य । एवं प्रत्यक्षप्रयोज्यप्रवेशकोपयोगो दर्शितः ॥ ३७ ॥

अन्यत्रापि दर्शयति—युद्धं राज्यभ्रंश इत्यादि ।

---

अनुवाद—जहाँ पर अङ्क में प्रयोग को बहुलता से अर्थ की समाप्ति नहीं होती, वहाँ वृत्तान्त घटित स्वल्प कथा वाले प्रवेशकों के द्वारा सम्पन्न करना चाहिए ॥ ३७ ॥

इस प्रकार जो कहा गया है, उसमें बहुत प्रकार की अनुपपत्तियाँ हैं, इस बात को दिखाने के लिए कहते हैं—जहाँ पर अर्थ को समाप्ति है अर्थात् प्रत्यक्ष में प्रयोज्य होने पर भी अंक में समाप्त नहीं होता है, उसे प्रवेशक के द्वारा सम्पन्न करना चाहिए । प्रयोग की बहुलता बहुमान का आस्पद है ।

अभिनव—इसका अर्थ यह भी है कि जहाँ पर दिन भर में पूरे होने वाले कार्य अनेक हैं वहाँ मध्य में ही सुन्दर प्रयोग वाले और उपदेश के योग्य कार्यों को प्रत्यक्ष दिखाना चाहिए। और शेष कार्य को प्रवेशकों के द्वारा पूरा करें। अवशिष्ट अर्थ का फल है, केवल इतिवृत्त का निर्वाह करना। अतः प्रवेशक में संक्षिप्त कथा रहती है, इस प्रकार प्रत्यक्ष प्रयोग के योग्य प्रवेशक की उपयोगिता दिखलाया गया है ॥ ३६-३७ ॥

---

१. ख. भवेदङ्के ।

२. ख. बहुवृत्तान्तोऽल्पकथैः प्रवेशकैः संविधातव्यः ।

३. 'ख' पुस्तके इत्यनन्तरं श्लोकत्रयी अधिका दृश्यते ।

युद्धं राज्यभ्रंशो मरणं [1]नागरोपरोधनं चैव ।
[2]प्रत्यक्षाणि तु नाङ्के प्रवेशकैः संविधेयानि ॥ ३८ ॥

---

युद्धे शस्त्रसंपातस्य बाहुल्यं, राज्यभ्रंशेऽपि पतनमरणादेः, नगरोपरोधे बलस्य यन्त्रसुरङ्गाविदानस्य ।

इह केचिदाहुः मरणं द्विविधम् । किञ्चिदन्यसंबन्धिन्या क्रियया संपाद्यं यथा चक्रेण दैत्यस्य शिरश्छेदं, किञ्चिदन्यसंबन्धिक्रियानैरपेक्ष्येणैव व्याध्यभिघातादिप्रभवम् । तत्राद्यस्यैव निषेधः क्रियते । एतदर्थमेव कृतग्रहणं तद्वचन्यक्रियावाचकम् । न च तद्युद्धेन संगृहीतम् । अयुद्धे पूर्वस्याप्यशङ्कितशिरश्छेदस्य दर्शितत्वादिति । त एवं प्रष्टव्याः—इदं मरणं प्रयोज्यमिदमप्रयोज्यमिति न तावदत्र विषयविभागे निदानमुत्पश्यामः । मृतस्य कथं निष्क्रमणं कथं वावस्थानं, तता नाट्योपयोगिसमस्तध्रुवागानादिप्रक्रियाविलोपः सामाजिकानां विरसताप्रतिपत्तिरिति तु सर्वत्र मरणं समान तस्मादङ्के मरणप्रयोज्यमेव । ननु मरणानुभाववर्णनेनेदानीं किं कृत्यं, युद्धवीररौद्रादावप्येतदनुभाववर्णने किं प्रयोजनं तदनुभावापरिज्ञाने प्रवेशकैरपि कथं वर्णनं स्यादिति चेन्मरणेऽपि समः समाधिः ।

---

अभिनव —अन्यत्र भी उन्हें दिखाते हैं—

अनुवाद—युद्ध, राजभ्रंश, मरण, नगर का उपरोध आदि अङ्क में प्रत्यक्ष नहीं दिखलाना चाहिए, उन्हें प्रवेशक के द्वारा प्रस्तुत करना चाहिये ॥ ३८ ॥

अभिनव —युद्ध में शस्त्रों के सम्पात का राजभ्रंश में भी पतन, मरण आदि का, नगर के उपरोध में सेना का और सुरङ्ग आदि के निर्माण का बाहुल्य होता है ।

इस विषय में कुछ लोग कहते हैं कि मरण दो प्रकार का होता है—प्रथम किसी अन्य सम्बन्धी क्रिया से सम्पाद्य, जैसे चक्र से दैत्य के शिर का छेदन (काटना) और दूसरा किसी अन्य सम्बन्धी क्रियाओं से निरपेक्ष, जैसे व्याधि, चोट आदि से होने वाला । उनमें प्रथम मरण का ही निषेध किया गया है । इसीलिए 'कृत' का ग्रहण है, क्योंकि वह अन्या क्रिया का वाचक है । इसलिए युद्ध में उसका संग्रह नहीं

---

१. क. (टि०) समरस्यरोधनं ।
२. क-भ. अप्रत्यक्षकृतानि ।

किञ्च यत्र प्रत्यापत्तिशून्यं मरणं तत्प्रतिक्रियाविलोपकत्वान्न प्रयोज्यम्। यत्तु क्वचित्तत्प्रत्यापत्तिः यथा जीमूतवाहनस्य तदेव क्षणमात्रानिश्चितचेष्टात्मकं प्रयोज्यमेवेति सोऽपि मरणानुभावसाक्षात्करणस्य विषयः। यद्वाहिनीनामपि साटोपपरिक्रमणं शास्त्रवर्णनादिप्रारम्भरूपमदः प्रयोज्यमपि तु तन्निर्वाहो न प्रदर्शनीयः। एतदेव, तन्न प्रत्यक्षेण प्रयोज्यं, प्रवेशकैरिति उपक्षेपपञ्चकमध्यादन्यतमेनोपक्षेपेणेत्यर्थः। अन्ये त्वाहुः—व्याधिजमभिघातजं च मरणं रङ्गे प्रयोज्यं, अपुनर्जन्मनिष्क्रान्तिरहितप्रकृतिविधेयेति ॥ ३८ ॥

किया गया है। युद्ध के अभाव में अपूर्व और अशकिङ्कृत शिरः छेद दिखाया गया है। उनसे यह पूछना चाहिये कि यह मरण प्रयोज्य है और यह अप्रोज्य है, इस विषय के विभाग में कारण नहीं देख रहे हैं। क्योंकि मरे हुए का निष्क्रमण कैसे होगा और कैसे अवस्थान होगा? क्योंकि इससे नाट्य के उपयोगी समस्त ध्रुवा, गान आदि क्रियाओं का लोप होगा और सामाजिक के लिए विरसता आदि की प्रतिपत्ति होगी, इस प्रकार मरण सर्वत्र समान होगा, अतः रङ्ग में मरण का प्रयोग नहीं दिखाना चाहिए। अब तो प्रश्न है कि मरण के अनुभावों के वर्णन से इस समय क्या प्रयोजन है और युद्ध, वीर, रौद्र आदि रसों में उनके अनुभावों के वर्णन से क्या प्रयोजन है और मरण के अनुभाव के जाने विना प्रवेशकों के द्वारा उनका वर्णन कैसे होगा? इसका उत्तर होगा कि यह समाधि है तो वही उत्तर वहाँ भी होगा कि वह भी समाधि होगी। अतः दोनों जगह समान समाधि है।

और भी जहाँ पर मरण प्रत्यापत्ति से शून्य है, उस मरण को क्रिया-विलोपक होने से नहीं दिखाना चाहिये। और जहाँ कहीं प्रत्यासत्ति होती है, वहाँ पुनर्जीवन होता है जैसे, जीमूतवाहन का। उसे क्षण भर के लिए चेष्टा से शून्य होने से दिखाना चाहिये। तथा वह मरण के नियमों का साक्षात्कार का विषय है। और जो वाहिनी का साटोप परिक्रमण है तथा शास्त्र-सम्पात के वर्णन का प्रारम्भ रूप है वह प्रयोज्य होते हुये भी उसके निर्वाह का प्रदर्शन नहीं करना चाहिये। इसी बात को मूल में स्पष्ट कर दिया गया है कि निर्वाहपर्यन्त युद्ध को और अचिर प्रत्यासत्ति शून्य मरण का प्रत्यक्ष नहीं दिखाना चाहिए। 'प्रवेशकैः' पद के कथन का अर्थ है कि उपक्षेप पञ्चक में से किसी एक के उपक्षेप से। अन्य लोग तो कहते हैं कि व्याधि (रोग) और अभिघात से होने वाला मरण रङ्ग में दिखाना चाहिये। क्योंकि वह पुनर्जन्म और निष्क्रान्ति से रहित प्रकृति वाला होने से विधेय है ॥ ३८ ॥

**अङ्के प्रवेशके च[1] प्रकरणमाश्रित्य नाटके वापि ।**
**न [2]वधः कर्तव्यः स्याद्योऽभ्युदयी नायकः ख्यातः[3] ॥ ३९ ॥**

---

**अथ सर्वथा यद्विषयं मरणं नाख्येयं, तद्दर्शयति अङ्के प्रवेशके चेति ।**

**प्रकरणे नाटके वा नायकस्य प्रत्यक्षेण वा वर्णनया वा न मरणं वर्णनीयम् । अङ्क इति प्रत्यक्षेण, प्रवेशक इति वर्णनया ।**

**ननु प्रत्यक्षेण ये न कस्यचिन्मरणं प्रयोज्यमिच्छन्ति तन्मते अङ्कग्रहणं किमर्थं, तत्राहुः वधशब्देन (न) मरणमुच्यते, अपि तु परकृतघातदानादि तत्रान्यघातदानाद्यपि प्रत्यक्षेण रङ्गे प्रदर्श्यते । अचिरप्रत्यापत्तौ समाश्वासे यस्तु नायकस्तस्य ख्यातस्य न घातदानादि प्रदर्शनीयम् । अन्ये तु ख्यातं नायकं पताकानायकादिक मिच्छन्ति ॥ ३९ ॥**

---

अब यहां पर मरण का सर्वथा नहीं कहना चाहिए, उसे दिखाते हैं—

**अनुवाद—नाटक और प्रकरण के अङ्क और प्रवेशक में अभ्युदयशाली नायक का वध नहीं दिखाना चाहिये ।**

**अभिनव—**प्रकरण अथवा नाटक नायक का प्रत्यक्ष रूप से अथवा वर्णना के द्वारा मरण का वर्णन नहीं करना चाहिए । अङ्क का निर्देश प्रत्यक्ष से और प्रवेशक का वर्णना से है ।

**अभिनव—**अब प्रश्न होता है कि जो प्रत्यक्ष रूप में किसी का मरण नहीं दिखाना चाहते, उनके मत में अङ्क का ग्रहण किस लिए है ? इस पर कहते हैं कि वध शब्द से मरण नहीं कहा है, अपितु वध शब्द से परकृत घात-दानादि का ग्रहण है अतः अन्य कृत घातदानादि प्रत्यक्ष रूप से रङ्ग में दिखाया जाता है । अचिर प्रत्यापत्ति समाश्वासन में जो नायक हैं। उसके घात-दानादि को भी नहीं दिखाना चाहिए । अन्य लोग तो ख्यात नायक के पताका नायक आदि चाहते हैं ।

---

१. क-भ॰ वा ।

२. क-म॰ न च बन्धः ।

३. क. (टि॰) यस्तत्र स नायकः ख्यातः । क-भ तत्रापि हिनायमस्यैव ।

[1]अपसरणमेव कार्यं [2]ग्रहणं वा सन्धिरेव वा योज्यः ।
[3]काव्यश्लेषैर्बहुभिर्यथारसं नाट्यतत्त्वज्ञैः ॥ ४० ॥

अपसरणमिति पलायनम् यथोक्तं—अशक्ये सर्वमुत्सृज्यापगच्छेत् । अदृष्टा हि जीवतः पुनरावृत्तिः इति । ग्रहणं वा कार्यं सनिबन्धनमिति । यथा वासवदत्ता-नृत्तधारे ( पारे ? ) वत्सराजस्य । सन्धिरेवेति सन्धानं, यदुक्तम्—

प्रवृत्तचक्रेणाक्रान्तो राज्ञः बलवताऽबलः ।
सन्धिनोपनमेत्……… । ( अर्थशास्त्रे ७-३ अध्या )

अपसरणबन्धनसन्धीनां विषयविभागसूचनायाह । प्रधानरसानुसारेण यत्काव्यं यत्काव्यार्थस्तस्य श्लेषा बन्धनाद्युपपत्तयः तैरुपलक्षितमपसरणादिकार्यमिति यावत् । कार्यविशेषैरिति केषांचित्पाठः ॥ ४० ॥

अनुवाद—अभ्युदयशाली नायक का अपसरण ( भाग जाना ), या पकड़ा जाना अथवा सन्धि कर लेना आदि का नाट्यतत्त्ववेत्ता को रस के अनुसार बहुविध काव्य-श्लेष के द्वारा प्रयोग करना चाहिये ॥ ४० ॥

अभिनव—अपसरण का अर्थ है कि भाग जाना । जैसा कि कहा गया है कि अशक्य होने पर सब कुछ छोड़कर चला जाना चाहिये, क्योंकि मरे हुये का पुनरावर्त्तन नहीं देखा गया है अथवा किसी कारणवश उसका ग्रहण किया जा सकता है । जैसे—वासवदत्ता में नृत्त के समापन में वत्सराज का निग्रह । सन्धि का अर्थ सन्धान है । जैसा कि कहा गया है कि—

जैसे कोई दुर्बल राजा बलवान् राजा के द्वारा सेना आक्रान्त हो अर्थात् सेना के घेरे में आ जाय तो सन्धि ( सुलह ) करके झुक जाना चाहिए ।

अपसरण ( भाग जाना ), बन्धन और सन्धि ( सुलह ) के विषय-विभाग को सूचित करने के लिये कहते हैं कि प्रधान रस के अनुसार जो काव्यार्थ है उसका श्लेष अर्थात् बन्ध आदि उपपत्ति है, उससे उपलक्षित अपसरण आदि क्रियाओं को करना चाहिए, कुछ लोग कहते हैं कि काव्य श्लेष की जगह कार्यविशेष पाठ है ॥ ४० ॥

१. क. (टि०) अपसरणं । अवतरणं ।
२. क. (टि०) सोथर्वा ग्रहणमेव वा निश्चयम् ।
३. क-न. बहुभिः काव्यविशेषैः प्रवेशकैः सूचयेद्वापि ।
क. भ. तैस्तैः काव्यश्लेषैः प्रवेशकैः नाट्यतत्त्वज्ञैः ।

न महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा।
[1]ये तत्र कार्यपुरुषाश्चत्वारः पञ्च वा ते स्युः ॥ ४१ ॥

अथ यद्यदप्रयोज्यं प्रत्यक्षेण तस्य सामान्यद्वारकं संग्रहं दर्शयितुमाह—न महाजनपरिवारमिति।

महाजनः संख्यया तेन परिवारः परिवारणं यत्र यत्र वस्तुनि तन्नाटकमिति तद्युक्तं तत् प्रकरणम्। वाग्रहणादन्यदपि न कार्यम्। एतदुक्तं भवति—बहुतरपुरुष-साध्यं यत्किञ्चित्तद्यथा समुद्रे सेतुबन्धनमित्यादि तत्सर्वं प्रत्यक्षेण न प्रदर्शनीयम् तथा महतो जनस्य पितापुत्रश्वश्रूस्नुषागुरुशिष्यादेः परितो वरणं व्रीडातङ्कादियोगेन यत्र जायते वैरस्यं वा महाजनस्य सभ्यस्य च यत्र परिवरणं चित्तसंकोचः तत्सर्वं परिचुम्बनाद्यपि न प्रत्यक्षं प्रयोज्यम्। यदि च प्रत्यक्षप्रयोज्यं तत्र पञ्च कार्यपुरुषाः यदि चत्वारः प्रकरीपतकादिरूपा तेषां च परिवारस्वभावास्तावन्त एवेति। यदि प्रकर्षस्तदा दशाष्टौ वा रङ्गे प्रविष्टा भवन्ति। ततोऽधिकेषु त्वभिनय चतुष्टयं सम्यगविभावनीयं स्यात् देवयात्रापरिदृश्यमानजनसमाजवत् ॥ ४१ ॥

जो प्रत्यक्ष रूपसे दिखाने योग्य नहीं है उसका सामान्य संग्रह दिखाते हैं—

**अनुवाद**—नाटक और प्रकरण को परिवार के अधिक जनों से युक्त नहीं करना चाहिये। और वहाँ चार-पाँच से अधिक संख्या नहीं होनी चाहिये ॥ ४२ ॥

**अभिनव**—संख्या के कारण महाजन है। अतः जिस-जिस वस्तु में उससे परिवारण होता है वह नाटक है तथा उससे युक्त प्रकरण है। 'वा' ग्रहण से यह बतलाया गया हैं कि महाजन से संख्याधिक्य का कारण तो होता ही है, इसके अतिरिक्त अन्य भी जो कुछ हैं उसे भी नहीं करना चाहिए। यह कहा जाता है कि अनेक पुरुषों से साध्य जो कुछ हैं। जैसे—

समुद्र में सेतुबन्धन आदि। यह सब प्रत्यक्ष रूप से नहीं दिखाना चाहिए। महाजन अर्थात् पिता, पुत्र, सास, ससुर, बहू, गुरु, शिष्य आदि परिजनों का चारों ओर से वरण अर्थात् लज्जा एवं आतङ्क के कारण जहाँ वैरस्य है अथवा महाजन अर्थात् सभ्य का जहाँ परिवरण अर्थात् चित्त-संकोच है वह सब परिचुम्बन आदि को प्रत्यक्ष रूप से नहीं दिखाना चाहिए। यदि प्रत्यक्ष दिखाना भी हो तो चार-पाँच प्रकरी और पताकागत तथा उनके जो परिवार हो उतने हो अथवा उससे भी प्रकर्ष बतलाना हो तो आठ-दस कार्य पुरुषों को रङ्गमञ्च पर प्रवेश होना चाहिये। क्योंकि इससे अधिक रहने पर चारों प्रकार के अभिनयों का सम्यक् रूप से अवबोध नहीं होगा। क्योंकि वह केवल देवयात्रा में दिखाई देने वाला जन-समुदाय हो जायेगा।

---

१. ग. येनात्र ख. ये तत्र कार्याः।

[1]कार्यं [2]गोपुच्छाग्रं कर्तव्यं [3]काव्यबन्धमासाद्य ।
ये चोदात्ता भावास्ते सर्वे पृष्ठतः कार्याः ॥ ४२ ॥

---

एवमङ्के प्रवेशकस्वरूपं वितत्याभिहितम्, अधुना तत्समुदायस्य नाटकस्य यादृग्रूपं तद्दर्शयति—कार्यं गोपुच्छाग्रमिति ।

क्रमसूक्ष्माङ्गमिति केचित् । अन्ये तु यथा गोपुच्छाग्रे केचिद्वालाः ह्रस्वाः केचिद्दीर्घाः । एवं कानिचित्कार्याणि मुखसन्धौ परिसमाप्तानि कानिचित् प्रतिमुख-पर्यन्तानि कानिचिदवमर्शावसानानि पराणि निर्वहणपर्यवसायीनि, तद्यथा रत्नावल्यां प्रमोदोत्सवो मुखसन्धावेव निष्ठित इत्यादि यावत् बाभ्रव्यवृत्तान्तौ मुखोपक्षिप्तो निर्वहणनिष्ठां प्राप्तः । साररूपाश्च पदार्थाः पर्यन्ते कर्तव्याः ॥ ४२ ॥

---

अभिनव—इस प्रकार प्रवेशक का स्वरूप विस्तार से कहकर अब उस समुदाय रूप नाटक जैसा रूप है उसे दिखलाते हैं—

अनुवाद—काव्य-बन्ध की अपेक्षा करके गोपुच्छ के अग्रभाग से समास कार्य को छोटा या बड़ा करना चाहिए । और जो उदात्त भाव हैं उन्हें पीछे करना चाहिये ॥ ४२ ॥

अभिनव—कुछ लोग गोपुच्छाग्र का अर्थ करते है—जिसमें अङ्क क्रमशः सूक्ष्म हों । अन्य लोग तो कहते हैं कि जैसे गाय के पूछ के कुछ बाल छोटे होते हैं और कुछ दीर्घ होते हैं, उसी प्रकार नाटक और प्रकरण में कुछ कार्य मुख सन्धि में समाप्त होते हैं और कुछ कार्य प्रतिमुख सन्धि में समाप्त होते हैं और कुछ कार्य अवमर्श सन्धि में समाप्त होते हैं, शेष कार्य निर्वहण सन्धि पर्यन्त होते हैं । जैसे रत्नावली नाटिका में मदन महोत्सव मुख सन्धि में ही निष्ठित है और बाभ्रव्य का वृत्तान्त मुख सन्धि में उपक्षिप्त होकर निर्वहण सन्धि में निष्ठित होता है । भाव यह कि सारभूत तत्त्वों को समाप्ति तक रखना चाहिए ॥ ४२ ॥

---

१ क. काव्यं ।
२. क. (टि०) गोपुच्छाग्रे । गोपुच्छाभंत् ।
३. क. (टि०) काव्यबन्धमुत्पाद्यनाटकादिषु प्राज्ञैः ।

सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् ।
[1]निर्वहणे कर्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः ॥ ४३ ॥

---

अत्र हेतुमाह सर्वेषां काव्यानामिति।

नाटकादीनां निर्वहणेऽद्भुतरसः कर्तव्यः। एवं हि तानि काव्यानि रसभावानां युक्त्या परस्परसंबद्धानि युक्तानि भवन्ति नान्यथा एकवाक्यतां च विना कः प्रबन्धार्थः। तथा च शृङ्गारवीररौद्रैः स्त्रीरत्नपृथिवीलाभशत्रुक्षयाः करुणादिभिस्तन्निवृत्तिरितीयता क्रमेण लोकोत्तरासंभाव्यमनोरथप्राप्तौ भवतिव्यमद्भुतेन। असाधारणलाभो हि यदि फलत्वेन कल्प्यतेऽवश्यं क्रियायाः किञ्चिदस्त्येव फलमात्रमिति किं तत्रोपायव्युत्पादनायत्तेनेत्यद्भुतावसानत्वमकार्यम्, केन व्युत्पाद्यजनस्यैवं बुद्धिर्जायते—अहो दुष्करमप्युपायक्रमेण सिद्ध्यति" इति, "उपायेन वर्तितव्यं" इति ॥ ४३ ॥

---

सारभूत पदार्थों को समाप्ति तक क्यों करना चाहिए ? इस पर कहते हैं—

**अनुवाद**—नाना प्रकार के रस, भाव, परिपूर्ण सभी काव्यों के निर्वहण सन्धि में नाट्य तत्त्ववेत्ता अद्भुत रस की योजना करें ॥ ४३ ॥

**अभिनव**—नाटक आदि काव्यों के निर्वहण सन्धि में अद्भुत रस की योजना करनी चाहिए। इस प्रकार वे काव्य रस और भावों की युक्ति से परस्पर सम्बद्ध एवं युक्त हो जाते हैं, अन्यथा उपयुक्त नहीं होते, क्योंकि परस्पर एकवाक्यता के विना प्रबन्धार्थ कैसा ? अतः शृङ्गार, हास्य, वीर, रौद्र रसों में क्रमशः स्त्रीरत्न लाभ, पृथ्वी लाभ, तथा शत्रु का क्षय तथा करुण, भयानक, वीभत्स आदि उनकी निवृत्ति। इस प्रकार क्रमशः लोकोत्तर असम्भाव्य मनोरथ की प्राप्ति होने पर निर्वहण सन्धि में अद्भुत रस दिखाना चाहिये। असाधारण लाभ की यदि फल के रूप में कल्पना करें तो क्रिया का अवश्य कोई फल होगा। अतः उपायों के व्युत्पत्ति के अधीन होने से अद्भुत में अवसान नहीं करना चाहिये। ऐसी स्थिति में किस साधन से व्युत्पाद्य जन की ऐसी बुद्धि होगी। "अहो! उपायों के क्रम से (अनुष्ठान से) दुष्कर कार्य भी सिद्ध हो जाते हैं"। अतः 'उपायों को करना चाहिये' ॥ ४३ ॥

---

१. क. (टि०) निर्वहणं कर्त्तव्यम् ।

नाटकलक्षणमेतन्मया समासेन कीर्तितं विधिवत्[1] ।
प्रकरणमतः परमहं लक्षणयुक्त्या प्रवक्ष्यामि ॥ ४४ ॥

यत्र कविरात्मशक्त्या[2] वस्तु शरीरं च [3]नायकश्चैव ।
औत्पत्तिकं प्रकुरुते प्रकरणमिति तद् बुधैर्ज्ञेयम्[4] ॥ ४५ ॥

---

पूर्वोक्तमुपसंहरति वक्तव्यान्तरं नाटकलक्षणमेतदित्यादि ।

क्वचिल्लक्ष्यं प्रसिद्धम्, इह तु लक्षणबलेन तस्यैव यत्नप्रसाध्यत्वमिति दर्शयति । लक्षणयुक्त्या लक्षणद्वारेण युक्तिस्तया हृदयानुप्रवेशनया हेतुभूतया संपाद्ययेत्यर्थः ॥ ४४ ॥

तत्र प्रकरणस्य सभेदस्य सलक्षणं नामनिर्वचनं चाह–यत्र कविरात्मशक्त्येति ।

वस्त्विति साध्यं फलं, शरीरमिति तदुपायं वस्त्वादिकं काव्याभिधेयमात्मशक्त्या प्रकुरुते यत्काव्येन तत्प्रकरणमिति बुधैर्ज्ञेयमिति संबन्धः ॥ ४५ ॥

---

**अभिनव**—अब पूर्वोक्त का उपसंहार करते हैं और अन्य वक्ताओं पर आक्षेप करते हैं—

**अनुवाद—इस प्रकार मैंने संक्षेप में नाटक के लक्षण को विधिवत् कहा है। इसके बाद अब लक्षण की योजना करते हुये प्रकरण को कहूँगा ॥ ४४॥**

**अभिनव**—कहीं पर लक्ष्य प्रसिद्ध है। यहाँ पर तो लक्षण के बल से वह प्रयत्न साध्य है, इसके दिखाते हैं—लक्षण रूप द्वार से जो युक्ति (योजना) है, उसके द्वारा अर्थात् वस्तु के साध्य अर्थ को हृदय में प्रवेश कराने में हेतुभूत सम्पाद्य युक्ति से ॥ ४४ ॥

अब भेदों के साथ प्रकरण के लक्षण-सहित नाम निर्वचन करते हैं—

**अनुवाद—जहाँ पर कवि अपनी शक्ति (प्रतिभा) से वस्तु (इतिवृत्त) शरीर और नायक की औत्पत्तिक कल्पना करता है उसे विद्वानों को प्रकरण समझना चाहिए ॥ ४५ ॥**

**अभिनव**—यहाँ पर साध्य फल को ग्रहण करते हैं। शरीर का अभिप्राय फल के उपाय से है। काव्य के अभिधेय वस्तु आदि को जो आत्मशक्ति से काव्य के द्वारा प्रकर्षयुक्त करता है, विद्वानों को उसे प्रकरण समझना चाहिये ॥ ४५ ॥

---

१. क. (टि०) प्रकीर्त्तितं विविधम् ।
२. ख. ग. बुद्धया । ३. ख. ग. नाटकं ।
४. ख. प्रकरणमेतद् बुधैर्ज्ञेयम् ।

[1]यदनार्षमथाहार्यं काव्यं प्रकरोत्यभूतगुणयुक्तम् ।
उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् ॥ ४६ ॥

यत्र समुत्पाद्यं न भवति तत्र योऽनुत्पाद्योऽशः न कुत्रस्थो ग्राह्य इति दर्शयितुमाह—यदनार्षमित्यादि।

अनार्षमिति पुराणादिव्यतिरिक्तबृहत्कथाद्युपनिबद्धं मूलदेव चरितादि। आहार्यमिति पूर्वकविकाव्यद्वाहरणीयं समुद्रदत्तचेष्टितादि।

ननु च तत्रांशे कविकृतत्वाभावात्कथं प्रकरणवाचोयुक्तिरित्याह—उत्पन्ने पूर्वसिद्धे बीजं वस्तु च यत्र तादृशमपि तत्, यदिति वस्तुभूतैः बृहत्कथादौ काव्यान्तरे वा प्रसिद्धैर्गुणैर्युक्तं प्रकरोति तदिति तस्माद्धेतोरेतदपि प्रकरणम्। तेन बृहत्कथाविसिद्धस्य मूलदेवादेरधिकावापं कविशक्तिर्यदा विधत्ते तदा प्रकरणम्। एवं पूर्वकविसमुत्प्रेक्षितसमुद्रदत्तचेष्टितादिवर्णनेऽपि अधिकावापं विदधत्कविः प्रकरणं कुर्यादिति तात्पर्यम् ॥ ४६ ॥

अभिनव—जहाँ पर सनुत्पाद्य कुछ भी न हो, वहाँ अनुत्पाद्य अंश कहीं से भी नहीं लेना चाहिये। इस बात को दिखलाने के लिए कहते हैं—

अनुवाद—जहाँ पर कथावस्तु अनार्ष हो अर्थात् ऋषि-प्रणीत ग्रन्थों से न लिया गया हो, आहार्य अर्थात् कल्पित हो, अभूतपूर्व गुणों अर्थात् नवीन कल्पनाओं से युक्त हो, तथा जहाँ बीज और वस्तु कृत्रिम हो, उसे भी 'प्रकरण' समझना चाहिए ॥ ४६ ॥

अभिनव—अनार्ष का अर्थ है जो पुराणादि से भिन्न बृहत्कथा आदि में उपनिबद्ध मूलभूत देवचरित। आहार्य का अर्थ है प्राचीन कवियों के काव्य से उद्धृत (आहृत)। जैसे समुद्रदत्त की चेष्टायें आदि।

अब प्रश्न होता है कि जहाँ वस्तु उत्पाद्य नहीं है वहाँ अनुत्पाद्य अंश में कवि के द्वारा कृतत्व का अभाव होने से प्रकृष्ट करण रूप वाणी की युक्ति कैसे सङ्गत होगी? इस पर कहते हैं कि वहाँ पर उत्पन्न अर्थात् पूर्वसिद्ध काव्य में बीज और वस्तु जैसा रहे वहाँ 'यत्' पद का अभिप्राय है कि बृहत्कथा आदि में प्रसिद्ध वस्तुभूत गुणों से युक्त जो प्रकर्ष करता है, वह भी प्रकरण है। अतः कवि शक्ति के द्वारा बृहत्कथा आदि में प्रसिद्ध मूलभूत देवादि के सम्बन्ध में अधिक आवाप करता है वह भी प्रकरण होता है। इस प्रकार पूर्व कवियों के द्वारा समुत्प्रेक्षित समुद्रदत्त की चेष्टाओं के वर्णन में भी प्रकृष्ट स्वरूप की योजना करके कवि प्रकरण की योजना करें ॥ ४६ ॥

१ ग यदनर्थमथाहार्यं काव्यं कुरुते प्रभूतगुणयुक्तम् ।
ख. यदनायकहार्यकार्यं प्रकरोत्यद्भूतगुणयुक्तम् ।

**यन्नाटके[1] मयोक्तं वस्तु शरीरं[2] च वृत्तिभेदाश्च ।**
**तत्प्रकरणेऽपि [3]योज्यं सलक्षणं सर्वसन्धिषु तु ॥ ४७ ॥**

---

नन्वस्येति वृत्तस्य एवं योजनेत्याशंक्य पूर्वोक्तमेवातिदेशद्वारेण स्मारयितुमाह—यन्नाटके मयोक्तमिति ।

नानाविभूतियुक्तमृद्धिविलासादिभिरित्यादिनायकफलत्वमुक्तं तत् वस्तुशरीरमिति "अङ्कप्रवेशकाढ्यं" "वृत्तिभेदाश्चेति" "नानारसभावचेष्टितैर्बहुधा । सुखदुःखोत्पत्तिकृत" मिति, सलक्षणमित्यङ्कप्रवेशकयोर्लक्षणयुक्तमिति ॥ ४७ ॥

केचित्तु शरीरग्रहणेन गतार्थं तस्माल्लक्षणमित्यङ्कपरिमाणमङ्कान्तरसन्धानहेतुषु च प्रवेशकेषु यत्प्रयोज्यमुक्तं 'दिवसावसानकार्यं यद्यङ्के नोपपद्येत' । यद्यङ्के नोपपद्येत इत्यादि तत्सर्वं प्रकरणेऽपि योज्यम् इति । अतिदेशायातमतिप्रसङ्गं वारयत्यार्याद्वयेन विप्रवणिगित्यादिना ।

---

अब प्रश्न होता है कि इस इतिवृत्त की योजना कैसे करें ? इस प्रकार आशङ्का करके पूर्वोक्त को ही अतिदेश के द्वारा स्मरण कराने के लिये कहते हैं—

**अनुवाद—नाटक के लिए मैंने जिन वस्तु, शरीर और वृत्तियों के भेदों को कहा है, प्रकरण में भी लक्षण सहित समस्त सन्धियों में भी उनकी योजना करनी चाहिए ॥ ४७ ॥**

**अभिनव**—ऋद्धि, विलास आदि से नाना विभूति युक्त है, इत्यादि से नायक को जो फलवान् कहा गया है, 'वस्तुशरीरम्' से अङ्क को प्रवेशक से युक्त होना कहा गया है, 'वृत्तिभेदाश्च' नाना रस, बहुविध भाव और चेष्टाओं से युक्त होना तथा सुख एवं दुःख की उत्पत्ति करने वाला तथा 'सलक्षणम्' से अङ्क एवं प्रवेशकों को लक्षणादि से युक्तता कही गई है ॥ ४७ ॥

**अभिनव**—कुछ लोग कहते हैं कि शरीर के ग्रहण से गतार्थ हो गया था, तो फिर 'सलक्षण' क्यों कहा है ? कहते हैं कि सलक्षण अर्थात् अङ्क का परिणाम और अङ्कान्तर के सन्धान के हेतु प्रवेशकों में जो प्रयोज्य कहा गया है "दिवसावसानकार्यं यद्यङ्के नोपपद्येत" अर्थात् "यदि दिन के अवसान कार्य पूरा न हो सके तो अङ्कच्छेद करके प्रवेशकों के द्वारा उसका विधान करना चाहिए" इत्यादि । उन सबकी प्रकरण में भी योजना करनी चाहिये । इस प्रकार अतिदेश से प्राप्त अतिप्रसङ्ग को 'विप्रवणिक्' आदि दो आर्याओं से वारण करते है ।

---

१. क-न. प्रयोक्तं ।        २. क. ब. शरीरं राजाश्रयोपेताम् ।
३. ग कार्यं केवलमुत्पाद्यवस्तु स्यात् । ख. योज्यं केवलमुत्पाद्यवस्तुस्यात् ।

[1]विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ।
चरितं [2]यन्नैकविधं ज्ञेयं तत्प्रकरणं नाम ।। ४८ ।।
नोदात्तनायककृतं न दिव्यचरितं न राजसम्भोगम्[3] ।
बाह्यजनसंप्रयुक्तं [4]तज्ज्ञेयं प्रकरणं तज्ज्ञैः ।। ४९ ।।

---

सचिवो मन्त्री, आमात्योऽधिकृतः सार्थवाहस्तावत्पण्यानामाहर्ता तद्देशक्रय-विक्रयकृतो वणिजोऽन्य एव । नैकविधमित्यनेकरसयुक्तमित्यर्थः 'नैकरसान्तरविहित' इति तदतिदेशमात्रमिति सूचितम् ।। ४८ ।।

प्रख्यातोदात्तेति प्रसक्तं निषेधति नोदात्तेति ।

---

अनुवाद—जहाँ पर विप्र, वणिक्, सचिव, पुरोहित, अमात्य और सार्थवाह ( व्यापारी या सेनापति ) के अनेक प्रकार के चरित का वर्णन किया जाता है, उसे 'प्रकरण' समझना चाहिए ।। ४८ ।।

अभिनव—सचिव का अर्थ मन्त्री, अमात्य का अर्थ अधिकारी, सार्थवाह का अर्थ आहर्त्ता, देश में क्रय-विक्रय करने वाला वणिक् कहलाता है। इस सार्थवाह से भिन्न होता है। 'नैकविधम्' का अर्थ है अनेक रसों से युक्त 'नैकरसान्तरविहित' से अतिदेश मात्र सूचित होता है ।। ४८ ।।

प्रख्यातोदात्त इत्यादि से प्रसक्त का निषेध करते हैं—

अनुवाद—जहाँ पर उदात्त नायक न हो, न दिव्यपात्र का चरित हो और न राजसम्भोग का वर्णन हो और जिसमें बाह्य ( बाहरी ) पात्र हों, उसे विद्वान् लोग 'प्रकरण' समझें ।। ४९ ।।

---

१. क-भ. सचिवश्रेष्ठब्राह्मण ।

२. ख. यदनेकविधं तज्ज्ञेयं प्रकरणं नाम ।

३. ग. राजसम्भोगः ।

४. ख. विज्ञेयं ग. ज्ञेयं तत्प्रकरणं नाम ।

एवंविधस्तु कार्यो व्यायोगे दीप्तकाव्यरसयोनिः ।
वक्ष्याम्यतः परमहं लक्षणमुत्सृष्टिकाङ्कस्य ॥ ९३ ॥

---

यथा समवकार इति द्वादशेत्यर्थः । तावदङ्कपरिमाणशङ्कामतिदेशात् प्रत्यासत्त्या प्रसक्तां वारयितुमाह—एकाङ्क एवेति । एवकारेणैकाहचरित विषयत्वान्न्यायप्राप्तमेवात्रैकाङ्कत्वमित्याह ॥ ९१ ॥

ननु प्रख्यातनायकशब्देन किमत्र गृहीतमित्यप्रतिप्रसङ्गं शमयति—न चेति । चो भिन्नक्रमः । दिव्यैर्देवैः नृपैः ऋषिभिश्च नायकैः न निबद्धोऽयं भवतीत्यर्थः ।

ननु कस्मादयं व्यायोग इत्याह—युद्धं नियुद्धेति व्यायामे युद्धप्राये नियुध्यन्ते पुरुषा यत्रेति व्यायोगः इत्यर्थः । नियुद्धं बाहुयुद्धं संघर्षः शौर्यविद्याकुलरूपादिकृता स्पर्धा ॥ ९२ ॥

दीप्तं काव्यमोजोगुणयुक्तं, दीप्तरसाद्या वीररौद्राद्याः तदुभयं योनिः कारणमस्य ॥ ९३ ॥

---

**अभिनव**—जैसे समवकार में बारह नायक होते हैं। अतिदेश की प्रत्यासत्ति से प्रसक्त होने वाली अङ्क परिमाण की शङ्का का निराकरण करने के लिए कहते हैं कि इसमें एक अङ्क होने चाहिए। यहाँ एवकार से एकाह चरित की विषयता होने से यहाँ एकाङ्कत्व न्याय प्राप्त है, इस प्रकार कहा है।

**अभिनव**—अब प्रख्यात नायक शब्द से यहाँ किसका लिया गया है ? इस अतिप्रसङ्ग का शमन करते हैं—न चेति ! यहाँ चकार का क्रम भिन्न है। यह दिव्य देवता, नृप, ऋषि नायकों से निबद्ध नहीं होता।

**अभिनव**—पुनः प्रश्न होता है कि इसे व्यायोग क्यों कहते हैं ? कहते हैं कि इसमें युद्ध, नियुद्ध और युद्धप्राय होता है, यहाँ पुरुष नियुद्ध ( बाहुयुद्ध ) करते हैं—इसलिए इसे व्यायोग कहते हैं। नियुद्ध का अर्थ बाहुयुद्ध है। और संघर्ष का अर्थ शौर्य, विद्या, कुल तथा रूप आदि से होने वालीस्पर्द्धा है ॥ ९०-९२ ॥

**अनुवाद**—इस प्रकार दीप्त काव्य और दीप्त रस दोनों जिसकी योनि है, उस व्यायोग की रचना करनी चाहिए। इसके बाद अब उत्सृष्टिकाङ्क का लक्षण कहूँगा ॥ ९३ ॥

**अभिनव**—दीप्त काव्य का अभिप्राय है ओजोगुण से युक्त काव्य और दीप्त रस आदि अर्थात् रौद्र, वीर आदि रस ये दोनों गुण और रस जिसकी योनि ( कारण ) है ॥ ९३ ॥

[1]प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात् ।
दिव्यपुरुषैर्वियुक्तः [2]शेषैर्युक्तो भवेत्पुंभिः ॥ ९४ ॥
[3]करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च[4] ।
[5]स्त्रीपरिदेवितबहुलो निर्वेदितभाषितश्चैव[6] ॥ ९५ ॥
[7]नानाव्याकुलचेष्टः सात्त्वत्यारभटीकैशिकीहीनः ।
[8]कार्यः काव्यविधिज्ञैः सततं ह्युत्सृष्टिकाङ्कस्तु ॥ ९६ ॥

---

रौद्राद्यनन्तरं "रौद्रस्य चैव यत्कर्म स ज्ञेयः करुणः ( ६-४५ )" इत्युक्तत्वात्तत्प्रधानमुत्सृष्टिकाङ्कमेतदनन्तरमाह—प्रख्यातवस्तु विषय इति ।

---

अभिनव—रौद्र रस के अनन्तर "रौद्र का जो कर्म है उसे करुण रस समझना चाहिए" इस कथन के अनुसार करुण रस प्रधान उत्सृष्टिकाङ्क को इसके बाद कहते हैं—

अनुवाद—उत्सृष्टिकाङ्क की कथावस्तु प्रख्यात होनी चाहिए और कभी-कभी अप्रख्यात भी हो सकती है। यह दिव्य पुरुष को छोड़कर शेष सभी प्रकार के पुरुषों से युक्त होता है। इसमें प्रायः करुण रस होने से युद्ध और उद्धत प्रहार इसमें नहीं होते। तथा इसमें स्त्रियों के विलाप अधिक होने से निर्वेदयुक्त भाषण अधिक होते हैं। इसमें व्याकुलमय अनेक चेष्टायें होती हैं, इसमें सात्त्वती, आरभटी और कैशिकी वृत्तियाँ नहीं होती। इस प्रकार नाट्यतत्त्ववेत्ताओं को उत्सृष्टाङ्क की रचना करनी चाहिए ॥ ९४-९६ ॥

---

१. क-प. तेष्वप्रख्यातं वस्तु वा । क-भ. अप्रख्यातोऽपि वा क्वचित्कार्यं ।
२. ख. ग घ. शेषैरन्यैर्भवेत् । क-प. समन्वितः पुंभिः ।
३. क-द. करुण रसार्थप्रायो ।
४. क-भ. बद्धोद्धतप्रहारश्च ।
५. ख. घ. स्त्री देवन ···· ।
६. ख. घ. निर्वदितवाक्यभाषाश्च ।
७. क. (ब.) नानाध्याकुलचेष्टः ।
८. ब. कर्तव्योऽभ्युदयान्तस्तज्ज्ञैरुत्सृष्टिकाङ्कस्तु ।

प्रख्यात भारतादियुद्धे विषये निमित्ते सति यत्तत्करुणबहुलं चेष्टितं वर्ण्यते तत्ख्यातं स्त्रीपर्ववृत्तान्तवत्, माभूदित्यप्रख्यातग्रहणेनोक्तम् । तेनोभयोपादानस्य परस्परविरुद्धार्थत्वादकिञ्चित्करत्वं नाशङ्कनीयम् ॥ ९४ ॥

निवृत्तयुद्धा उद्धतप्रहाराः पुरुषा यस्मिन् । परिदेवितं दैवोपालम्भात्मनिन्दारूपमनुशोचनं यत्र । निर्वेदितानि श्रुतेषु निर्वेदो जायते तादृंशि भाषितानि यत्र व्याकुला चेष्टा भूमिनिपातविवर्तिताद्याः । सात्त्वत्यारभटीकैशिकीहोन इति समाहारद्वन्द्वान्तरद्वन्द्वगर्भस्तृतीयासमासः । उत्क्रमणीया सृष्टिर्जीवितं प्राणा यासां ता उत्सृष्टिकाः शोचन्त्यः स्त्रियस्ताभिरङ्कित इति तथोक्ताः । वृत्तिभिरुत्सृष्टत्वादित्यन्ये तदा द्वित्वं च त्रित्वमुद्देशस्यैकदेशेन । अयमङ्क इति निर्दिष्टो वृत्तानुरोधात् । इह च करुणरसबाहुल्यादेव देवैर्वियोगः रौद्रबीभत्सयानकसंबन्धो दिव्ययोगे न भवत्यपि तु करुणयोगः ॥ ९६ ॥

---

अभिनव—प्रख्यात अर्थात् महाभारतादि युद्ध के निमित्त होने पर जो करुण बहुल चेष्टायें वर्णित करते हैं, वह स्त्रीपर्व के वृत्तान्त की तरह ख्यात न हो, यह बात प्रख्यात शब्द के ग्रह से कही गई है। इसलिए उभयापादान के परस्पर विरुद्धार्थ होने से अकिञ्चित्करत्व को शङ्का नहीं करनो चाहिए।

'निवृत्तयुद्धोद्धत प्रहार' का अर्थ है—युद्ध से एवं उद्धत प्रहारों से निवृत पुरुष जहाँ हों । 'स्त्रोपरिदेवितबहुलः' का अर्थ है परिदेवित अर्थात् देवोपलम्भात्मक आत्मनिन्दा रूप अनुशोचन जहाँ हो। 'निर्वेदितभाषित' का अर्थ है जिसके सुनने पर निर्वेद हो जाय, ऐसे भाषण जहाँ हों। 'व्याकुलचेष्टः' अर्थात् व्याकुल करने वाली चेष्टायें भूमि पर गिरना एवं लोट-पोट करना आदि। 'सात्त्वत्यारभटीहीनः' में समाहार द्वन्द्व से भिन्न द्वन्द्वगर्भ समास है। 'उत्सृष्टिकाङ्क' का अर्थ है उत्क्रमण करने योग्य सृष्टि अर्थात् जीवित प्राण जिनके वे उत्सृष्टिका हैं अर्थात् शोक करने वाली स्त्रियाँ जिनमें अङ्कित हों, वह उत्सृष्टिकाङ्क होता है। जो वृत्तियों से उत्सृष्ट है वह उत्सृष्टिकाङ्क है, ऐसा अन्य लोग कहते हैं । ऐसी स्थिति में वृत्तियों का द्वित्व या त्रित्व उद्देश के एकदेश के अनुसार होगा। वृत्त के अनुरोध से यहाँ 'यह अङ्क है' यह निर्देश है। उत्सृष्टिकाङ्क में करुण रस का बाहुल्य होने से देवताओं से वियोग होता है। रौद्र, बोभत्स, भयानक रस का सम्बन्ध दिव्यों के योग में नहीं होता, अपितु करुण रस का योग रहता है ॥ ९४-९६ ॥

यद्दिव्यनायककृतं काव्यं संग्रामबन्धवधयुक्तम् ।
तद्भारते तु वर्षे कर्तव्यं काव्यबन्धेषु ॥ ९७ ॥
[1]कस्माद्भारतमिष्टं वर्षेष्वन्येषु देवविहितेषु[2] ।
हृद्या सर्वा भूमिः शुभगन्धा काञ्चनी[3] यस्मात् ॥ ९८ ॥
उपवनगमनक्रीड़ा विहारनारीरतिप्रमोदाः स्युः ।
तेषु[4] हि वर्षेषु सदा न तत्र दुःखं न वा शोकः[5] ॥ ९९ ॥

---

नन्वेवं देवानां युद्धमप्यनुचितमित्याशंक्य प्रसङ्गात्समवकारादौ देशविशेषोपयोगं दर्शयति—दिव्यनायककृतमिति ।

तेषां भारतवर्षावतीर्णानां युद्धादिकं प्रदर्शयेदित्यर्थः ॥ ९७ ॥

अत्र राज्ञः पृच्छति कस्माद्भारतमिष्टमिति । अत्र प्रयोगे प्रतिवक्ति वर्षेष्वन्येष्विति देशत्वेन भोगभूमित्वे विहितेष्वपीत्यर्थः ॥ ९८ ॥

---

**अभिनव**—इस प्रकार यहाँ देवताओं का युद्ध भी अनुचित है ऐसी आशङ्का करके प्रसङ्गवश समवकारादि में देश विशेष का उपयोग दिखाते हैं—

**अनुवाद—जो दिव्य नायकों द्वारा किये जाने वाले युद्ध, वध एवं बन्धन से युक्त काव्य है, उसे भारतवर्ष में काव्य रचनाओं में करना चाहिए ॥ ९७ ॥**

**अभिनव**—उन भारतवर्ष में अवतीर्ण उन देवताओं के युद्ध आदि का प्रदर्शन करना चाहिए ॥ ९७ ॥

**अनुवाद—देवताओं के द्वारा निर्मित अन्य वर्षों ( देशों ) के होने पर भी भारतवर्ष ही क्यों इष्ट ( अभीष्ट ) है । क्योंकि यहाँ की भूमि हृद्य है, शुभ गन्धों वाली है और काञ्चनी ( सुवर्णमयी ) है ॥ ९८ ॥**

**अभिनव**—यहाँ राजा से पूछते हैं कि भारत ही क्यों इष्ट है ? उत्तर देते हैं कि अन्य देश भोग भूमि है ।

**अनुवाद—अन्य वर्षों ( प्रदेशों ) में सदा उपवन-गमन क्रीड़ा, विहार, स्त्रियों के साथ रति और प्रमोद ( आनन्द ) होते हैं, वहाँ न दुःख है न शोक ॥ ९९ ॥**

---

१. ख. तस्मात् । २. ख. नित्यकालं हि ।
३. क-प. हेमरत्नमयो यस्मात् ।
४. क. (टि०) भ. तस्मिन्नित्यं वर्षे ।
५. ख. न भवति दुःखं न वा तयेकम् ।

ये[1] तेषामधिवासाः पुराणवादेषु पर्वताः प्रोक्ताः ।
सम्भोगस्तेषु भवेत्कर्मारम्भो[2] भवेदस्मिन् ॥ १०० ॥

---

उपवनं गत्वा क्रीडा जलक्रीडादिकाः विहरणमुपवन एव सञ्चरणं नार्या सह रतिः संभोगः प्रमोदो दिव्यपानादिकृतम् ॥ ९९ ॥

नन्वेवमिलावृतकुरुप्रभृतिषु वर्षेषु मा तेषां देवानां वृत्तं व्याख्यायि तथापि स्वनिवासेषु व्यावर्ण्यतामित्यत आह—ये तेषामधिवासा इति ।

वसन्ति तेष्विति वासाः। पर्वता इति कैलासादयः, संभोग इति सा हि तेषां भूमिः भोगस्थानं, अस्मिन्निति भारतवर्षे कर्मारम्भः आरम्भग्रहणेनेवमाह—न तेषां दुःखं पूर्णं कदाचिद् भवति। दुःखपूर्णतायां देवत्वस्यैव विघातोऽनवस्थानप्राप्त्या स्वरूपलोप इति युक्तमुक्तम् । करुणारसबाहुल्यादुत्सृष्टिकाङ्कैः दिव्यैर्वियोग एव तेषां सुखबाहुल्यात्तत्सन्निधाने अन्यस्यापि शोकावसर पराकृतेरिति गाढदुःखाभिभूता, एवंभूतप्रयोगदर्शने सति 'दुःखी दुःखाधिकान् पश्ये' दिति नीत्या प्रतनूभूतदुःखभाराः सुखेन विनेया भवन्ति, यथोक्तं प्राक् स्थैर्यं दुःखार्दितस्य च ( १·१११ ) इत्युत्सृष्टिकाङ्कप्रयोगः ॥ १०० ॥

---

**अभिनव**—उपवन में जाकर जल क्रीड़ा करना, उपवन में विहार करना ( घूमना ), स्त्री के साथ सम्भोग और दिव्य सुरा का पान करना चाहिए ॥ ९९ ॥

**अभिनव**—अब प्रश्न यह है कि इस प्रकार इलावृत कुरु प्रभृति वर्षों (प्रदेशों) में उन देवताओं का वर्णन वृत्त नहीं करना चाहिए, किन्तु अपने निवासों में वर्णन करना चाहिए, इस पर कहते हैं—

**अनुवाद—पुराण और इतिहास में जो पर्वत उनके अधिवास कहे गये हैं उनमें सम्भोग होता है और उसमें कर्मारम्भ है ॥ १०० ॥**

**अभिनव**—जिसमें वे रहते हैं वे वास हैं, पर्वत कैलास आदि हैं। सम्भोग का अर्थ है वह भूमि जो उनकी भोग भूमि है। 'अस्मिन्' का अर्थ है भारतवर्ष में कर्म का आरम्भ होता है। आरम्भ पद से यह बताया गया है कि भारत में पूर्ण दुःख कभी नहीं होता, क्योंकि पूर्ण होने पर देवत्व का ही विघात हो जायेगा। यहाँ अवस्था दोष होने पर देवताओं के स्वरूप का लोप हो जायेगा, यह ठीक ही कहा गया है। करुण रस की बहुलता से उत्सृष्टिकाङ्क में देवताओं का वियोग

---

१. ख. ग. न तेषामपि वासाः । पुराणवादे च पर्वता गदिताः ।

२. क. कर्मारम्भस्तथा ह्यस्मिन् ।

अङ्कस्य लक्षणमिदं व्याख्यातमशेषयोगमात्रगतम् ।
प्रहसनमतः परमहं सलक्षणं संप्रवक्ष्यामि ॥ १०१ ॥

प्रहसनमपि विज्ञेयं द्विविधं शुद्धं [1]तथा च सङ्कीर्णम् ।
वक्ष्यामि[2] तयोर्युक्त्या पृथक्पृथग्लक्षणविशेषम् ॥ १०२ ॥

---

एवं रञ्जनाप्रधानेन करुणेन युक्तं रूपकमभिधाय रञ्जनप्रधानं हास्यप्राप्यं प्रहसनं लक्षयति विभागमुखेन प्रहसनमपि विज्ञेयमिति द्विविधमिति ।

विभागः शुद्धं संङ्कीर्णं चापीति । अपिशब्दोऽतिक्रमार्थः । तथेति सामान्य-लक्षणम् । तदयमर्थः लक्षणविशेषं विशेषलक्षणम् ।

---

होता है और देवताओं के सुख बहुल होने से उनके सन्निधान में दूसरों के शोक के अवसर दूर हो जाते हैं, हट जाते हैं। इस प्रकार के प्रयोगों के देखने से गाढ़-दुःखाभिभूत पुरुष "दुःखी अपने से अधिक दुःखी को देखें" इस नीति के अनुसार दुःख का भार क्षीण हो जाने से वे सुखपूर्वक विनेय हो सकते हैं। जैसा कि पहिले कहा जा चुका है कि "दुःख से पीड़ित को नाट्य धैर्य प्रदान करता है। इस प्रकार उत्सृष्टिकाङ्क का प्रयोग पूर्ण हुआ ॥ १०० ॥

**अनुवाद—इस प्रकार मैंने अङ्क ( उत्सृष्टिकाङ्क ) का लक्षण व्यवस्थित रूप में बतला दिया है, इसके बाद अब प्रहसन के लक्षण बतलाऊँगा ॥ १०१ ॥**

**अभिनव**—इस प्रकार रञ्जन की अप्रधानता वाले करुण रस से युक्त रूपक का लक्षण बतलाकर अब रञ्जन प्रधान, हास्य बहुल विभाग के द्वारा प्रहसन का लक्षण बतलाते हैं—

**अनुवाद—प्रहसन दो प्रकार का होता है—शुद्ध और सङ्कीर्ण। अब मैं युक्ति के साथ अलग-अलग विशेष लक्षण को बतलाऊँगा ॥ १०२ ॥**

**अभिनव**—प्रहसन के विभाग को बतलाते हैं—शुद्ध और सङ्कीर्ण। यहाँ अपि शब्द का अर्थ अतिक्रमण 'तथा' पद से सामान्य लक्षण| का कथन है। लक्षण विशेष का अर्थ विशेष लक्षण है ॥ १०२ ॥

---

१. ख. तथैव ।
२. ख. भगवत्तापसभिक्षुश्रोत्रियविप्रातिहाससंयुक्तम् ।

भगवत्तापसविप्रैरन्यैरपि हास्यवादसंबद्धम् ।
[1]कापुरुषसंप्रयुक्तं परिहासाभाषणप्रायम् ॥ १०३ ॥
अविकृतभाषाचारं[2] विशेषभावोपपन्नचरितपदम् ।
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु ॥ १०४ ॥

---

भगवत्तापसविप्राः यतिवानप्रस्थगृहस्थाः, अन्ये शाक्यादयस्तैरुपलक्षितम् । हास्यप्रधानवचनसंबन्धशीलनादिना कुत्सितैः पुरुषैरत एव प्रहस्यमानैः सामर्थ्यात्तैरेव भगवदादिभिर्युक्तम् ॥ १०३ ॥

तथापि च भाषाचारौ यत्र न विकृतावसत्याश्लीलरूपौ तथा विशेषेण भावैः व्यभिचारिभिरुपपन्नानि पदानि कथाखण्डानि यस्मिन् । नियतगतिः एकप्रचारं यद्वस्तु तद्विषयः प्रहसनीयलक्षणो यत्र, तच्छुद्धं प्रहसनम् । अत्र निर्वचनं यतः परिहासप्रधानान्याभाषणान्यत्र बाहुल्येन भवन्ति तेन यत्रैकस्यैव कस्यचित् चरितं दुष्टत्वात्प्राधान्येन प्रहस्ते तच्छुद्धमित्यर्थः ॥ १०४ ॥

---

## शुद्ध प्रहसन

**अनुवाद**—भगवत्तापस अर्थात् भगवद्भक्त तपस्वी, विप्रों तथा अन्य पुरुषों के हास-परिहास पूर्ण सम्वाद से युक्त तथा कुत्सित पुरुषों के द्वारा सम्प्रयुक्त परिहासपूर्ण आभाषणों से युक्त, अविकृत भाषा और आचार ( व्यवहार ) से सम्पन्न विशेष भावों और चरितों से उपपन्न नियतगति और वस्तु विषयक शुद्ध प्रहसन समझना चाहिए ॥ १०३-१०४ ॥

**अभिनव**—'भगवत्तापसविप्राः' का अर्थ है—यति, वानप्रस्थ, गृहस्थ और दूसरे शाक्य बौद्धभिक्षु उनसे उपलक्षित । हास्य-प्रधान वचनों के सम्बन्ध का शीलन करने से कुत्सित पुरुषों के द्वारा प्रहस्यमान उन्हीं लोगों से भगवत्तापसादि से युक्त शुद्ध प्रहसन होता है ।

तथापि भाषा और आचार जहाँ पर विकृत श्लील रूप न हों, तथा विशेष रूप से व्यभिचारी भावों से उपपन्न पद कथाखण्ड जिसमें हों, नियतगति तथा एक प्रचार जो वस्तु हो वह विषय प्रहसन के योग्य लक्षण हो जहाँ, वह शुद्ध प्रहसन है। यहाँ प्रहसन पद का निर्वचन करते हैं, क्योंकि यहाँ परिहास प्रधान आभाषण बाहुल्येन होते हैं। इसलिए जहाँ पर किसी एक व्यक्ति का चरित दुष्ट होने से प्रधान रूप से हास्य का विषय बने, वह शुद्ध प्रकार है ॥ १०३-१०४ ॥

---

१. ख. नोचजनः ··· । २. ख. विशेष भावोपहास ···· ।

वेश्याचेटनपुंसकविटधूर्ता[1] बन्धकी च यत्र स्युः ।
अनिभृतवेषपरिच्छदचेष्टितकरणैस्तु[2] संकीर्णम् ॥ १०५ ॥
लोकोपचारयुक्ता या वार्ता यश्च दम्भसंयोगः ।
[3]स प्रहसने प्रयोज्यो धूर्तप्रविवादसम्पन्नः ॥ १०६ ॥

---

यत्र तु वेश्यादिभिर्योगोऽत्युल्बणं चाकल्पादि तदेकद्वारेणानेकवेश्यादिचरितेन हसनीयेन सङ्कीर्णत्वात् सङ्कीर्णम् । अन्ये त्वाहुः—येषां स्वभावत एव चरितं शिष्टमध्ये सभ्येतरतमत्वेन प्रहसनार्हं तदविशुद्धत्वात्सङ्कीर्णम् तद्योगाच्च रूपकम् । ये तु स्वभावतो न गर्हिता भगवत्तापसादिचेष्टाविशेषास्तेषां प्राकृतपुरुषसंक्रान्ति-दौरात्म्योदितामन्यसंबन्धदूष्यमाणतया प्रहसनीयतां यातास्ते स्वभावशुद्धाः तद्योगा-द्रूपकं शुद्धमिति ॥ १०५ ॥

उभयसाधारणीमपि कवेः शिक्षामाह—लोकोपचारेति ।

---

**अनुवाद**—जहाँ पर अत्यन्त असभ्य वेश-भूषा, वस्त्र, चेष्टा तथा विचित्र उपकरणों के साथ जहाँ पर वेश्या, चेट, नपुंसक, विट, धूर्त तथा बन्धकी स्त्री की स्थिति हो, उसे 'मिश्र' ( सङ्कीर्ण ) प्रहसन कहते हैं ॥ १०५ ॥

**अभिनव**—जहाँ पर वेश्यादि का सम्बन्ध हो और वेष-भूषादि अत्यन्त उज्ज्वल हो वहाँ एक के द्वारा अनेक वेश्याओं के चरित हास्य का विषय बनने से सङ्कीर्ण होने से सङ्कीर्ण प्रहसन होता है । अन्य आचार्य कहते हैं कि—जिनका चरित स्वभावतः शिष्ट जनों के मध्य अत्यन्त असभ्य होने से प्रहसनीय हो, वह विशुद्ध न होने से सङ्कीर्ण भेद होता है । और उनके योग से रूपक भी सङ्कीर्ण होता है । और जो भगवत्तापस आदि की चेष्टायें स्वभाव से गर्हित नहीं है, किन्तु प्राकृत पुरुषों के सङ्क्रमण के संसर्ग से दौरात्म्य से उदित अन्यों के संसर्ग से दूषित होने से प्रहसनीयता को प्राप्त होते हैं वे स्वभावतः शुद्ध और उनके योग से रूपक भी शुद्ध होता है ॥ १०५ ॥

काव्य और लोक में उभय साधारणी शिक्षा को कवि के लिए कहते हैं—

**अनुवाद**—जो वार्त्ता लोक व्यवहार से युक्त है तथा जो दम्भ का संयोग धूर्त्तों के वाद-विवाद से सम्पन्न हो उसे प्रहसन में प्रयोग करना चाहिए ॥ १०६ ॥

---

१. ख धूर्तविटा । २. ख. करणात्तु ।
३. ख. तत्प्रहसने प्रयोज्य । ग. तत्प्रहसनेषु योज्यं ।

[4]वीथ्यङ्गैः संयुक्तं कर्तव्यं प्रहसनं यथायोगम् ।
भाणस्यापि तु लक्षणमतः परं संप्रवक्ष्यामि ॥ १०७ ॥

---

वार्ता प्रसिद्धिर्यदि सा लोकव्यवहारसिद्धा भवति, यथा शाक्यानां स्त्रीसंपर्कः प्रहसनीयो भवति, न चौर्यम् । एवं भाविप्रसिद्ध एवोपहसनीयः । अत्राधिकरणं स्वयमेवाह—धूर्तप्रविवादेति । धूर्ताः कृत्रिमतापसादयः विटादयश्च । तद्विषयो यः प्रकृष्टो विवादः विरुद्धतयावभासस्तेन फलभूतेन संपाद्यतया यदुक्तं प्रहस्यमानं तथाभूतचरितावलोकनेन हि संस्कृतमिति व्युत्पाद्यो न भूयस्तान्वञ्चकानुपसर्पतीति ॥ १०६ ॥

वीथ्यङ्गैरिति वक्ष्यमाणैः यथायोग्यमिति तेषां संप्रयोगे संख्यायाः क्रमस्य तु न कश्चिन्नियम इति दर्शयति । प्रहसनस्याङ्कनियमानभिधानात् शुद्धमेकाङ्कं, सङ्कीर्णं त्वनेकाङ्कम् वेश्यादिचरितसंख्याबलादिति केचित् ।

अन्ये त्वेकाङ्कप्रकरणमध्यपातित्वादेकाङ्कमिति मन्यन्ते प्रथमसंख्यातिक्रमे भेदाभावपरित्यागे च प्रमाणाभावात् ॥ १०७ ॥

---

**अभिनव**—जो वार्त्ता (प्रसिद्धि) लोक व्यवहार से सिद्ध होती है । जैसे—बौद्धों का स्त्री संसर्ग प्रहसनीय होता है किन्तु चौर्य प्रहसनीय नहीं होता । इस प्रकार प्रसिद्धि को प्राप्त वृत्त प्रहसनीय होते हैं । वृत्त के अधिकरण को स्वयमेव कहते हैं धूर्तप्रविवादिति । धूर्त कृत्रिम तपस्वी आदि और जो विट आदि हैं । उनके सम्बन्ध में जो प्रकृष्ट विवाद हैं, विरुद्ध रूप से अवभास है । उस फलभूत विवाद से सम्पाद्य होने से जो प्रहस्यमान कहा गया है, उस प्रकार के चरित के अवलोकन से संस्कृत व्युत्पाद्य फिर कभी वञ्चकों के जाल में नहीं फँसता ॥ १०६ ॥

**अनुवाद—प्रहसन को यथायोग वीथी के अङ्गों से संयुक्त करना चाहिए । इसके बाद अब भाषा के लक्षण को कहूँगा ॥ १०७ ॥**

**अभिनव**—वीथ्यङ्गैः अर्थात् वक्ष्यमाण वीथी के अङ्गों से । यथायोग उनके सम्प्रयोग में संख्या के क्रम का कोई नियम नहीं है, इसको दिखाते हैं । प्रहसन में अङ्कों के नियम का कथन न होने से शुद्ध प्रहसन एकाङ्की होता है और वेश्यादि के चरित को संख्या के बल से सङ्कीर्ण प्रहसन अनेक अङ्कों वाला होता है, ऐसा कोई आचार्य कहते हैं ।

---

४. ख. उद्घात्यकादिभिरिदं वीथ्यङ्ग्ये मिश्रितं भवेन्नियमम् ।

आत्मानुभूतशंसी परसंश्रयवर्णनाविशेषस्तु[1] ।
[2]विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च ॥ १०८ ॥

---

अथ हास्यरसोचितविटधूर्ताद्यनुप्रवेशेन समानयोगक्षेमं भाणं लक्षयितुमाह—आत्मानुभूतसंसीति ।

एकेन पात्रेण हरणीयः समाजिकहृदयं प्रापयितव्योऽर्थो यत्र स भाणः । एकमुखेनैव भाण्यन्ते उक्तिमन्तः क्रियन्ते अप्रविष्टा अपि पात्रविशेषा यत्रेति भाणः । तत्र स प्रविष्टः पात्रविशेषः आत्मानुभूतं वा शंसति परगतं वा वर्णयति ॥ १०८ ॥

---

अभिनव—अन्य लोग कहते हैं कि प्रथमोक्त संख्या के अतिक्रम में और भेदाभाव के परित्याग में प्रमाण का अभाव होने से एकाङ्की प्रकरण के मध्यपाती होने से एकाङ्की मानते हैं ॥ १०७ ॥

अब हास्य रस के योग्य विट, धूर्त आदि के अनुप्रवेश से प्रहसन के समान योगक्षेम वाले भाण का लक्षण बतलाते हैं—

अनुवाद—आत्मानुभूत बात को कहने वाला और दूसरों के विषय की बातों का वर्णन करने वाला एक पात्र के द्वारा अभिनेय 'भाण' कहलाता है ॥ १०८ ॥

अभिनय—एक पात्र के द्वारा हरणीय ( सम्पादनीय ) सामाजिक के हृदय में प्रापयितव्य अर्थ जहाँ कहा जाय, वह 'भाण' है । रङ्ग में अप्रविष्ट पात्र विशेष भी जहाँ एक पात्र के मुख से कहते हैं अर्थात् अपने कथन को श्रोता के अन्तःकरण में पहुँचा देते हैं, वह 'भाण' है । वह प्रविष्ट पात्र विशेष आत्मानुभूत अर्थ को कहता है अथवा दूसरे की बात का ( चरित का ) वर्णन करता है ॥ १०८ ॥

---

१. ग. विशेषेषु ।

२. ग. द्वि विधाश्रयो ..... ।

परवचनमात्मसंस्थं प्रतिवचनैरुत्तरोत्तरग्रथितैः ।
आकाशपुरुषकथितैरङ्गविकारैरभिनयैश्चैव[1] ॥ १०९ ॥
धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव ।
[2]एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥ ११० ॥

---

तत्र च प्रयोगप्रयुक्तिमाह—परवचनमिति । परसम्बिवचनं स्वयमङ्गविकारैर-भिनयेत् ।

ननु तत्परवचनमयुक्तं कथमभिनयेत् आह—आकाशे शून्ये यानि पुरुषकथितानि दृष्टानि यत्र शून्ये तेन वर्ण्यन्ते वा कश्चित्पश्यत्याकर्णयति च तत्र च तद्वचनं स एवानुवदन् सामाजिकान् बोधयति । यथा "भो बाडव ! अले किं ब्रवीषि" इत्यादौ न केवलं परवचनमभिनयेत्, किन्तु प्रतिवचनैः स्वोक्तैः सह, अत एवोत्तरोत्तरग्रथित-योजनाभिरुपलक्षितैः ॥ १०९ ॥

---

अनुवाद—आत्मानुभूत दूसरे के वचनों को आकाशभाषितों के द्वारा उत्तरोत्तर ग्रथित प्रतिवचनों के द्वारा आङ्गिक अभिनयों से शारीरिक चेष्टाओं को प्रदर्शित करते हुए धूर्त एवं विटों द्वारा प्रयोज्य नाना अवस्थाओं वाले तथा बहुत चेष्टाओं वाले एकाङ्की भाण का विद्वानों द्वारा अभिनय करना चाहिए ॥ १०९-११० ॥

अभिनव—प्रयोग की युक्ति को कहते हैं—पात्र दूसरों के कहे वचन को स्वयं अपने अङ्गविकारों से अभिनीत करें ।

अब प्रश्न होता है कि युक्तिरहित दूसरे के वचनों का अभिनय कैसे करें ? इस पर कहते हैं कि शून्य आकाश में परपुरुष के कथित अथवा दृष्ट वचनों को शून्य में वर्णन करें अथवा जैसा कोई देखता है, या सुनता है वहाँ उसके वचन का अनुवाद करता हुआ सामाजिकों को बोध करायें । जैसे—"भो वाड़व ! अले, किं ब्रवोषि" इत्यादि स्थलों में केवल दूसरों के वचनों का अभिनय न करें। किन्तु अपने कहे हुए वचनों के साथ तथा उत्तरोत्तर ग्रथित योजनाओं से उपलक्षित कर अभिनय करें ।

---

१. ख. अभिनयेत्तत् । २. ख. ग. एकाङ्गो ।

ननु योऽसावेकोऽत्र प्रविशति स क इत्याह—धूतविटेति। नानाप्रकारावस्थाविशेषात् लोकोपयोगिव्यवहार एव आत्मा वाच्यं यस्य, अत एव बहुचेष्टः सततं कार्यं इति सकलसामान्यपृथग्गतोपयोग्यस्तु लोकव्यवहारो वेश्याविटादिवृत्तान्तात्मा निरूप्य इति बाहुल्येन पृथग्जनव्युत्पत्तियोनिरूपकमिदं राजपुत्रादीनामपि शम्भलीवृत्तान्तो ज्ञेय एवावञ्चनार्थमिति संप्रयोज्य इत्यर्थः ॥ ११० ॥

इदमिह मीमांस्यं—य एते उत्सृष्टिकादयो रूपकभेदाः ते तावदेकरसा एव यद्यपि नाटकादयोऽप्येवमेव। तथापि सर्वरसयोग्यतायामपि नाटके प्रकरणे च धर्मार्थादिवीर एव प्रधानं परमार्थतः सर्वेषु नायकभेदेषु वीरत्वानुगमदर्शनात्। समवकारे तु यद्यपि हि शृङ्गारादित्वमुक्तं तथापि वीर एव प्रधानं रौद्रो वा। डिमव्यायोगयोरप्येवम् । ईहामृगेऽपि रौद्रप्राधान्यमेव, नाटिकायां तु शृङ्गार एव प्रधानम् ।

---

अब प्रश्न होता है कि जो यह अकेला रङ्गमञ्च पर प्रवेश करता है वह कौन है? इस पर कहते हैं कि धूर्त, विट होता है। अनेकविध अवस्थाओं के वैलक्षण्य से लोकोपयोगी व्यवहार ही आत्मा अर्थात् वाच्य है जिसका, इसलिए बहुचेष्टा वाले भाण को सतत प्रस्तुत करना चाहिए, क्योंकि यह सकल सामान्य जन के उपयोगी वेश्या तथा विट के वृत्तान्त रूप लोक व्यवहार का निरूपण करते हैं। इस प्रकार यह रूपक बाहुल्येन सामान्य जन की व्युत्पत्ति की योनि है, अतः धोखा न हो जाय, इसलिए राजकुमारों की शम्भली के वृत्तान्त को जानना चाहिए, इस प्रकार धोखा न खा जाय कुट्टिनी के वृत्तान्त का भी नाट्य में प्रयोग करना चाहिए।

यहाँ यह विचारणीय है कि ये जो उत्सृष्टिकाङ्क आदि रूपकों के प्रभेद हैं वे सब एक रस है और यद्यपि नाटक आदि भी इसी प्रकार है तथापि नाटक और प्रकरण में सभी रसों की योग्यता होने पर भी धर्मवीर, अर्थवीर, युद्धवीर आदि वीर रस ही इसमें प्रधान होता है, वस्तुतः नायक के सभी भेदों में वीरता का अनुगम देखा जाता है। समवकार में यद्यपि शृङ्गारादि रस कहा गया है। तथापि वीर अथवा रौद्र रस ही वहाँ प्रधान होता है। डिम और व्यायोग में भी इसी प्रकार होता है। ईहामृग में रौद्र रस की प्रमुखता है किन्तु नाटिका में शृङ्गार रस की प्रधानता होती है।

एवं तावद् वीररौद्रशृङ्गारा यथास्वं पुमर्थत्रयप्राणभूतत्वेन वर्तमाना एतेषु प्रयोगेषु शान्तबीभत्सरसौ तु चरमपुमर्थयोगात्तत्र च सर्वस्य नाधिकारोऽपि कस्यचिदपश्चिमजन्मनोऽधिकारान्नाटके यद्यपि तत्फलप्रधानतया प्राधान्यमवलम्बेयातां तथापि नासौ प्रचुरप्रयोग इति तयोः पुरुषार्थप्रवरप्राणितयोरपि वीरादिरसान्तराध्यावापेनावस्थापनम्। एवं तावत्पुमर्थविषयो रूपकरसविषय एव परमार्थतः, तथापि त्वितिवृत्तवैतत्याद्रसान्तरप्रयोगोऽपि तदङ्गतया तत्र भवति। एवं तत्प्रधान-चेष्टायोगाद् वृत्तिवैचित्र्यमत्रोचितमेव। उत्सृष्टिकाङ्कप्रहसनभाणास्तु करुणहास्य-विस्मयप्रधानत्वाद् रञ्जकरसप्रधानाः, तत एवात्र स्त्रीबालमूर्खादिरधिकारी।

न च विततमत्रेतिवृत्तम्, इतिवृत्तवैचित्र्यमपि तत्र नास्ति। तथाहि—उत्सृष्टि-काङ्के तु वृत्तित्रयं तावद्वचसा निषिद्धं, भारती चात्र कथं वृत्ति चेष्टा हि करुणेऽप्रधानं तदुपकरणं तु परिदेवितात्मिका भारती, तस्मात्, फलसंवित्याख्या वृत्तिः, वाक्चेष्टयोः फलानुभव इति यस्या लक्षणं, साभ्युपगन्तव्या। अवश्यं चैतत्, अन्यथा मूर्छा-मरणादौ वाक्चेष्टयोरभावे निर्वृत्तिकतैव स्यात्। किञ्च यदि तावत्पुमर्थकामोद्देशेन कैशिक्यभिधीयते धर्ममर्थं चोद्दिश्य वृत्तिद्वयं वक्तव्यम्। तस्माच्चेष्टात्मिका न्याय-वृत्तिरन्यायवृत्तिर्वाग्रूपा तत्फलभूता फलसंवित्तिरिति वृत्तित्रयमेव युक्तमिति भट्टो-द्भटो मन्यते।

---

इस प्रकार वीर, रौद्र और शृङ्गार रस यथाक्रम प्रत्येक धर्म, अर्थ और काम त्रिवर्ग के प्राणभूत होकर इन प्रयोगों में विद्यमान है और शान्त तथा वीभत्स रस तो चरम पुरुषार्थ मोक्ष के योग से सम्बद्ध होने से नाटक में सबका अधिकार न होने से किसी अग्रजन्मा ब्राह्मण का ही अधिकार है। मोक्ष-रूपी फल को प्रधानता से यद्यपि शास्त्र और वीभत्स प्रधानता का अवलम्बन कर सकते है तथापि मोक्ष का प्रचुर प्रयोग नहीं होता। अतः चतुर्विध पुरुषार्थों में पुरुषार्थ प्रवर मोक्ष से अनुप्राणित शान्त और वीभत्स रस का वीरादि से भिन्न रसों के अध्याय से अवस्थापन होता है। इस प्रकार रूपकों में रस का स्थान परमार्थतः पुमर्थ के आश्रय से ही होता है, तथापि इतिवृत्त विस्तृता के कारण रसान्तरों का प्रयोग तदङ्गभूता होता है। अत एव इतिवृत्त के प्रधान रूप ( नाटक ) की चेष्टा के सम्बन्ध में वृत्ति-वैचित्र्य उचित ही है। उत्सृष्टिकाङ्क प्रहसन और भाण करुण, हास्य और विस्मय रस प्रधान होने के कारण रञ्जन ही फल है, अतः इनके अधिकारी स्त्री, बालक और मूर्ख हैं।

यदाह—

आद्ये वाक्चेष्टाभ्यां पुरुषार्थचतुष्टयेन चाष्टविधे ।
षोडशधा फलवृत्तिस्तद्द्वयतोऽनेकधा तु रसभेदात् ॥

तदत्र केचिदाहुः—सात्वत्यां यद्यपि कैशिकी शक्यान्तर्भावा तथापि रञ्जकत्वातिशयात्, पृथगुपात्तात्, स्वरवम्मुखजाभिनयतश्च, न वा-यायवत्ती (वृत्तित्वं) पुमर्थचतुष्कयोगोपपत्तिविप्रतिषेधात्, फलवृत्तौ च वृत्तिसामान्यलक्षणं व्यापाररूपत्वं यदि नास्ति तत्कथं वृत्तित्वम् । अस्ति चेद्वाक्चेष्टातिरिक्तो मानसो व्यापारो न कश्चित् लोकसिद्ध इति सूक्ष्मो वाक्चेष्टागत एवोपेत्यः। ततश्च मरणमूर्छादावपि प्राणात्मकायोयव्यापारसंभव एव यदनुस्मरणे लयतालगानानि प्रवर्तन्ते संवेदनमपि च मूर्छादौ नास्तीति शक्यं वक्तुमिति फलवृत्तिरपि तत्र कथम्। तस्मात्तत्र सात्वत्येव वृत्तिः । यदि बाहुल्यापेक्षया वृत्तिमयं काव्यमिति व्यवहारो रूपकसमुदायापेक्षया खण्डस्यावृत्तिकत्वेऽपि समुदितस्य रूपकस्य वृत्तिमयत्वात् ।

इसमें इतिवृत्त भी विस्तीर्ण नहीं होता और इतिवृत्त में वैचित्र्य भी नहीं होता। जैसे—उत्सृष्टिकाङ्क में तीनों बृत्तियों का वाणी से ही निषेध है तो यहाँ भारती वृत्ति भी कैसे होगी ? चेष्टा तो करुण रस में अप्रधान है, परिदेवितात्मिका भारती वृत्ति तो उपकरण है अतः यहाँ फलसंवित्ति नामक बृत्ति रहती है। वाणी और चेष्टा फल का अनुभव है जिसका लक्षण है वहाँ फलानुभवरूपा वृत्ति का अभ्युपगम करना चाहिए। यहाँ यह आवश्यक है, अन्यथा मूर्च्छा और मरण आदि में वाक् और चेष्टा के अभाव में कोई वृत्ति नहीं रहेगी। और भी यदि काम रूप पुरुषार्थ के उद्देश से कैशिकी वृत्ति का अभिधान करेंगे तो धर्म एवं अर्थ के उद्देश्य से दो वृत्तियों को कहना पड़ेगा। इसलिए चेष्टात्मिका अन्यावृत्ति और वाक् रूपा अन्या वृत्ति तथा तत्फलभूता फलसंवित्ति तीसरी वृत्ति माननी पड़ेगी, ये तीन वृत्तियाँ ही युक्त है, यह भट्टोद्भट का मत है। जैसा कि कहा है—

"वाणी और चेष्टा का चारों पुरुषार्थों के साथ सम्बन्ध होने पर आठ प्रकार की वृत्तियाँ होगी, फिर फलवृत्तियाँ होने से उसके दुगुने सोलह प्रभेद वृत्तियों के होंगे। फिर रसों के भेद से वृत्तियाँ अनेक प्रकार की होगी।"

**यच्छाकलीगर्भमतानुसारिणो मूर्छादावात्मसंवित्तिलक्षणां पञ्चमीं वृत्तिं सकलकार्यनिवृत्त्यनुमेयां मूर्च्छाकर्मानुभावेन च फलेनावच्छिन्नामात्मव्यापाररूपां मन्यन्ते, न च परिस्पन्द एवैको व्यापार इति मनसिकृत्य तन्मतं भावानां बाह्यग्रहणस्वभावत्वमुपपादयद्भिः भट्टलोल्लटप्रभृतिभिः पराकृतमिति न फलवृत्तिर्वा काचिदिति चतस्र एव वृत्तयः इति।**

इस विषय में कुछ आचार्य कहते हैं—यद्यपि सात्त्वती में कैशिकी का अन्तर्भाव सम्भव हैं तथापि मनोरञ्जन की अधिकता के कारण तथा वागभिनय के कारण स्वरों की तरह कैशिकी का पृथग् उपादान होने से इन स्वीकृत वृत्तियों से भिन्न वृत्तियों में वृत्तित्व कैसे रहेगा? क्योंकि इन चारों पुरुषार्थों के योग की उपपत्ति न होने से इन स्वीकृत वृत्तियों से भिन्न वृत्तियों में वृत्तित्त्व कैसे रहेगा? यदि वृत्तियों का सामान्य लक्षण व्यापारत्व उनमें नहीं हो तो फलवृत्ति में वृत्तित्व कैसे रहेगा? यदि यह कहा जाय कि वृत्तियों का सामान्य लक्षण व्यापार उनमें है तो वाणी और चेष्टा से भिन्न मानस व्यापार लोकप्रसिद्ध नहीं है तो वाणी और चेष्टा में कोई सूक्ष्म व्यापार मानना पड़ेगा। अतः मरण और मूर्च्छा आदि में प्राणीय और कायिक (शारीरिक) व्यापार सम्भव होगा। जिसके अनुस्मरण करने पर ताल, लय एवं गायन की प्रवृत्ति होती है। यदि मूर्च्छा आदि में संवेदन नहीं है तो वहाँ फलवृत्ति कैसे होगी? अतः वहाँ सात्त्वती वृत्ति है। यदि बाहुल्य की अपेक्षा के अनुसार रूपक समुदाय की अपेक्षा से सभी काव्य वृत्तिमय है तो खण्डकाव्य के वृत्तिरहित होने पर भी समुदित रूपक वृत्तिमय होंगे।

जो शाकली गर्भ के मतानुयायी विद्वान् मूर्च्छा आदि में सकल कार्यों की निवृत्ति से अनुमेय मूर्च्छा कर्म के अनुभाव रूप फल से युक्त आत्मव्यापाररूपा आत्मसंवित्ति लक्षणा पञ्चमी वृत्ति स्वीकार करते हैं उनके मत में परिस्पन्द ही एक व्यापार नहीं है, यह बात मन में रखकर उनके मत को भावों में बाह्येन्द्रिय ग्राह्यत्व रूप स्वभाव का उपपादन करने वाले भट्टलोल्लट आदि ने निराकृत कर दिया, अतः फलवृत्ति नाम की कोई अतिरिक्त वृत्ति नहीं है। अतः वृत्तियाँ चार ही हैं।

वयन्तु ब्रूमः। कोऽयमस्थानसन्त्रासः ? यत्किञ्चिदिह नाट्ये समस्ति तच्चेद् वृत्तिष्वन्तर्भाव्यं तदा भवेदेतत्—न चैवम्। रङ्गो हि नाम का वृत्तिः, मृदङ्गपणव-वंशाद्या का वृत्तिरपि हि भवेत्। तस्माद् व्यापारः पुमर्थसाधको वृत्तिः। स च सर्वत्रैव वर्ण्यंत इत्यतो वृत्तयः। काव्यस्य मातृका इति न हि किञ्चिद्व्यापारशून्यं वर्णनीयमस्ति। मदमूर्छादिवर्णनायामपि मनोव्यापारस्य सात्त्वत्याख्यस्य संभवात्, करुणादावपि च मनोदेहव्यापारसंभवेऽपि बाहुल्येन वाग्व्यापारसंभवाद् भारती-वृत्तिरुच्यते। वृत्त्यन्तरनिषेधस्तु तदङ्गानामपरिपूर्णत्वात्। न च कायवाङ्मानस-व्यापारं तद्वैचित्र्यं वान्तरेणान्यः कश्चिद् व्यापारः संभवतीत्यसकृदुक्तम्। तस्मात्क-रुणप्रधाने भारती वृत्तिः परिदेवितबाहुल्यात्।

यत्तु 'शृङ्गारहास्यकरुणैरिह कैशिकी स्यात्' इति कोहलेनोक्तं तन्मुनिमत-विरोधादुपेक्ष्यमेव, तस्य यत्र यत्रानुल्बणा चित्तवृत्तिः सा सा कैशिकीत्याशयः। एवं प्रहसनभाणयोरपि वाग्व्यापारप्राधान्यादेव भारती वृत्तिः, मूर्छादौ तु व्यापारा-भावे वृत्त्यभाव एव। न हि सर्वं नाट्यं वृत्तिमयत्वतया समर्थनीयमित्यलमति-प्रसक्त्या॥ ११२॥

हम तो कहते हैं कि यह कौन सा अकारण उत्पन्न संत्रास है ? क्योंकि जो कुछ भी यहाँ नाट्य में है वह सब वृत्तियों में अन्तर्भाव्य है तब तो चौथी या पाँचवी वृत्ति मानना सामान्य है। किन्तु ऐसा रोष नहीं, क्योंकि रङ्गमञ्च कौन सी वृत्ति है ? मृदङ्ग, प्रणव, वंशी आदि कौन वृत्ति हो सकता है ? अतः पुरुषार्थ साधक व्यापार ही वृत्ति है, उसका तो सभी जगह वर्णन है, इसलिए वृत्ति है और वे वृत्तियाँ काव्य ( नाट्य ) की मातायें हैं ( **वृत्तयो नाट्यमातरः** ) क्योंकि कोई कार्य व्यापार शून्य नहीं होता। मदजनित मूर्च्छा आदि के वर्णना में सात्त्वती नामक मनोव्यापार हो सकता है तथा करुणादि में भी मानसिक एवं दैहिक व्यापार होने पर भी अधिकतर वाणी का व्यापार होने से भारती वृत्ति कही जाती है। वृत्त्यन्तर का निषेध तो उनके अङ्गों से पूर्ण न होने के आधार पर होता है। कायिक, वाचिक और मानस व्यापार अथवा उनके वैचित्र्य के विना अन्य कोई व्यापार नहीं हो सकता, इसे बार-बार कह चुके हैं। इसलिए करुण प्रधान काव्य में परिदेवन ( विलाप ) की बहुलता होने से भारती वृत्ति रहेगी।

भाणस्यापि हि निखिलं लक्षणमुक्तं तथागमानुगतम् ।
वीथ्या संप्रति निखिलं कथयामि यथाक्रमं विप्राः ! ॥ १११ ॥
सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्त्रयोदशभिः ।
वीथी स्यादेकाङ्का [1]तथैकहार्या द्विहार्या वा ॥ ११२ ॥

---

अथ सर्वान्ते सर्वरसमयत्वादविततस्वभावत्वाच्च संक्षेपेण शक्यव्युत्पत्तिदायिनीत्वेन प्रधानभूतत्वात्तदङ्गानां च नाटिकादिभाणान्तसमस्तरूपकोपजीव्यत्वाद् वीथीं लक्षयति ।

एकहार्येरित्याकाशपुरुभाषितैरित्यर्थः, द्विहार्येति उक्तिप्रत्युक्ति वैचित्र्येणेत्यर्थः ।

---

और जो "शृङ्गार, हास्य और करुण के योग से यहाँ कैशिकी वृत्ति होती है" ऐसा कोहलाचार्य ने कहा है, वह मुनि के मत से विरुद्ध होने के कारण उपेक्ष्य हो है, उसका आशय यह है कि जहाँ-जहाँ अनुल्वण चित्तवृत्ति है वहाँ-वहाँ कैशिकी वृत्ति है। इस प्रकार प्रहसन और भाण में भी वाणी के व्यापार की प्रमुखता होने से भारती वृत्ति ही है। मूर्च्छा आदि में व्यापार का अभाव होने से वृत्ति का अभाव ही है। समस्त नाट्य वृत्तिमय होने से समर्थनीय है, ऐसी बात भी नहीं है ।

**अनुवाद—इस प्रकार आगम ( शास्त्र ) के अनुसार भाण का निखिल लक्षण मैंने कह दिया है। हे ब्राह्मणों ! अब मैं यथाक्रम वीथी के निखिल लक्षण को कहूँगा ॥ १११ ॥**

**अभिनव**—अब सभी रूपकों के अन्त में सर्व रसमय होने से अतिविस्तृत स्वरूप न होने से संक्षेप में व्युत्पत्ति प्रदान करने में समर्थ होने से और प्रधान होने से उनके अङ्गों के नाटिका से भाण पर्यन्त समस्त रूपकों के उपजीव्य होने से वीथी का लक्षण बतलाते हैं—

**अनुवाद—समस्त रसों के लक्षणों से सम्पन्न तथा तेरह अङ्गों से युक्त और एक पात्र अथवा दो पात्रों के द्वारा अभिनेय एक अङ्क वाली वीथी होती है ॥ ११२ ॥**

**अभिनव**—एकहार्या का अर्थ है एक पात्र के द्वारा प्रयुक्त आकाशभाषित के द्वारा। द्विहार्या का अर्थ है दो पक्षों के उक्ति-प्रत्युक्ति के वैचित्र्य से ॥ ११२ ॥

---

१. ख. द्विपात्रहार्यातथैकहार्या वा ।

अधमोत्तममध्याभिर्युक्ता स्यात्प्रकृतिभिस्तिसृभिः ।
[1]उद्घात्यकावलगितावस्यन्दितनाल्यसत्प्रलापाश्च ॥ ११३ ॥
वाक्केल्यथ प्रपञ्चो मृदवाधिबले छलं त्रिगतम् ।
व्याहारो गण्डश्च त्रयोदशाङ्गान्युदाहृतान्यस्याः ॥ ११४ ॥
त्रयोदशसदाङ्गानि वीथ्यामेतानि योजयेत् ।
लक्षणं पुनरेतेषां प्रवक्ष्याम्यनुपूर्वशः ॥ ११५ ॥

---

अङ्गान्युद्दिशति—

उद्घात्यकावलगितावस्यन्दितनाल्यसत्प्रलापाश्च ।
वाक्केल्यथ प्रपञ्चो मृदवाधिबले छलं त्रिगतम् ।
व्याहारो गण्डश्च त्रयोदशाङ्गान्युदाहृतानीति ।

इत्युदाहरणमात्रमेतदिति यावत् ॥ ११३-११४ ॥

---

अब वीथी के अङ्गों का निर्देश करते हैं—

**अनुवाद**—वीथी में उत्तम, मध्यम, अधम तीन प्रकार के पात्र होते हैं। बुद्घात्मक, अवलगित, अवस्यन्दित, नाली, असत्प्रलाप, वाक्केली, प्रपञ्च, मृदव, अधिबल, छल, त्रिगत, व्याहार और गण्ड ये वीथी के तेरह अङ्ग कहे गये हैं ॥ ११३-११४ ॥

**अभिनव**—वीथी के अङ्गों का कथन करते हैं। उद्घात्यक, अवलगित, अवस्यन्दित, नाली, असत्प्रलाप, वाक्केली, प्रपञ्च, मृदव, अधिवल, छल, त्रिगत व्याहार और गण्ड ये तेरह अङ्ग गिनाये गये हैं ॥ ११३-११४ ॥

अब क्रमशः इनका लक्षण कहते हैं —

**अनुवाद**—वीथी में इन तेरह अङ्गों की सदा योजना करनी चाहिए। अब क्रमशः मैं इनके लक्षणों को कहूँगा ॥ ११५ ॥

---

१. क. ग. उद्घात्यकावलगिते ह्यवस्पन्दितमेव च ।
असत्प्रलापश्च तथा प्रपञ्चो नालिकापि वा ।
वाक्केल्यधिबलं चैव च्छलं व्याहार एव च ।
मृदवं त्रिगतं चैव ज्ञेयं गण्डमथापि वा ।
त्रयोदश सदाङ्गानि वीथ्यामेतानि योजयेत् ।
लक्षणं पुनरेतेषां प्रवक्ष्याम्यनुपूर्वशः ।

पदानि 'त्वगतार्थानि ये नराः'[2] पुनरादरात् ।
योजयन्ति[3] पदैरन्यैस्तदुद्घात्यकमुच्यते ॥ ११६ ॥

एतानि क्रमेण लक्षयति—पदानि त्वगतार्थानीति ।

नन्वेषामुक्तिवैचित्र्यरूपत्वं चेल्लक्षणालङ्कारादिभ्यः को भेदः ? इतिवृत्तोपकरणरूपत्वे तु सन्ध्यङ्गेभ्यः कथमन्यता, रसोपकरणतायां वृत्त्यङ्गेष्वन्तर्भावः । न चैतद् व्यतिरिक्तमेषां सामान्यलक्षणमस्ति । तत्र केचिदुक्तलक्षणादिविशेषरूपत्वमेवैषां प्रतिपादयन्ति, विवेचकास्तु तद्व्यतिरिक्तान्येवैतानीत्याहुः ।

तथाहि प्रश्नप्रतिवचनयोरन्याभिप्रायरूपेण योगेन यद्वैचित्र्यं तद्वीथ्यङ्गम्, अत एवोदाहृतानीत्येषां सामान्यलक्षणम् । उदाहृतानि प्रतिवचनानीत्यर्थः । तानि च सर्वाणि प्रतिवचनशून्यस्य काव्यस्याभावात् तेन विचित्राणीति लभ्यन्ते । अत एव वीथी पङ्क्तिरन्योत्तरासहिष्णुत्वात् विचित्रोक्तिप्रत्युक्तिगर्भत्वात्, लक्षणालङ्कारादीनां तु नोक्तिनियतं रूपमिति विशेषः । तत्र यदा विवक्षितमुत्तरं दातुं शक्तोऽयं स्यादिति यन्मम मनसि वर्तते तदेव वक्ति न वेत्येवमादिना निमित्तेन यदा प्रष्टैव

## १. उद्घात्यक

अब क्रम से इनका लक्षण करते हैं—

अनुवाद—जो मनुष्य अगतार्थ पदों के अर्थ प्रतीति के लिए अन्य पदों के साथ आदर पूर्वक योजना करते हैं, उसे 'उद्घात्यक' कहते हैं ॥ ११६ ॥

अभिनव—अब प्रश्न होता है कि वीथी के ये उद्घात्यकादि अङ्ग यदि उक्ति के वैचित्र्य रूप हैं तो लक्षण और अलङ्कारों से इनका भेद क्या होगा ? यदि इन्हें इतिवृत्त का उपकरण मानते हैं तो सन्ध्यङ्गों से इनकी भिन्नता कैसे रहेगी ? यदि रस का उपकरण मानते हैं तो वृत्ति के अङ्गों में इनका अन्तर्भाव हो जायेगा और इनके अतिरिक्त इनका कोई सामान्य लक्षण नहीं है । उत्तर देते हैं कि कोई आचार्य उक्त लक्षणों के उनका विशेषरूपता प्रतिपादन करते हैं, किन्तु विवेचक लोग तो इन्हें लक्षणों से व्यतिरिक्त ( अलग, भिन्न ) ही कहते हैं ।

१. क-भ. हि गतार्थानि । तु गतार्थानि ।
२. ग. यैर्नराः । ख. यन्नराः । क-न. ये नराः स्वल्पबुद्धयः ।
३. क-न. पर्यायैरव बाध्यन्ते । क-भ. पश्चात् पदैः प्रपद्यन्ते ।

प्रतिवचनं वैचित्र्यमभिसन्धाय पृच्छति, प्रतिवक्तोचितमभिधत्ते तदा तदुत्तर-मुद्घात्यकम्। प्रश्नात्मके उद्घाते साध्विति यत्, तत्राज्ञातार्थे कन्। पदान्यगतार्थानि प्रश्नरूपाण्यादरात्कृतानि पर्यायैः पदान्तरैरुत्तररूपैः नराः सुधियो योजयन्ति। तदुत्तरपदसमूहात्मकमुद्घात्यकम्। यथा पाण्डवानन्दे—

का भूषा बलिनां क्षमा, परिभवः कोऽयं सकुल्यैः कृतः,
किं दुःखं परसंश्रयो, जगति कः श्लाघ्यो य आश्रीयते।
को मृत्युर्व्यसनं, शुचं जहति के यैर्निर्जिताः शत्रवः,
कैर्विज्ञातमिदं विराटनगरे च्छन्नस्थितैः पाण्डवैः॥ ११५॥

और भी प्रश्नोत्तर से भिन्न अभिप्राय के योग में जो वैचित्र्य है वह वीथी का अङ्ग है। इसलिए 'उदाहृतानि' यह इनका सामान्य लक्षण कहा गया है। 'उदाहृतानि' पद का अर्थ है प्रतिवचन अर्थात् प्रत्युत्तर। अत एव प्रतिवचनों से शून्य काव्य में इनका अभाव होने से विचित्रता है, यह मिलता है। इसीलिए अन्य के उत्तरों को सहन न करने के कारण तथा विचित्र उक्ति-प्रत्युक्ति से मिश्रित होने के यह वीथी है, पंक्ति है। किन्तु लक्षण और अलङ्कारों का उक्ति-प्रत्युक्ति कोई रूप नियत नहीं है। इसका उससे विशेषता है। वहाँ यदि प्रतिवक्ता विवक्षित उत्तर देने में समर्थ होगा अथवा मेरे मन में जो है वह कहता है या नहीं? इत्यादि कारणों से जब प्रष्टा व्यक्ति अपने मन में विचित्र उत्तर का अनुसन्धान करके पूछता है और प्रतिवक्ता उचित उत्तर देता है तो वह उत्तर उद्घात्यक कहलाता है, प्रश्नात्मक उद्धात में जो साधु है वह 'उद्घात्यक' है। यहाँ अज्ञात अर्थ में कन् प्रत्यय है। अगतार्थ पद (अज्ञातार्थ) और आदर से किये गये प्रश्न रूप पदों के उत्तर रूप पर्याय पदान्तरों की योजना जहाँ नट करते हैं वह उत्तरभूत पद समूहात्मक वाक्य उद्घात्यक है। जैसा कि पाण्डवानन्द में—

"बलवानों का भूषण क्या है? क्षमा। परिभव क्या है? जो कुटुम्बियों द्वारा किया जाय। दुःख क्या है? दूसरे के आश्रय में रहना। संसार में श्लाघ्य कौन है? जिसका आश्रय लिया जाय। मृत्यु क्या है? व्यसन। शोकयुक्त कौन है? जिसने शत्रुओं को जीत लिया है। इस तथ्य को किसने जान लिया है? विराट नगर में छिपकर रहने वाले पाण्डवों ने।" ॥ ११६ ॥

यत्रान्यस्मिन् समावेश्य कार्यमन्यत्प्रसाध्यते[1] ।
[2]तच्चावलगितं नाम विज्ञेयं नाट्ययोक्तृभिः ॥ ११७ ॥
[3]आक्षिप्तेऽर्थे तु कस्मिश्चिच्छुभाशुभसमुत्थिते ।
[4]कौशलादुच्यतेऽन्योऽर्थस्तदवस्पन्दितं भवेत् ॥ ११८ ॥

यत्रान्यस्मिन्निति । यत्रोत्तरे दीयमाने अन्यानुसन्धानपूर्वकेऽप्यन्यत्कार्यं सिध्यति तान्यन्यकार्यावलगनादवलगितम् । यथा "अवि सुहाअदि दे लोअणाणा" मिति विदूषकेण पृष्टे (राज्ञः) "सुखयतोति किमुच्यते" इति "कृच्छ्रेणोरूयुग" मित्याद्युत्तरं वसन्तकप्रत्यायनोद्देश्येन प्रवृत्तमपि सागरिकागतमास्थाबन्धजोवितं मुख्यं शृङ्गाराख्यं कार्यं साधयतीति ॥ ११७ ॥

## २. अवलगित

**अनुवाद**—जहाँ पर किसी अन्य कार्य का समावेश कर दूसरे कार्य की सिद्धि की जाय, उसे नाट्यप्रयोक्ताओं को 'अवलगित' समझना चाहिए ॥ ११७ ॥

**अभिनव**—जहाँ पर उत्तर दिये गये पर अन्य के अनुसन्धान पूर्वक उत्तर देने में दूसरा कार्य सिद्ध हो जाय, तो वहाँ अन्य कार्य के अवलगन होने से वह 'अवलगित' वीथ्यङ्ग कहलाता है। जैसे—रत्नावली में विदूषक ने राजा से पूछे जाने पर कि 'अरे मित्र ! आपके नेत्र सुख दे रहे हैं।' (अयि मित्र ! सुखयति ते लोचने) राजा उत्तर देता है कि 'सुखयति, इति किमुच्यते ?' यह कहकर 'कृच्छ्रेणोरुयुगम्' इत्यादि उत्तर यद्यपि वसन्तक को विश्वास दिलाने के उद्देश्य से हुआ तथापि सागरिका के आशाबन्ध जीवन मुख्य कामशृङ्गार को सिद्ध कर रहा है ॥ ११७ ॥

## ३. अवस्पन्दित

**अनुवाद**—जहाँ पर बिना सोचे समझे अनजान में किसी आक्षिप्त अर्थ के विषय में कुशलता से अन्य अर्थ को कहा जाता है वह 'अवस्पन्दित' कहलाता है ॥ ११८ ॥

1. ख. प्रशस्यते ।
2. क-न. परानुरोधात्तज्ज्ञेयं नाम्नावगलित बुधैः ।
3. ख. आक्षिप्य कंचिदर्थं शुभाशुभसमुत्थितम् ।
4. ख. यत्सृजेत्बुद्धिवंशद्यात् । क. उत्सृजेदबुद्धिवैकल्यात् ।

आक्षिप्ते त्विति। शुभाशुभं दैवं तेनाबुद्धिपूर्वकं कुत्रचिदर्थे आक्षिप्तेऽपि कौशलात्तत्प्रच्छादनेच्छया यत्रोत्तरोऽन्योऽर्थं उच्यते तदवस्पन्दितं चक्षुःस्पन्दनादिवदन्तर्गतसूचनीयसंभवात्। यथा—

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः।

निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे।

अत्र दैववशादयमर्थं आयातः सत्पक्षे अमधुरा गोर्येषान्ते, तथा प्रकर्षेण साधिताः आधिसहिताः यैर्दिशः कृतः धृतराष्ट्रात्मजाः पतन्तीति। तत्रोत्तरं प्रतिहतममङ्गलम्। पुनः सूत्रधारः। ननु शरत्समयवर्णनया धार्तराष्ट्रा हंसा नभस्तलात् इति व्यपदिशामीत्यादि अवस्पन्दितत्वमेव सूचयति "न खलु न जाने किन्त्वमङ्गलत्वात् शङ्कितमेव मे हृदय" मिति ॥ ११८ ॥

अभिनव—'शुभाशुभम्' का अर्थ है दैव। जहाँ अबुद्धि पूर्वक अनजान में किसी अर्थ का आक्षेप होने पर भी कुशलता से उनके अर्थ को छिपाने की इच्छा से जहाँ दूसरा ही उत्तर कहा जाता है। उसे नेत्र के स्फुरण ( फड़कने ) से किसी अन्तर्हित ( अज्ञान ) अर्थ की सूचना मिलने के समान जहाँ अज्ञात अर्थ सूचना मिलती है, उसे 'अवस्पन्दित' या 'अवस्यन्दित' कहते हैं।

जैसे वेणीसंहार नाटक में—

"जैसे सुन्दर पक्ष ( पंख ) वाले, मधुर स्वर वाले मद से उद्धत प्रसन्नता से चपल गति वाले दिशाओं को सुशोभित करने वाले राजहंस समय के अनुसार पृथ्वी पर उतर रहे हैं, उसी प्रकार सुन्दर ( उत्तम ) पक्ष (सहायकों) वाले, मधुरभाषी, अपने पक्ष की आशाओं को सिद्ध करने वाले अथवा सम्पूर्ण दिशाओं अधिकार जमाये हुए मद से उद्धत अर्थात् उद्दण्ड स्वभाव वाले ये धृतराष्ट्र के पुत्र दुर्योधन आदि काल के वश मरकर पृथ्वी पर गिर रहे हैं।"

यहाँ दैववशात् का यह अर्थ आशा है। प्रत्यक्ष में मधुर है, वाणी जिसकी, जिन्होंने दिशाओं को अच्छी तरह साधित कर लिया है अर्थात् वहाँ के लोगों को आन्तरिक व्यथा से ग्रस्त कर दिया है, ऐसे धृतराष्ट्र के लड़के गिर रहे हैं। इस पर नट का उत्तर है कि अमङ्गल नष्ट हो गया। पुनः सूत्रधार कहता है अरे! शरत् समय ( शरदृतु ) का वर्णन होने से राजहंस नतमस्तक पृथ्वी पर उतर रहे हैं, ऐसा मैं कह रहा हूँ, इत्यादि अवस्पन्दित को ही सूचित करता हूँ। मैं इस बात को नहीं जानता हूँ, ऐसो बात नहीं, किन्तु अमङ्गल होने से मेरा हृदय शङ्कित सा हो रहा है ॥ ११८ ॥

हास्येनोपगतार्थप्रहेलिका नालिकेति विज्ञेया ।
[1]एकद्विप्रतिवचना वाक्केली स्यात्प्रयोगेऽस्मिन् ।। ११९ ।।

---

हास्येनोपगतार्थेति प्रहेलिका परवितारणकारि यदुत्तरं, अत एव हास्ययुक्ता सा नालिका प्रणालिका व्याजेत्यर्थं । प्रकर्षेण हेलिका नर्मादिक्रीडारूपं यस्या सा प्रहेलिका ।

यथा—

सुसंगता—"जस्य किदे तुमं आअदा सो एत्थ एव्व चिट्ठदि ।"

सागरिका—"सहि ! कस्स किदे ।"

सुसङ्गता—( सहासम् ) "अइ अप्पसङ्किदे ! णं चित्तफलअस्स ।"

अनया भङ्ग्या आच्छादितं च गर्भगतं चास्य वस्त्विति । एकद्विप्रतिवचनेति । एकं द्वयोः प्रतिवचनमस्याम् । द्विग्रहणमनेकोपलक्षणम् । तदमुना सर्वं प्रश्नोत्तरवर्गः स्वीकृतः । यथा—

---

### ४. नालिका तथा ५. वाक्केली

**अनुवाद**—हँसी, मजाक में जहाँ अर्थ उपगत ( प्रतीत ) हो, उस प्रहेलिका को 'नालिका' कहते हैं और जिस प्रयोग में एक, दो उत्तर-प्रत्युत्तर हो, उसे 'वाक्केली कहते हैं ।। ११९ ।।

**अभिनव**—जहाँ परिहास में अर्थ की उपलब्धि हो जाय वह 'प्रहेलिका' है । जिसका उत्तर दूसरे के वितारण करने वाला या छलने वाला होता है । इसलिए हास्य से युक्त होने से वह 'नालिका' या प्रणालिका का बहाना है । प्रकर्ष से हेलिका अर्थात् नर्मादि क्रीड़ामय रूप है जिसका वह प्रहेलिका है । जैसे रत्नावली में—

सुसंगता—सखि ! जिसके लिए तुम आई हो, वह यहीं पर है ।

सागरिका—सखि । कस्य कृते ( किसके लिए ? )

सुसङ्गता—( सहासम् ) अरे ! आत्मशङ्किते ! चित्र फलक के लिए ।

इस प्रकार व्याज से ( शैली से ) मन की बात छिपा दो जाती है और जहाँ पर दोनों के लिए एक ही उत्तर हो वह वाक्केली है । यहाँ 'द्वि' पद अनेक का उपलक्षण है । इसलिए इससे समस्त प्रश्न वर्ग और उत्तर वर्ग का ग्रहण होता है । जैसे—

---

१. ख. हास्येनावगतार्था ।
ना० शा०—९१

मूर्खजनसन्निकर्षे हितमपि यत्र प्रभाषते विद्वान् ।
[1]न च गृह्यतेऽस्य वचनं विज्ञेयोऽसत्प्रलापोऽसौ ॥ १२० ॥

---

नदीनां मेघविगमे का शोभा प्रतिभासते ।
बाह्यान्तरा विजेतव्याः के नाम कृतिनोऽरयः ॥ ११९ ॥

मूर्खजनसन्निकर्षं इति यदुत्तरं मूर्खं प्रति वस्तुतो हितमपि शब्दच्छलाद्यथा प्रियं तादृशं च मूर्खे प्रियांशेन गृह्यते न तु हितांशेन। तथाभूतभङ्गीद्वयाश्रयणं च सिद्धत्वात्करोति। एवं हि तात्कालिकः कोपोऽपि रक्षितो भवति प्रियाभिधायित्वात्। यथा व्यसनिना राजपुत्रेण किं सुखमिति पृष्टे तेनोत्तरं दीयते—

---

"मेघों के चले जाने पर नदियों की क्या शोभा प्रतिभासित होती है। कौन कृती है जिसके लिए अन्तः शत्रु और बाह्य शत्रु विजेतव्य है" अर्थात्—जिसका बाह्य शत्रु और अन्तः शत्रु अभी विजेतव्य है वह कृती कैसे है ? ॥ ११९ ॥

### ६. असत्प्रलाप

**अनुवाद**—जहाँ पर विद्वान् पुरुष मूर्खजनों के सम्पर्क में अर्थात् मूर्खजनों के लिए हित की बात करता है किन्तु मूर्ख उसके वचन को ग्रहण नहीं करता, उसे 'असत्प्रलाप' समझना चाहिए ॥ १२० ॥

**अभिनव**—यदि एक उत्तर शब्दच्छल से मूर्खजन के प्रति वस्तुतः उसके हित के लिए हो जैसे प्रिय और हितकारी वचन कहा जाय और मूर्ख प्रियांश को ग्रहण कर ले और हितांश को छोड़ दें। इस प्रकार शैली से प्राप्त दो में से सिद्ध होने के कारण एक आश्रय लेता है। इस प्रकार प्रिय मधुर कथन (वाक्य) होने से तत्कालिक कोप नहीं रहता, किन्तु यथार्थ कथन होने से कालान्तर में कोप का होना सम्भव है। जैसे किसी व्यसनी राजपुत्र के 'सुख क्या है ?' पूछे जाने पर वह उत्तर देता है—

---

१. ब. वचनं न गृह्यतेऽस्य संज्ञेयोऽसत्प्रलापस्तु ।

**यदसद्भूतं वचनं संस्तवयुक्तं द्वयोः परस्परं यत्तु ।**
**एकस्य चार्थहेतोः स हास्यजननः प्रपञ्चः स्यात् ॥ १२१ ॥**

---

सर्वथा योऽक्षविजयी सुरासेवनतत्परः ।
तस्यार्थानां सुखानां च समृद्धिः करगामिनि ॥

असतोऽसाधुभूतस्य वस्तुनः प्रलपनमस्मिन्नित्यसत्प्रलाप इति ॥ १२० ॥

यदसद्भूतमिति यथा रत्नावल्याम् "सुसङ्गते" कथमहमिहस्थो भवत्या ज्ञातः" इति राजन्युक्तवति सुसङ्गयोच्यते "ण केवलं भट्टा चित्तफलहेण, ता देवीए णिवेदइस्सं" इत्यादौ आभरणदानपर्यन्ते प्रपञ्चः । तथाहि—द्वयोः सागरिकासुसङ्गतयोः परस्परसंबन्धमाश्रित्यासद्भूतमसत्यं देव्यै निवेदयामीत्युक्तम् । संस्तवश्च तत्रास्ति "भट्टिणो पसादेण किमिदं मए' इति हास्यमपि परिहासरूपं विद्यते । एकस्य च राज्ञोऽर्थे प्रयोजने सागरिकासङ्गमे हेतुर्भवत्येवेति अन्यथाऽभिधानात्प्रपञ्चः ॥ १२१ ॥

---

"जो सर्वथा अक्षविजयी ( इन्द्रियजयी अथवा जुए में विजय प्राप्त करने वाला ) है तथा जो सुरासेवन में ( देवताओं के आराधना में अथवा सुरा मदिरा के सेवन में ) तत्पर है, उसके लिए सुख तथा धन को समृद्धि सदा करगामिनी ( हस्तगत ) है।"

इसमें असाधुभूत ( असत् ) वस्तु का प्रलपन ( कथन ) होने से 'असत्प्रलाप' है ॥ १२० ॥

### ७. प्रपञ्च

**अनुवाद—जो परिचय ( संस्तव ) से युक्त दो व्यक्तियों के परस्पर असद्भूत वाक्य किसी के अर्थ के लिए हो, उसे हास्यजनक 'प्रपञ्च' समझना चाहिए ॥ १२१ ॥**

**अभिनव**—असद्भूतमिति । जैसे रत्नावली में—'हे सुसङ्गते ! मैं यहाँ हूँ, कैसे आप ने समझ लिया' इस प्रकार राजा के कहने पर सुसङ्गता कहती है कि "मैं केवल आपको ही नहीं, अपितु इस चित्रफलक के साथ आपको समझती हूँ"। मैं जाकर महारानी से निवेदन करूँगी' इत्यादि में आभरण प्रदान पर्यन्त अंश में 'प्रपञ्च' है । तथाहि—सागरिका और सुसङ्गता दोनों के परस्पर सम्बन्ध के असद्भूत असत्य अर्थ का आश्रय लेकर देवी से निवेदन करती हूँ' इस प्रकार कहा इसमें उनको संस्तव (प्रशंसा) भी है । 'भट्टिनी के प्रसन्नता से बहुत पाया है' में हास्य भी परिहास रूप में विद्यमान है । तथा राजा के साथ सागरिका के मिलन रूप अर्थ में वह हेतु भी है । किन्तु अन्यथा अभिधान से यहाँ 'प्रपञ्च' है ॥ १२१ ॥

यत्कारणाद् गुणानां दोषीकरणं भवेद्विवादकृतम् ।
दोषगुणीकरणं वा तन्मृदवं [1]नाम विज्ञेयम् ॥ १२२ ॥

परवचनमात्मनश्चोत्तरोत्तरसमुद्भवं द्वयोर्यत्र ।
अन्योन्यार्थविशेषकमधिवलमिति तद् बुधैर्ज्ञेयम् ॥ १२३ ॥

---

यत्कारणादिति गुणानां दोषत्वं दोषाणां वा गुणत्वं यत्र क्रियते तन्मृदवम् । विवादकृतमित्यनेन लक्षणाद्विशेषमाह, इदं वृत्यन्तरं स्वभावमित्यर्थः । यथा "शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत्" ( वेणी ३ ) इत्यत्र दोषस्य गुणीकरणं, विवादाकर्णनेन सह "यदि शस्त्रमुज्झितमशस्त्रपाणय" ( वेणी-३ ) इत्यत्र कर्णवचनेन प्रतिज्ञातपरिपालनस्य गुणस्यापि दोषीकरणं विवादकृतमेव । मृदवमिति मर्दनं मृत् । परपक्षमर्दनेन स्वपक्षमवति रक्षतीति ॥ १२२ ॥

---

## ८. मृदव

**अनुवाद**—क्योंकि जहाँ किसी विवाद के कारण गुणों का दोषीकरण और दोषों का गुणीकरण हो, वहाँ 'मृदव' नामक वीथी समझना चाहिए ॥ १२२ ॥

**अभिनव**—जहाँ पर गुणों को दोष और दोषों को गुण कर दिया जाय, वहाँ 'मृदव' होता है । 'विवादकृतम्' इस पद से लक्षण को अपेक्षा विशेष को कहते हैं अर्थात् यह वृत्यन्तर या स्वभाव है । जैसे—'अब इसके शिर को कुत्ता, कौआ अथवा द्रुपद का पुत्र धृष्टद्युम्न स्पर्श करे" । यहाँ पर किसी महापुरुष के शिर का स्पर्श करना दोष है किन्तु विरागमूलक होने से यहाँ दोष गुण हो गया है । विवाद के श्रवण ( सुनने ) के साथ "यदि आपने अस्त्र छोड़ दिया, आपके हाथ में अस्त्र नहीं है" । यहाँ पर कर्ण के वचन से परिज्ञात परिपालन रूप गुण भी दोष हो गया है, क्योंकि यह विवाद के कारण हुआ है । 'मृदवम्' में मृद् का अर्थ मर्दन है और 'अव' का अर्थ है 'रक्षण' । अतः जहाँ पर पक्ष का मार्दव करके अपने पक्ष का रक्षण होता है वहाँ 'मृदव' होता है ॥ १२२ ॥

## ९. अधिवल

**अनुवाद**—जहाँ पर अपने तथा दूसरे के वचन दोनों के उत्तरोत्तर उठने वाले दोनों वाक्य परस्पर के सम्बन्ध होने से अर्थ विशेष का लाभ होता है, उसे 'अधिवल' समझना चाहिए ॥ १२३ ॥

---

१. ख. ग. नामापि ।

अन्यार्थमेव वाक्यं छलमभिसन्धानहास्यरोषकरम् ।

---

परवचनमात्मनश्चेति परस्य वचनमात्मनश्च वचनं परस्परमर्थविशेषलाभो यत्र भवतीत्युत्तरोत्तरस्याधिकाधिकस्यार्थस्य समुद्भवो यत्र तदधिबलम् । एतदुक्तं भवति—यत्रोक्तिप्रत्युक्तिक्रमे क्रियमाणे परस्परज्ञानोपजीवनबलात्स्वपक्षसुघटितादधिबलसंबन्धादधिबलम् । यथा नागानन्दे "रागस्यास्पदमित्यवैमो"त्यादित आरभ्य विदूषकेण सहोक्तिक्रमेण स्वपक्षो व्रढिमानमानीतो यावदाह "ननु शरीरतः प्रभृति-सर्वमेव मया परार्थं प्रतिपाल्यते' ( अ–१ ) इति ॥ १२३ ॥

अन्यार्थमेव वाक्यमिति यद्वाक्यं प्रयोजनान्तरमुद्दिश्य वचनमुच्यमानं कस्य-चिद्वचनमन्यस्य हास्यमपरस्य रोषं जनयति तच्छलम् । यथा—

कस्स व ण होई रोसो दट्ठूण पिआए सव्वणं अहरम् ।
सभमरपदुमग्घाइणि वारिअवामे सहसु एह्लिम् ॥

---

**अभिनव**—पर का वचन और अपना वचन । इन दोनों का परस्पर में सम्बन्ध होने से, जहाँ अर्थ विशेष का लाभ होता है। अतः जहाँ उत्तरोत्तर अधिक अथ का समुद्भव हो तो वहाँ 'अधिवल' होता है। यह कहा गया है कि जहाँ उत्तर और प्रत्युतर के क्रम में किये गये परस्पर एक दूसरे को जानकारी के बल से और स्वपक्ष से सुघटित किये गये अधिक बल के सम्बन्ध से 'अधिवल' होता है। जैसे—नागानन्द नाटक में "राग के स्थान को मैं समझता हूँ" यहाँ से विदूषक के साथ उक्तिक्रम से अर्थात् उत्तर-प्रत्युत्तर में अपने पक्ष को दृढ़ता से रखने पर्यन्त जो कहा है—"मैं तो अपने शरीर से लेकर सब कुछ परोपकार के लिए सुरक्षित रखता हूँ।" इत्यादि ॥ १२३ ॥

## १०. छल

**अनुवाद—किसी अन्य प्रयोजन से अभिसन्धि से दूसरे के लिए प्रयुक्त हास्य और रोषकारक वाक्य को 'छल' कहते हैं।**

**अभिनव**—जहाँ एक वाक्य को किसी अन्य प्रयोजन के उद्देश्य से कहा जाय, किन्तु उससे किसी को हास्य होता है और दूसरे को रोष उत्पन्न होता है, उसे 'छल' कहते हैं। जैसे—

"अपनो प्रिया के व्रणयुक्त अधर को देखकर किसे रोष नहीं होता, अतः रोकने पर भी विपरीत काम करने वाली भ्रमरयुक्त कमल के सूँघने वाली वामे! अब उसके परिणाम को भोगो।"

प्रत्यक्षवृत्तिरुक्तो व्याहारो हास्यलेशार्थः ॥ १२४ ॥

---

एतद्वचनं सखीसंबन्धि भर्तृप्रत्यायनं प्रयोजनमुद्दिश्य प्रयुक्तं तस्य पत्न्या अपि संबन्धिनां छलं, विदग्धजनस्य हास्यं, सपत्न्या रोषं जनयति।

प्रत्यक्षवृत्तिरिति प्रत्यक्षशब्देन भावी प्रत्यक्ष उच्यते। तदयमर्थः—भाविनि प्रत्यक्षेऽर्थे दैववशाद् वृत्तिर्यस्य स व्याहारः विविधोऽर्थोऽभिनीयते येन। यथा—

उद्दामोत्कलिकां विपाण्डुररुचिं प्रारब्धजृम्भां क्षणाद्
आयासं श्वसनोद्गमैरविरतैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां गौरीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युतिमुखं देव्या करिष्याम्यहम् ॥ ( रत्नावली-२ )

---

## ११. व्याहार

**अनुवाद—हास्य के लेश से युक्त अर्थ जहाँ भावी प्रत्यक्ष अर्थ में कहा जाय, उसे 'व्याहार' कहते हैं ॥ १२४ ॥**

यह कथन सखी के सम्बन्ध में पति को विश्वास दिलाने के उद्देश्य से कहा गया है, किन्तु यह वचन पत्नी के सम्बन्धियों के लिए 'छल' है, अर्थात् सम्बन्धियों के वञ्चना के लिए है, विदग्धजनों के हास्य के लिए तथा सौतों के रोष के लिए है अर्थात् सौतों को रोष करता है।

**प्रत्यक्षवृत्तिरिति**—यहाँ प्रत्यक्ष शब्द भावी प्रत्यक्ष को कहता है। अतः उसका यह अर्थ है। जहाँ भावी प्रत्यक्ष अर्थ में देववशात् जिसकी वृत्ति हो वह 'व्यापार' है। जिससे विविध अर्थ अभिनेय हो, वह 'व्याहार' है। जैसे रत्नावली में—

उद्दामोत्कलिकां विपाण्डुररुचिं प्रारब्धजृम्भां क्षणाद्
आयासं श्वसनोद्गमैरविरतैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां गौरीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युतिमुखं देव्याः करिष्याम्यहम् ॥ ( रत्नावली—२ )

क्षण भर में कलियों से लदी, पाण्डुर वर्ण, विकसित होने वाली, निरन्तर बहने वाले वायु के झकोरों से अपना संचारजन्य खेद को बढ़ाती हुई, मदन नामक वृक्ष से युक्त उद्यानलता को अन्य नारी के समान देखते हुए मैं आज निश्चय ही देवी के मुख को क्रोध से कुछ-कुछ लाल कर दूंगा।"

यहाँ राजा का वासवदत्ता के प्रति भावी विषयक अर्थ वाला यह कथन व्याहार है।

[1]श्रुतिसारूप्याद्यस्मिन् बहवोऽर्था युक्तिभिर्नियुज्यन्ते ।
यद्धास्यमहास्यं वा [2]तन्त्रिगतं नाम विज्ञेयम् ॥ १२५ ॥

श्रुतिसारूप्यादिति शब्दसारूप्याद् बहव इति प्रश्नप्रतिवचनस्य स्वभावा यत्र नियुज्यन्ते युक्तिभिरिति काक्वादीनां तथैवोपपत्तिभिः । त्रिशब्दोऽनेकोपलक्षणम्, अनेकमर्थं गतमिति त्रिगतं वाक्ये मुख्यमुत्तरमनेकप्रश्नासाधारणम् । इह तु य एव प्रश्नस्तदेव प्रतिवचनमिति विशेषः । यथा—

सर्वक्षितिभृतां नाथ ! दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् त्वया विरहिता मया ॥ (विक्रमो)

अत्रैतदेवोत्तरं साकांक्षाकाकुप्रयोगेऽपि प्रतिबिम्बे वामदक्षिणवैपरीत्यवन्निराकाक्ष-काकुः संवृत्ता यत एतद्धास्यम् । एवमहास्य उदाहार्यम् ॥ १२५ ॥

## १२. त्रिगत

**अनुवाद**—श्रुति सारूप्य अर्थात् शब्दों की समानता के कारण युक्ति से जहाँ अनेक अर्थों को योजना हो उसे हास्य रूप अथवा अहास्य रूप 'त्रिगत' समझना चाहिए ॥ १२५ ॥

**अभिनव**—शब्द सारूप्य के कारण बहुत से प्रश्न एवं उत्तर रूप अर्थ जहाँ काकु आदि की युक्तियों से नियोजित होते हैं वह 'त्रिगत' है। यहाँ 'त्रि' शब्द अनेक का उपलक्षण है। अनेक अर्थों में जो गत है अतः त्रिगत है। वाक्य में मुख्य उत्तर है जो अनेक प्रश्नों के लिए साधारण है। यहां तो जो प्रश्न है वही प्रतिवचन है, यही विशेषण है। जैसे विक्रमोर्वशीय में—

"हे क्षितिभृन्नाथ ! ( पृथ्वीपति ) इस रमणीय वन में मुझसे वियुक्त सर्वाङ्ग सुन्दरी रमणी को तुमने देखा है ?"

यहाँ जो प्रश्न है वही त्वया, मया और वैपरीत्य कर देने पर वही उत्तर होता है। यहाँ साकाङ्क्ष काकु के प्रयोग में भी यही उत्तर है। बिम्ब की अपेक्षा प्रतिबिम्ब में दायें-बायें का वैपरीत्य है उसी प्रकार यहाँ निराकाङ्क्ष काकु हो गई, क्योंकि यहाँ हास्य भी है। इसी प्रकार अहास्य का भी उदाहरण समझना चाहिए ॥ १२५ ॥

१. क. प्रत्यक्षवृत्तिरुक्तो ।
२. ख. ग. श्रुतिसारूप्यार्थात्मनि । ख. ग. त्रिगतं नामापि विज्ञेयम् ।

